अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिप ॥ २१॥
धनात् कुलं प्रभवति धनाद्धर्मः प्रवर्तते ।
नाधनस्यास्त्ययं लोको न परः पुरुषोत्तम ॥ २२॥
नाधनो धर्मकृत्यानि यथावदनुतिष्ठति ।
धनाद्धि धर्मो निस्रौति शैलाद्गिरिनदी यथा ॥ २३॥
यः कृशाश्वः कृशगवः कृशभृत्यः कृशातिथिः ।
स वै राजन् कृशो नाम न शरीरकृशः कृशः ॥ २४॥
अवेक्षस्व यथान्यायं पश्य देवासुरं यथा ।
राजन् किमन्यज्ज्ञातीनां वधा[1]द्दृध्यन्ति देवताः ॥ २५॥
न चेद्धर्तव्यमन्यस्य कथं तद्वसु धारयेत् ।
एतावानेव वेदेषु निश्चयः कविभिः कृतः ॥ २६॥
अध्येतव्या त्रयी विद्या भवितव्यं विपश्चिता ।
सर्वथा धनमाहृत्य यष्टव्यं चापि यत्नतः ॥ २७॥
द्रोहाद्देवैरवाप्तानि दिवि स्थानानि सर्वशः ।
इति देवा व्यवसिता वेदवादाश्च शाश्वताः ॥ २८॥
अधीयन्ते तपस्यन्ते यजन्ते याजयन्ति च ।
कृत्स्नं तदेव श्रेयो हि यदप्याददतेऽन्यतः ॥ २९॥
न पश्यामोऽनपहृतं धनं किञ्चित् कचिद्वयम् ॥ ३०
एवमेव हि राजानो यजन्ति पृथिवीमिमाम् ।

1. क-ब—हृष्यन्ति ख—हृष्यन्ति

जित्वा ममत्वं ब्रुवते पुत्रा इव पितुर्धने ॥　　३१

राजर्षयो जितस्वर्गा धर्मो ह्येषां [1]निरुच्यते ॥　　३१॥

यथैव पूर्णादुदधेस् स्यन्दन्त्यापो दिशो दश ।
एवं राजकुलाद्वित्तं पृथिवीं प्रतितिष्ठति ॥　　३२॥

आसीदियं दिलीपस्य नृगस्य नहुषस्य च ।
अम्बरीषस्य मान्धातुः पृथिवी सा त्वयि स्थिता ॥　　३३॥

स त्वां द्रव्यमयो यज्ञस् सम्प्राप्तस्सर्वदक्षिणः ।
[2]स चेन्न यजसे राजन् प्राप्तस्त्वं राज्यकिल्बिषम् ॥　　३४॥

येषां राजाऽश्वमेधेन यजते दक्षिणावता ।
उपेत्य तस्यावभृथं पूतास्सर्वे भवन्ति ते ॥　　३५॥

विश्वरूपो महादेवस् सर्वमेधे महामखे ।
जुहाव सर्वभूतानि तथैवात्मानमात्मना ॥　　३६॥

शाश्वतोऽयं भूतिपथो नास्यान्तमनुशुश्रुम ।
महाजनपथं गन्ता मा राजन् कापथं गमः ॥　　३७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये ३७॥ श्लोकाः]

---

1. क—न रुध्यते　　ख-ग—निरुध्यते.　　2. अ—तं

## ॥ नवमोऽध्यायः ॥

युधिष्ठिरस्य निर्वेदवचनम् ॥

युधिष्ठिरः—

मुहूर्तं तावदेकाग्रमनश्श्रोत्रान्तरात्मना ।
धारयिष्यामि ते श्रुत्वा रोचते वचनं मम ॥ १

सार्थगम्यमहं मार्गं न जातु त्वत्कृते पुनः ।
गच्छेयं तं गमिष्यामि हित्वा ग्राम्यसुखान्युत ॥ २

क्षेम्यश्चैकाकिना गम्यः पन्थाः कोऽस्तीति पृच्छ माम् ।
अथवा नेच्छसि प्रष्टुम् अपृच्छन्नपि मे शृणु ॥ ३

हित्वा ग्राम्यसुखाचारं तप्यमानो महत् तपः ।
अरण्ये फलमूलाशी चरिष्यामि मृगैस्सह ॥ ४

जुह्वानोऽग्निं यथाकालम् उभौ कालावुपस्पृशन् ।
कृशः परिमिताहारश् चर्मचीरजटाधरः ॥ ५

शीतवातातपसहः क्षुत्पिपासाश्रमक्षमः ।
तपसा विधिदृष्टेन शरीरमुपशोषयन् ॥ ६

मनःकर्णसुखा नित्यं शृण्वन्नुच्चावचा गिरः ।
मुदितानामरण्येषु वदतां मृगपक्षिणाम् ॥ ७

आजिघ्रन् पेशलान् गन्धान् फुल्लानां वृक्षवीरुधाम् ।
नानारूपान् वने पश्यन् रमणीयान् वनौकसः ॥ ८

वानप्रस्थजनस्यापि दर्शनं कुलवासिनः ।
नाप्रियाण्याचरन् किञ्चित् किं पुनर्ग्रामवासिनाम् ॥ ९

एकान्तशीली विमृशन् पक्वापक्वेन वर्तयन् ।
पितॄंश्च देवान् वन्येन वाग्भिरद्भिश्च तर्पयन् ॥ १०

एवमारण्यशास्त्राणाम् उग्रमुग्रतरं विधिम् ।
सेवमानः प्रतीक्षेऽहं देहस्यास्य समापनम् ॥ ११

अथ [1]वाऽकालिके चाहम् एकैकस्मिन् जनक्षये ।
चरन् भैक्षं मुनिर्मुण्डः क्षपयिष्ये कलेबरम् ॥ १२

पांसुभिस्समभिध्वस्तश् शून्यागारप्रतिश्रयः ।
वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ॥ १३

न शोचन्न प्रहृष्यंश्च तुल्यनिन्दात्मसंस्तुतिः ।
निराशीर्निर्ममो भूत्वा निर्द्वन्द्वो निष्परिग्रहः ॥ १४

आत्मारामः [2]प्रसन्नात्मा जडान्धबधिराकृतिः ।
अकुर्वाणः परैः किञ्चित् संविदं जातु केनचित् ॥ १५

जङ्गमाजङ्गमान् सर्वान् [3]अविहिंसंश्चतुर्विधान् ।

---

1. मातृकासु ‘वैकालिके वाहम्’ इति वर्तते; उदीच्यपाठस्तु ‘वैकोऽहमेकाहम्’ इति

2. ख-ग—प्रशान्तात्मा 3. क—अहिंसांश्च

प्रजास्सर्वास्ववस्थासु पतिः प्राणभृतां पतिः ॥ १६
न चाप्यवहसन् कञ्चिन्न कुर्वन् भ्रुकुटीः क्वचित् ।
प्रसन्नवदनो नित्यं सर्वेन्द्रियसुसंयतः ॥ १७
अपृच्छन् कस्यचिन्मार्गं व्रजन् नान्येन केनचित् ।
न देशं न दिशं काञ्चिद् गन्तुमिच्छन् विशेषतः ॥ १८
गमने निरपेक्षश्च पश्चादनवलोकयन् ।
ऋजुः प्रणिहितो गच्छन् स्त्रीसंस्थापरिवर्जकः ॥ १९
स्वभावास्तु प्रयान्त्वग्रे भवन्त्वनशनान्यपि ।
द्वन्द्वानि च विरुद्धानि तानि सर्वाण्यचिन्तयन् ॥ २०
अल्पं वा स्वादु वा भोज्यं पूर्वालाभेन जातुचित् ।
अन्यानपि चरँल्लाभान् अलाभे सप्त पूरयन् ॥ २१
विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने ।
अतीतपात्रसञ्चारे काले विगतभिक्षुके ॥ २२
एककालं चरन् भैक्षं गृहाणि द्वे च पञ्च वा ।
स्नेहपाशान् विमुच्याहं चरिष्यामि महीमिमाम् ॥ २३
न जिजीविषुवत् किञ्चिन्न मुमूर्षुवदाचरन् ।
जीवितं मरणं चोभे नाभिनन्दन्न च द्विषन् ॥ २४
वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः ।
नाकल्याणं न कल्याणं ध्यायन्नुभयतस्तयोः ॥ २५
याः काश्चिज्जीवता शक्यास् सर्वास्त्यक्तुं क्षमाः क्रियाः ।

तास्सर्वास्समभित्यज्य निमेषादिष्ववस्थितः ॥ २६
तेषु नित्यमसक्तश्च त्यक्तसर्वेन्द्रियक्रियः ।
सुपरित्यक्तसङ्कल्पस् सुनिर्णिक्तात्मकिल्बिषः ॥ २७
विमुक्तस्सर्वसङ्गेभ्यो व्यतीतस्सर्ववागुराः ।
न वशे कस्यचित्तिष्ठन् सधर्मा मातरिश्वनः ॥ २८
वीतरागश्चरन्नेवं तुष्टिं प्राप्स्यामि मानसीम् ॥ २८॥
तृष्णया हि महत् पापम् अज्ञानादस्मि कारितः ॥ २९
[1]कुशलाकुशलान्येवं कृत्वा कर्माणि मानवः ।
कार्यकारणसंश्लिष्टं स्वजनं नाभिनन्दति ॥ ३०
आयुषोऽन्ते प्रहायेदं क्षीणप्रायं कलेबरम् ।
प्रतिगृह्णाति तत् पापं कर्तुः कर्मफलं तु यत् ॥ ३१
एवं संसारचक्रेऽस्मिन् व्याविद्धे रथचक्रवत् ।
समेति भूतग्रामोऽयं भूतग्रामेण कार्यवत् ॥ ३२
जन्ममृत्युजराव्याधिवेदनाभिपरिप्लुतम् ।
असारमिममस्वन्तं संसारं त्यजतस्सुखम् ॥ ३३
दिवः पतत्सु देवेषु स्थानेभ्यश्च महर्षिषु ।
को हि नाम भवेनार्थी भवेत् कारणतत्त्ववित् ॥ ३४
कृत्वा हि विविधं कर्म तत्तद्विषयलक्षणम् ।

---

1. अ—अर्धचतुष्टयं नास्ति

पार्थिवो नृपतिस्स्वल्पैः कारणैरपि बाध्यते ॥ ३५

तस्मात् प्रज्ञामृतमिदं चिरान्मां पर्युपस्थितम् ।
यत् प्राप्य प्रार्थयेत् स्थानम् अव्ययं शाश्वतं तथा ॥ ३६

एतया सन्ततं वृत्त्या चरन्नेवम्प्रकारया ।
देहं संस्थापयिष्यामि निर्भयं मार्गमास्थितः ॥ ३७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि नवमोऽध्यायः ॥ ९ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि नवमोऽध्यायः ॥ ९ ॥
[अस्मिन्नध्याये ३७ श्लोकाः]

---

## ॥ दशमोऽध्यायः ॥

---

युधिष्ठिरं प्रति भीमसेनवचनम् ॥

---

भीमसेनः—

श्रोत्रियस्येव ते राजन् मन्दकस्याविपश्चितः ।
अनुवाकहता बुद्धिर् नैषा तत्त्वार्थदर्शिनी ॥ १

आलस्ये कृतबुद्धेस्ते राजधर्मानसूयतः ।
विनाशे धार्तराष्ट्राणां किं फलं भरतर्षभ ॥ २

भूतानुकम्पा कारुण्यम् आनृशंस्यं न विद्यते ।
क्षात्रमाचरता मार्गम् अपि बन्धौ त्वनन्तरे ॥ ३

यदीमां भवतो बुद्धिं विद्याम वयमीदृशीम् ।
अस्त्रं नैवागमिष्यामो वधिष्यामः कथञ्चन ॥ ४

भैक्षमेवाचरिष्यामश् शरीरस्याविमोक्षणात् ।
न चेदं दारुणं युद्धम् भविष्यति महीक्षिताम् ॥ ५

प्राणस्यान्नमिदं सर्वम् इति वै कवयो विदुः ।
स्थावरं जङ्गमं चैव सर्वं प्राणस्य भोजनम् ॥ ६

आददानस्य चेद्राज्यं ये केचित् परिपन्थिनः ।
हन्तव्यास्ते कृतप्रज्ञाः क्षत्रधर्मविदो विदुः ॥ ७

ते सदोषा हता स्माभिर् अन्नस्य परिपन्थिनः ।
तान् हत्वा भुङ्क्ष्व धर्मेण युधिष्ठिर महीमिमाम् ॥ ८

यथा हि पुरुषः खात्वा कूपमप्राप्य चोदकम् ।
पङ्कदिग्धो निवर्तेत कर्मेदं नस्तथोपमम् ॥ ९

यथाऽऽरुह्य महावृक्षम् अपहृत्य ततो मधु ।
अप्राश्य मरणं गच्छेत् कर्मेदं नस्तथोपमम् ॥ १०

यथाऽन्नं क्षुधितो लब्ध्वा न भुञ्जीत यदृच्छया ।
कामी च कामिनीं लब्ध्वा कर्मेदं नस्तथोपमम् ॥ ११

यथा महान्तमध्वानम् आशया पुरुषो व्रजेत् ।
स निराशो निवर्तेत कर्मेदं नस्तथोपमम् ॥ १२

यथा शत्रून् घातयित्वा पुरुषः कुरुसत्तम ।

आत्मानं घातयेत् पश्चात् कर्मेदं नस्तथोपमम् ॥ १३

वयमेवात्र गर्ह्या हि यद्वयं मूढचेतसः ।
त्वां राजन्ननुगच्छामो ज्येष्ठोऽयमिति भारत ॥ १४

वयं हि बाहुबलिनः कृतविद्या मनस्विनः ।
क्लीबस्य वाक्ये तिष्ठामो यथैवाशक्तयस्तथा ॥ १५

दुर्गतीनगतीनस्मान् नष्टार्थानर्थसिद्धये ।
कथं वै नानुपश्येयुर् जनाः पश्यन्ति यादृशम् ॥ १६

आपत्काले हि संन्यासः कर्तव्य इति शिष्यते ।
जरयाऽभिपरीतेन शत्रुभिर्व्यंसितेन च ॥ १७

तस्मादिह कृतप्रज्ञास् त्यागं न परिचक्षते ।
धर्मव्यतिक्रमं चेमं मन्यन्ते सूक्ष्मदर्शिनः ॥ १८

कथं तस्मात् समुत्पन्नास् ततो जातास्तदाश्रयाः ।
न चेमं दूषयेयुस्ते श्रद्धावानत्र गर्ह्यते ॥ १९

क्रियाविहीनैरधनैर् नास्तिकैस्सम्प्रवर्तितम् ।
वेदाभासमिवाज्ञानं सत्याभासमिवानृतम् ॥ २०

न शक्यं मौढ्यमास्थाय बिभ्रताऽऽत्मानमात्मना ।
धर्मच्छद्म समास्थाय आसितुं न तु जीवितुम् ॥ २१

[1]शक्यं पुनररण्येषु सुखमेकेन जीवितुम् ।

---

1. क-ख-ब—नास्तीदमर्धम्

अविभ्रता पुत्रपौत्रान् देवर्षीनतिथीन् पितॄन् ॥ २२

नेमे मृगास्स्वर्गजितो न वराहा न पक्षिणः ।
अथैतेन प्रकारेण पुण्यानाहुर्न ताञ्जनाः ॥ २३

यदि संन्यासतस्सिद्धिं राजन् कश्चिदवाप्नुयात् ।
पर्वताश्च द्रुमाश्चैव क्षिप्रं सिद्धिमवाप्नुयुः ॥ २४

एते हि नित्यसंन्यासा दृश्यन्ते निरुपद्रवाः ।
अपरिग्रहवन्तश्च सततं चाप्रभाषिणः ॥ २५

अथ चेदात्मभोग्येषु नान्येषां सिद्धिमश्नुते ।
तस्मात् कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः ॥ २६

[1]औदकास्सृष्टयश्चैव जन्तवस्सिद्धिमाप्नुयुः ।
एषामात्मैव भर्तव्यो नान्यः कश्चन विद्यते ॥ २७

अवेक्षस्व यथा स्वैस्स्वैः कर्मभिर्व्यापृतं जगत् ।
तस्मात् कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि दशमोऽध्यायः ॥ १० ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि दशमोऽध्यायः ॥ १० ॥
[अस्मिन्नध्याये २८ श्लोकाः]

---

1. घ—औदनाः

## ॥ एकादशोऽध्यायः ॥

अर्जुनेन युधिष्ठिरं प्रति गार्हस्थ्यस्य श्रैष्ठ्योपपादनम् ॥

अर्जुनः—

अत्रैवोदाहरन्तीमम् इतिहासं पुरातनम् ।
तापसैस्सह संवादं शक्रस्य भरतर्षभ ॥ १

केचिद्गृहान् परित्यज्य वनमभ्यागमन् द्विजाः ।
अजातश्मश्रवो मन्दाः कुले जाताः प्रवव्रजुः ॥ २

धर्मोऽयमिति मन्वानास् समृद्धा धर्मचारिणः ।
त्यक्त्वा गृहान् पितॄंश्चैव तानिन्द्रोऽन्वकृपायत ॥ ३
स तान् बभाषे भगवान् पक्षी भूत्वा हिरण्मयः ॥ ३॥

शकुनिः—

सुदुष्करं मनुष्यैस्तद् यत् कृतं विघसाशिभिः ॥ ४

पुण्यं तद् बत कर्मैषां प्रशस्तं चैव जीवितम् ।
संसिद्धास्ते गतिं मुख्यां प्राप्ताः कर्मपरायणाः ॥ ५

ऋषयः—

अहो बतायं शकुनिर् विघसाशान् प्रशंसति ।
अस्मान्नूनमयं शास्ति वयं हि विघसाशिनः ॥ ६

---

1. ख—शक्यं पुनररण्येषु सुखमेतेन जीवितुम् ।　　[अधिकः पाठः]

शकुनिः—

नाहं युष्मान् प्रशंसामि पङ्कदिग्धान् रजस्वलान् ।
उच्छिष्टभोजिनो मन्दान् अन्ये तु विघसाशिनः ॥ ७

ऋषयः—

इदं श्रेयः परमिति वयमेवममंस्महि ।
शकुने ब्रूहि यच्छ्रेयो वयं ते श्रद्दधाम ते ॥ ८

शकुनिः—

यदि मां नाभिशंसध्वं विभज्यात्मानमात्मना ।
ततोऽहं वः प्रवक्ष्यामि याथातथ्यं हितं वचः ॥ ९

तापसाः—

शृणुमस्ते वचस्तावत् पन्थानो विदितास्तव ।
[1]नियोगे चैव धर्मात्मन् स्थातुमिच्छाम शाधि नः ॥ १०

शकुनिः—

चतुष्पदां गौः प्रवरा लोहानां काञ्चनं वरम् ।
शब्दानां [2]प्रवरो मन्त्रो ब्राह्मणो द्विपदां वरः ॥ ११

मन्त्रोऽयं जातकर्मादिर् ब्राह्मणस्य विधीयते ।
जीवतोऽपि यथाकालं श्मशाननिधनान्तकः ॥ १२
कर्माणि वैदिकान्यस्य स्वर्गः पन्था ह्यनुत्तमः ॥ १२॥
अथ सर्वाणि कर्माणि मन्त्रसिद्धानि चक्षते ।

---

1. क-ख—नियोगाश्चैव　　2. क-ख—प्रणवं

आम्नायदृढवादीनि तथा सिद्धिरिहेष्यते ॥ १३॥

मासार्धमासा ऋतव आदित्यश्चन्द्रतारकाः ।
प्रसन्ते कर्म भूतानि तदिदं कर्मशंसिनाम् ॥ १४॥

सिद्धिक्षेत्रमिदं पुण्यम् अयमेवाश्रमो महान् ॥ १५

अथ ये कर्म निन्दन्तो मनुष्याः कापथं गताः ।
मूढानामर्थहीनानां तेषामेनस्तु विद्यते ॥ १६

देववंशान् ब्रह्मवंशान् पितृवंशांश्च शाश्वतान् ।
सन्त्यज्य मूढा वर्तन्ते ततो यान्त्यशुचीन् पथः ॥ १७

एतद्वोऽस्तु तपोयुक्तं तदानीमृषिचोदितम् ।
तस्मात् तदध्यावसतस् तपस्वित्वमिहोच्यते ॥ १८

देववंशान् ब्रह्मवंशान् पितृवंशांश्च शाश्वतान् ।
संविभज्य गुरोश्चर्या तद्वै दुष्करमुच्यते ॥ १९

देवा वै दुष्करं कृत्वा विभूतिं परमां गताः ।
तस्माद्गार्हस्थ्यमुद्वोढुं दुष्करं प्रब्रवीमि वः ॥ २०

तत्र श्रेष्ठाः प्रजास्सर्वा धृतिमूला न संशयः ।
कुटुम्बविधिनाऽनेन यस्मिन् सर्वं प्रतिष्ठितम् ॥ २१

एतद्विदुस्तपोयुक्ता द्वन्द्वातीता विमत्सराः ।
एतस्माद्वनमग्र्यं तु लोकेषु तप उच्यते ॥ २२

दुराधर्षं परं चैवं गच्छन्ति विघसाशिनः ।

सायंप्रातर्विभज्यान्नं स्वकुटुम्बे यथाविधि ॥ २३

दत्त्वाऽतिथिभ्यो देवेभ्यः पितृभ्यस्स्वजनस्य च ।
अवशिष्टानि येऽश्नन्ति तानाहुर्विघसाशिनः ॥ २४

तस्मात् स्वधर्ममास्थाय सुव्रतास्सत्यवादिनः ।
लोकस्य गुरवो भूत्वा ते भवन्त्यनुपस्कृताः ॥ २५

त्रिदिवं प्राप्य शक्रस्य स्वर्गलोके विमत्सराः ।
वसन्ति शाश्वतान् वर्षान् जना दुष्करकारिणः ॥ २६

अर्जुनः—

ततस्ते तद्वचश्श्रुत्वा तस्य धर्मार्थसंहितम् ।
उत्सृज्य नास्तिकमतिं गार्हस्थ्यं धर्ममाश्रिताः ॥ २७

तस्मात् त्वमपि दुर्धर्ष धैर्यमालम्ब्य शाश्वतम् ।
प्रशाधि पृथिवीं कृत्स्नां हतामित्रां नृपोत्तम ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकादशोऽध्यायः ॥ ११ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि एकादशोऽध्यायः ॥ ११ ॥
[अस्मिन्नध्याये २८ श्लोकाः]

## ॥ द्वादशोऽध्यायः ॥



युधिष्ठिरं प्रति नकुलवाक्यम् ॥

---

वैशम्पायनः—

अर्जुनस्य वचश्श्रुत्वा नकुलो वाक्यमब्रवीत् ।
राजानमिति सम्प्रेक्ष्य सर्वधर्मभृतां वरम् ॥ १

अनुरुध्य महाप्राज्ञो भ्रातुश्चित्तमरिन्दमः ।
व्यूढोरस्को महाबाहुस् ताम्रास्यो मितभाषिता ॥ २

नकुलः—

विशालयूपा देवानां सर्वेषामग्नयश्चिताः ।
तस्माद्विद्धि महाराज देवान् कर्मावधिस्थितान् ॥ ३

अनास्तिका नास्तिकानां प्राणदाः पितरश्च ये ।
येऽपि कर्माणि कुर्वन्ति विधिं पश्यस्व भारत ॥ ४

वेदवादापविद्धास्तु तान् विद्धि भृशनास्तिकान् ॥ ४॥

न हि वेदोक्तमुत्सृज्य विप्रस्सर्वेषु कर्मसु ।
देवयानेन नाकस्य पृष्ठमाप्नोति भारत ॥ ५॥

अत्याश्रमानयं सर्वान् इत्याहुर्वेदनिश्चिताः ।
ब्राह्मणाश्श्रुतिसम्पन्नास् तान् निबोध यथातथम् ॥ ६॥

वित्तानि धर्मलब्धानि क्रतुमुख्येष्ववासृजन् ॥

कृतात्मा स महाराज स वै त्यागी स्मृतो नरः ॥ ७॥

अनवेक्ष्य सुखादानं तथैवोर्ध्वं प्रतिष्ठितः ।
आत्मत्यागी महाराज स त्यागी तापसः प्रभो ॥ ८॥

अनिकेतः परिपतन् वृक्षमूलशयो मुनिः ।
अयाचकस्सदा योगी स त्यागी पार्थ भिक्षुकः ॥ ९॥

क्रोधहर्षावनादृत्य पैशुन्यं च विशां पते ।
विप्रो वेदानधीते यस् स त्यागी गुरुपूजकः ॥ १०॥

आश्रमांस्तुलया सर्वान् धृतानाहुर्मनीषिणः ।
एकतस्ते त्रयो राजन् गृहस्थाश्रम एकतः ॥ ११॥

समीक्षते तु योऽर्थं वै कामं धर्मं च भारत ।
अयं पन्था महर्षीणाम् इयं लोकविदां गतिः ॥ १२॥

इति यः कुरुते भावं स त्यागी भरतर्षभ ॥ १३
नरः परित्यज्य गृहान् वनमेति विमूढवत् ॥ १३॥

यदा कामान् समीक्षेत धर्मवैतंसिकोऽनृजुः ।
अथैनं मृत्युपाशेन कण्ठे बध्नाति मृत्युराट् ॥ १४॥

अभिमानकृतं कर्म नैतत् फलवदुच्यते ।
त्यागयुक्तं महाराज सर्वमेव महाफलम् ॥ १५॥

शमो दमस्तपो दानं सत्यं शौचमथार्जवम् ।
यज्ञो धृतिश्च धर्मश्च नित्यमार्षोऽतिविस्तृतः ॥ १६॥

पितृदेवातिथिकृते समारम्भः प्रशस्यते ॥ १७

अत्रैव हि महाराज त्रिवर्गः केवलं फलम् ॥ १७॥

एतस्मिन् वर्तमानस्य विधौ विप्रैर्निषेविते ।
त्यागिनः प्रसृतस्येह नोच्छित्तिर्विद्यते क्वचित् ॥ १८॥

असृजद्धि प्रजा राजन् प्रजापतिरकल्मषः ।
मां यक्ष्यन्तीति शान्तात्मा यज्ञैर्विविधदक्षिणैः ॥ १९॥

वीरुधश्चैव वृक्षांश्च यज्ञार्थे च तथौषधीः ।
पशूंश्चैव तथा मेध्यान् यज्ञार्थानि हवींषि च ॥ २०॥

गृहस्थाश्रमिणस्तच्च यज्ञकर्माविरोधकम् ।
तस्माद्गार्हस्थ्यमेवेह दुष्करं दुर्भरं तथा ॥ २१॥

तत् सम्प्राप्य गृहस्था ये पशुधान्यधनान्विताः ।
न यजन्ते महाराज शाश्वतं तेषु किल्बिषम् ॥ २२॥

स्वाध्याययज्ञास्त्वृषयो ज्ञानयज्ञास्तथा परे ।
अथापरे महायज्ञान् मनसैव वितन्वते ॥ २३॥

इदमन्यन्महाराज विद्वद्भिः कथितं मम ॥ २४

भूमिरग्निश्च वायुश्च न चापो न दिवाकरः ।
नक्षत्राणि न चन्द्रश्च न दिशः काल एव च ॥ २५

शब्दस्स्पर्शश्च रूपं च न गन्धो न रसः क्वचित् ।
न च सन्ति प्रमाणानि यैः प्रमेयं प्रसाध्यते ॥ २६

प्रत्यक्षमनुमानं च नोपमानमथागमः ।
नार्थापत्तिर्न चैतिह्यं न दृष्टान्तो न संशयः ॥ २७
न क्वचिन्निर्णयो राजन्न धर्मोऽधर्म एव च ।
तिर्यक् च स्थावरं चैव न देवा न च मानुषाः ॥ २८
वर्णाश्रमविभागाश्च न च कर्ता न कर्मकृत् ।
न चार्थश्च विभूतिश्च न चार्थस्य विचेष्टितम् ॥ २९
तमोभूतमिदं सर्वम् अनालोकं जगन्नृप ।
न चात्मा विद्यमानोऽपि मनसा योगमृच्छति ॥ ३०
अचेतनं पुनस्त्वासीद् आत्मा एव सचेतनः ।
ईश्वरश्चेतनस्त्वेकस् तेनेदं गहनीकृतम् ॥ ३१
मन्त्राश्च चेतना राजन् न च देहेन योजिताः ॥ ३१॥
ते च विश्वसृजो नाम ऋषयो मन्त्रदेवताः ।
चैतन्यमीश्वरात् प्राप्य ब्रह्माण्डं तैर्विनिर्मितम् ॥ ३२॥
इष्ट्वा विश्वसृजं यज्ञं निर्मितः प्रपितामहः ।
सृष्टिस्तेन समारब्धा प्रसादादीश्वरस्य च ॥ ३३॥
चैतन्यमीश्वरस्यैतद् येनेदं चेतनं जगत् ।
योगेन च समाविष्टं जगत् कृत्स्नं च शम्भुना ॥ ३४॥
धर्मश्चार्थश्च कामश्च उक्तो मोक्षश्च सङ्क्षये ।
ब्रह्मणः परमेशस्य ईश्वरेण यदृच्छया ॥ ३५॥

अज्ञो जन्तुरनीशश्च भाजनं सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥ ३६॥

प्रधानं पुरुषश्चैव आत्मानं सर्वदेहिनाम् ।
मनसा विषयश्चैव चेतनेन प्रयोजितः ॥ ३७॥

सुखदुःखेन युज्यन्ते कर्मभिश्च प्रचोदिताः ॥ ३८

वर्णाश्रमविभागश्च ईश्वरेण प्रवर्तितः ।
सदेवासुरगन्धर्वं तेनेदं निर्मितं जगत् ॥ ३९

त्वं चान्ये च महाभाग ईश्वरस्य वशे स्थिताः ।
जीवन्ते च म्रियन्ते च न स्वतन्त्राः कथञ्चन ॥ ४०

भित्त्वा भित्त्वा च भूतानि हत्वा सर्वमिदं जगत् ।
यजते कर्मणा देवान् न स पापेन लिप्यते ॥ ४१

हिंसात्मकानि कर्माणि सर्वेषां गृहमेधिनाम् ।
देवतानामृषीणां च ते च यान्ति परां गतिम् ॥ ४२

पातिताश्शत्रवः पूर्वं सर्वत्र वसुधाधिपैः ।
प्रजानां हितकामैश्च आत्मनश्च हितैषिभिः ॥ ४३

यदि तत्र भवेत् पापं कथं ते स्वर्गमास्थिताः ।
न प्राप्ता नरकं राजन् वेष्टिताः पापकर्मभिः ॥ ४४

एवं स्वर्गसमापन्ना मार्गमातिष्ठतो नृप ।
द्विजातेर्ब्रह्मभूतस्य स्पृहयन्ति दिवौकसः ॥ ४५

स रत्नानि विचित्राणि सम्प्राप्तानि ततस्ततः ।
मखेष्वनभिसन्त्यज्य नास्तिक्यमभिजल्पसे ॥ ४६

कुटुम्बमास्थिते त्यागं न पश्यामि नराधिप ।
राजसूयाश्वमेधेषु सर्वमेधेषु वा पुनः ॥ ४७

ये चान्ये क्रतवस्तात ब्राह्मणैरुपशोभिताः ।
तैर्यजस्व महीपाल शक्रो देवपतिर्यथा ॥ ४८

राजा प्रमाददोषेण दस्युभिः परिमुच्यते ।
अशरण्यः प्रजानां यस् स राजा कलिरुच्यते ॥ ४९

अश्वान् गाश्चैव दासीश्च करेणूश्च स्वलङ्कृताः ।
ग्रामाञ् जनपदांश्चैव क्षेत्राणि च गृहाणि च ॥ ५०

अप्रदाय द्विजातिभ्यो मात्सर्याविष्टचेतसः ।
वयं ते राजकलयो भविष्याम विशां पते ॥ ५१

अदातारोऽशरण्याश्च राजकिल्बिषभागिनः ।
दुःखानामेव भोक्तारो न सुखानां कदाचन ॥ ५२

अनिष्ट्वा च महायज्ञैर् अकृत्वा च पितॄन् स्वधाम् ।
तीर्थेष्वनभिसन्त्यज्य प्रव्रजिष्यसि चेदथ ॥ ५३

भिन्नाभ्र इव गन्तासि विलयं मारुतेरितः ।
लोकयोरुभयोर्भ्रष्ट अन्तराले व्यवस्थितः ॥ ५४

अन्तर्बहिश्च यत् किञ्चिन्मनोव्यासङ्गकारणम् ।

परित्यज्य भवेत्त्यागी न यो हित्वा प्रतितिष्ठते ॥ ५५

एतस्मिन् वर्तमानस्य विधौ विप्रैर्निषेविते ।
ब्राह्मणस्य महाराज नोच्छित्तिर्विद्यते क्वचित् ॥ ५६

निहत्य शत्रूंस्तरसा समृद्धाञ्
शक्रो यथा दैत्यबलानि सङ्ख्ये ।
कः पार्थ शोचेन्निरतस्तु धर्मे
पूर्वैः कृते पार्थिवमुख्यमुख्ये ॥ ५७

क्षात्रेण शुद्धेन पराक्रमेण
जित्वा महीं मन्त्रविद्भ्यः प्रदाय ।
नाकस्य पृष्ठे हि नरेन्द्र गन्ता
न शोचितव्यं भवताऽद्य पार्थ ॥ ५८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[अस्मिन्नध्याये ५८ श्लोकाः]

## ॥ त्रयोदशोऽध्यायः ॥

युधिष्ठिरं प्रति सहदेववचनम् ॥

सहदेवः—

न बाह्यं द्रव्यमुत्सृज्य सिद्धिर्भवति भारत ।
शारीरं द्रव्यमुत्सृज्य सिद्धिर्भवति वा न वा ॥ १

बाह्यद्रव्यविमुक्तस्य शारीरेषु च गृध्यतः ।
यो धर्मो यत् सुखं वा स्याद् द्विषतां तत्तथाऽस्तु नः ॥ २

शारीरं द्रव्यमुत्सृज्य पृथिवीमनुशासतः ।
यो धर्मो यत् सुखं वा स्यात् सुहृदां तत्तथाऽस्तु नः ॥ ३

द्व्यक्षरस्तु भवेन्मृत्युस् त्र्यक्षरं ब्रह्म शाश्वतम् ।
[1]ममेति द्व्यक्षरो मृत्युर् न ममेति च शाश्वतम् ॥ ४

[2]जन्ममृत्यू तु राजन् द्वावात्मन्येव समाश्रितौ ।
अदृश्यमानौ भूतानि योजयेतामसंशयम् ॥ ५

अविनाशोऽस्य सत्त्वस्य नियतो यदि भारत ।
हित्वा शरीरं भूतानां न हिंसा प्रतिपत्स्यते ॥ ६

अथापि च सहोत्पत्तिस् सत्त्वस्य प्रलयस्तथा ।

1. घ—इदमर्धं नास्ति
2. अ-क—ब्रह्ममृत्यू च राजन् द्वावात्मन्येव समाश्रितौ । [पाठान्तरम्]
घ—जन्मसृत्यू तु राजा द्वौ वाचान्येन [पाठान्तरम्]

नष्टे शरीरे नष्टस्स्याद् वृथा तस्य क्रियापथः ॥ ७
तस्मादेकान्तमुत्सृज्य पूर्वैः पूर्वतरश्च यः ।
पन्था निषेवितस्सद्भिस् स निषेव्यो विजानता ॥ ८
स्वायम्भुवेन मनुना तथाऽन्यैश्चक्रवर्तिभिः ।
यद्ययं ह्यधमः पन्थाः कस्मात्तैस्तैर्निषेवितः ॥ ९
कृतत्रेतादियुक्तानि गुणवन्ति च भारत ।
युगानि बहुशस्तैश्च भुक्तेयमवनी नृप ॥ १०
लब्ध्वाऽपि पृथिवीं कृत्स्नां सहस्थावरजङ्गमाम् ।
न भुङ्क्ते यो नृपस्सम्यक् किं फलं तस्य जीवितम् ॥ ११
अथवा वसतो राजन् वने वन्येन जीवतः ।
द्रव्येषु यस्य ममता मृत्योरास्ये विवर्तते ॥ १२
बाह्यान्तराणां भूतानां स्वभावं पश्य भारत ।
ये तु पश्यन्ति सद्भूतं मुच्यन्ते ते महाभयात् ॥ १३
भवान् पिता भवान् माता भवान् भ्राता भवान् गुरुः ।
दुःखप्रलापानार्तस्य तन्मे क्षन्तुमिहार्हसि ॥ १४
तथ्यं वा यदि वाऽतथ्यं यन्मयैतत् प्रभाषितम् ।
तद्विद्धि पृथिवीपाल भक्त्या भगवतो हरेः ॥ १५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
[ अस्मिन्नध्याये १५ श्लोकाः ]

## ॥ चतुर्दशोऽध्यायः ॥

युधिष्ठिरं प्रति द्रौपदीवचनम् ॥

वैशम्पायनः—

अव्याहरति कौन्तेये धर्मराजे युधिष्ठिरे ।
भ्रातॄणां विविधांस्तांस्तान् विविधान् वेदनिश्चयान् ॥ १

महाभिजनसम्पन्ना श्रीमत्यायतलोचना ।
अभ्यभाषत राजानं द्रौपदी योषितां वरा ॥ २

आसीनमृषभं राज्ञां भ्रातृभिः परिवारितम् ।
सिंहशार्दूलसदृशैर् वारणैरिव यूथपम् ॥ ३

अभिमानवती नित्यं विशेषेण युधिष्ठिरे ।
लालिता सततं राज्ञा धर्माधर्मनिदर्शिनी ॥ ४

आमन्त्रयित्वा सुश्रोणी साम्ना परमवल्गुना ।
भर्तारमभिसम्प्रेक्ष्य ततो वचनमब्रवीत् ॥ ५

द्रौपदी—

इमे ते भ्रातरः पार्थ शुष्यन्ते स्तोकका इव ।
त्वां पश्यमानास्तिष्ठन्ति न चैनानभिनन्दसे ॥ ६

नन्दयैतान् महाराज मत्तानिव महाद्विपान् ।
उपपन्नेन वाक्येन सततं दुःखभागिनः ॥ ७

कथं द्वैतवने राजन् पूर्वमुक्त्वा तथा वचः ।
भ्रातॄनेतांस्तु सहितान् शीतवातातपार्दितान् ॥ ८
वयं दुर्योधनं हत्वा मृधे भोक्ष्याम मेदिनीम् ।
सम्पूर्णा सर्वकामानाम् आहवे विजयैषिणः ॥ ९
नृवीरांश्च रथान् हत्वा निहत्य च महाद्विपान् ।
संस्तीर्य च रथैर्भूमिं ससादिभिररिन्दमाः ॥ १०
यजेम विविधैर्यज्ञैस् समृद्धैराप्तदक्षिणैः ।
वनवासगतं दुःखं भविष्यति सुखाय नः ॥ ११
इत्येतानेवमुक्त्वा त्वं स्वयं धर्मभृतां वर ।
कथमद्य पुनर्वीर विनिहंसि मनांस्युत ॥ १२
न क्लीबो वसुधां भुङ्क्ते न क्लीबो राज्यमश्नुते ।
न क्लीबस्य गृहे पुत्रा वित्तपाला इवासते ॥ १३
नादण्डः क्षत्रियो भाति नादण्डो भूमिमश्नुते ।
नादण्डस्य प्रजा राजन् सुखमेधन्ति भारत ॥ १४
सदेवासुरगन्धर्वैर् अप्सरोभिर्विभूषितम् ।
रक्षोभिर्गुह्यकैर्नागैर् मनुष्यैश्च विभूषितम् ॥ १५
त्रिवर्गेण च सम्पूर्णं त्रिवर्गस्यागमेन च ।
दण्डेनाभ्याहतं सर्वं जगद्भोगाय कल्पते ॥ १६
स्वायम्भुवं महीपाल आगमं शृणु शाश्वतम् ।

विप्राणां विदितश्चायं तव चैव विशां पते ॥ १७

अराजके हि लोकेऽस्मिन् सर्वतो विद्रुते भयात् ।
रक्षार्थमस्य लोकस्य राजानमसृजत् प्रभुः ॥ १८

महाकायं महावीर्यं पालने जगतः क्षमम् ॥ १८॥

अनिलाग्नियमार्काणाम् इन्द्रस्य वरुणस्य च ।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥ १९॥

यस्मादेषां सुरेन्द्राणां सम्भवत्यंशतो नृपः ।
तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥ २०॥

तपत्यादित्यवच्चैव चक्षूंषि च मनांसि च ।
न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥ २१॥

सोऽग्निर्भवति वायुश्च सोऽर्कस्सोमश्च धर्मराट् ।
स कुबेरस्स वरुणस् स महेन्द्रः प्रतापवान् ॥ २२॥

पितामहस्य देवस्य विष्णोश्शर्वस्य चैव हि ।
ऋषीणां चैव सर्वेषां तस्मिंस्तेजः प्रतिष्ठितम् ॥ २३॥

बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ २४॥

एकमेव दहत्यग्निर् नरं दुरुपसर्पिणम् ।
कुलं दहति राजाग्निस् सपशुद्रव्यसञ्चयम् ॥ २५॥

धृतराष्ट्रकुलं दग्धं क्रोधोद्भूतेन वह्निना ।

प्रत्यक्षमेतल्लोकस्य संशयो न हि विद्यते ॥ २६॥

कुलजो वृत्तसम्पन्नो धार्मिकश्च महीपतिः ।
प्रजानां पालने युक्तः पूज्यते दैवतैरपि ॥ २७॥

कार्यं योऽवेक्ष्य शक्तिं च देशकालौ च तत्त्वतः ।
कुरुते [1]धर्मसिद्ध्यर्थं वैश्वरूप्यं पुनः पुनः ॥ २८॥

तस्य प्रसादे पद्मा श्रीर् विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥ २९॥

तं यस्तु द्वेष्टि सम्मोहात् स विनश्यति मानवः ।
तस्य ह्याशु विनाशाय राजाऽपि कुरुते मनः ॥ ३०॥

तस्माद्धर्मं यमिष्टेषु संव्यवस्यति पार्थिवः ।
अनिष्टं चाप्यनिष्टेषु तद्धर्मं न विचालयेत् ॥ ३१॥

तस्यार्थे सर्वभूतानां गोप्तारं धर्म्यमात्मजम् ।
ब्रह्मतेजोमयं दण्डम् असृजत् पूर्वमीश्वरः ॥ ३२॥

तस्य सर्वाणि भूतानि स्थावराणि चराणि च ।
भयाद्भोगाय कल्पन्ते धर्मान्न विचलन्ति च ॥ ३३॥

देशकालौ च शक्तिं च कार्यं चावेक्ष्य तत्त्वतः ।
यथार्हतस्सम्प्रणयेन्नरेष्वन्यायवर्तिषु ॥ ३४॥

स राजा पुरुषो दण्डस् स नेता शासिता च सः ।

1. क—कर्म

वर्णानामाश्रमाणां च धर्मप्रभुरथाव्ययः ॥ ३५॥

दण्डश्शास्ति प्रजास्सर्वा दण्ड एवाभिरक्षति ।
दण्डस्सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ ३६॥

सुसमीक्ष्य धृतो दण्डस् सर्वा रञ्जयति प्रजाः ।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वशः ॥ ३७॥

यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः ।
जले मत्स्यानिवाधक्ष्यन् दुर्बलान् बलवत्तराः ॥ ३८॥

काकोऽद्याच्च पुरोडाशं श्वा चैवावलिहेद्धविः ।
स्वामित्वं न कश्चिच्च स्यात् प्रपद्येताधरोत्तरम् ॥ ३९॥

सर्वो दण्डजितो लोको दुर्लभस्तु शुचिर्नरः ।
दण्डस्य हि भयात् सर्वं जगद्भोगाय कल्पते ॥ ४०॥

देवदानवगन्धर्वा रक्षांसि पतगोरगाः ।
तेऽपि भोगाय कल्पन्ते दण्डेनैवाभिपीडिताः ॥ ४१॥

दूष्येयुस्सर्ववर्णाश्च भिद्येरन् सर्वसेतवः ।
सर्वलोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात् ॥ ४२॥

यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।
प्रजास्तत्र न मुह्यन्ति नेता चेत् साधु पश्यति ॥ ४३॥

आहुस्तस्य प्रणेतारं राजानं सत्यवादिनम् ।
समीक्ष्यकारिणं प्राज्ञं धर्मकामार्थकोविदम् ॥ ४४॥

तं राजा प्रणयन् सम्यक् स्वर्गायाभिप्रवर्तते ।
कामात्मविषयी क्षुद्रो दण्डेनैव हि हन्यते ॥ ४५॥

दण्डो हि सुमहातेजा दुर्धरश्चाकृतात्मभिः ।
धर्माद्विचलितं हन्ति नृपमेव सबान्धवम् ॥ ४६॥

ततो दुर्गं च राष्ट्रं च लोकं च सचराचरम् ।
अन्तरिक्षगतांश्चैव मुनीन् देवांश्च हिंसति ॥ ४७॥

सोऽसहायेन मूढेन लुब्धेनाकृतबुद्धिना ।
अशक्यो न्यायतो नेतुं विषयांश्चैव सेवता ॥ ४८॥

शुचिना सत्यसन्धेन नीतिशास्त्रानुसारिणा ।
दण्डः प्रणेतुं शक्यो हि सुसहायेन धीमता ॥ ४९॥

स्वराष्ट्रे न्यायवर्ती स्याद् भृशदण्डश्च शत्रुषु ।
सुहृत्स्वजिह्मस्स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥ ५०॥

एवं वृत्तस्य राज्ञस्तु शिलोञ्छेनापि जीवतः ।
विस्तीर्येत यशो लोके तैलबिन्दुरिवाम्भसि ॥ ५१॥

अतस्तु विपरीतस्य नृपतेरकृतात्मनः ।
संक्षिप्येत यशो लोके घृतबिन्दुरिवाम्भसि ॥ ५२॥

देवदेवेन रुद्रेण ब्रह्मणा च महीपते ।
विष्णुना चैव देवेन शक्रेण च महात्मना ॥ ५३॥

लोकपालैश्च भूतैश्च पाण्डवैश्च महात्मभिः ।

धर्माद्विचलिता राजन् धार्तराष्ट्रा निपातिताः ॥ ५४॥
अधार्मिका दुराचारास् ससैन्या विनिपातिताः ॥ ५५

तान् निहत्य न दोषस्ते स्वल्पोऽपि जगतीपते ।
[1]छलेन मायया वाऽथ क्षत्रधर्मेण वा नृप ॥ ५६

मैत्रता सर्वभूतेषु दानमध्ययनं तपः ।
ब्राह्मणस्यैष धर्मस्यान्न राज्ञां राजसत्तम ॥ ५७

असतां प्रतिषेधश्च सतां च परिपालनम् ।
एवं राज्ञः परो धर्मस् समरे चापलायनम् ॥ ५८

यस्मिन् क्षमा च क्रोधश्च दानादाने भयाभये ।
निग्रहानुग्रहौ चोभौ स वै धर्मविदुच्यते ॥ ५९

न सान्त्वेन न दानेन न श्रुतेन न चेज्यया ।
त्वयेयं पृथिवी लब्धा न सङ्कोचेन वाऽप्युत ॥ ६०

यत्तद्बलममित्राणां तथा वीरसमुद्यतम् ।
हस्त्यश्वरथसम्पन्नं त्रिभिरङ्गैर्महत्तरम् ॥ ६१

रक्षितं द्रोणकर्णाभ्याम् अश्वत्थाम्ना कृपेण च ।
तत्त्वया निहतं वीर तस्माद्भुङ्क्ष्व वसुन्धराम् ॥ ६२

जम्बूद्वीपो महाराज नानाजनपदायुतः ।
त्वया पुरुषशार्दूल दण्डेन मृदितः प्रभो ॥ ६३

---
1. क-ख—बलेन

केशग्रहे च नारीणाम् अपि युध्येत् पितामहम् ।
ब्रह्माणं देवदेवेशं किं पुनः पापकारिणम् ॥ ८३

गोब्राह्मणार्थे व्यसने च राज्ञां
राष्ट्रोपमर्दे स्वशरीरहेतोः ।
स्त्रीणां च विक्रुष्टरुतानि श्रुत्वा
विप्रोऽपि वध्येत महाप्रभावः ॥ ८४

धर्माद्विचलितं विप्रं निहन्यादाततायिनम् ।
तस्यान्यत्र वधं विद्वान् मनसाऽपि न चिन्तयेत् ॥ ८५

गोब्राह्मणवधे वृत्तं [1]मन्त्रत्राणार्थमेव च ।
निहन्यात् क्षत्रियो विप्रं स्वकुटुम्बस्य चात्यये ॥ ८६

तस्करेण नृशंसेन धर्मात् प्रचलितेन च ।
क्षत्रबन्धुः परं शक्त्या युध्येद्विप्रेण संयुगे ॥ ८७

आततायिनमायान्तम् अपि वेदान्तगं रणे ।
जिघांसन्तं जिघांसीयान्न तेन भ्रूणहा भवेत् ॥ ८८

ब्राह्मणः क्षत्रियो वैश्यश् शूद्रो वाऽप्यन्त्यजोऽथ वा ।
न हन्याद्ब्राह्मणं शान्तं तृणेनापि कदाचन ॥ ८९

ब्राह्मणायापगुर्येत स्पृष्टे गुरुतरं भवेत् ।
वर्षाणां त्रिशतं पापः प्रतिष्ठां नाधिगच्छति ॥ ९०

1. ख—आत्म

सहस्राणि च वर्षाणि निहत्य नरके पतेत् ।
तस्मै नैवापगुर्याद्धि नैव शस्त्रं निपातयेत् ॥ ११

शोणितं यावतः पांसून् गृह्णातीति हि धारणा ।
तावतीस्स समाः पापो नरके परिवर्तते ॥ १२

त्वगस्थिभेदं विप्रस्य यः कुर्यात् कारयेत वा ।
ब्रह्महा स तु विज्ञेयः प्रायश्चित्ती नराधमः ॥ १३

श्रोत्रियं ब्राह्मणं हत्वा तथाऽऽत्रेयीं च ब्राह्मणीम् ।
चतुर्विंशतिवर्षाणि चरेद्ब्रह्महणो व्रतम् ॥ १४

द्विगुणा ब्रह्महत्येयं सर्वैः प्रोक्ता [1]महर्षिभिः ।
प्रायश्चित्तमकुर्वाणं कृताङ्कं विप्रवासयेत् ॥ १५

ब्राह्मणं क्षत्रियं वैश्यं शूद्रं वा घातयेन्नृपः ।
ब्रह्मघ्नं तस्करं चैव मा भूदेवं चरिष्यति ॥ १६

छित्त्वा हस्तौ च पादौ च नासिकोष्ठौ च भूपतिः ।
ब्रह्मघ्नं चोत्तमं पापं नेत्रोद्धारेण योजयेत् ॥ १७

शूद्रस्यैष स्मृतो दण्डस् तद्वद्राजन्यवैश्ययोः ।
प्रायश्चित्तमकुर्वाणं ब्राह्मणं विप्रवासयेत् ॥ १८

क्षत्रियं वैश्यशूद्रौ च शस्त्रेणैव तु घातयेत् ।
ब्रह्मघ्नान् ब्राह्मणान् राजा कृताङ्कान् विप्रवासयेत् ॥ १९

---

1. क–घ—मनीषिभिः

विकलेन्द्रियांस्त्रिवर्णांश्च चण्डालैस्सह वासयेत् ।
तैश्च यस्सम्पिबेत् कश्चित् स पिबन् ब्रह्महा भवेत् ॥ १००

प्रेतानां न च देयानि पिण्डदानानि केनचित् ॥ १००॥

कृष्णवर्णा विरूपा च निर्णीता लम्बमूर्धजा ।
दुनोत्यदृष्टा कर्तारं ब्रह्महत्येति तां विदुः ॥ १०१॥

ब्रह्मघ्नेन पिबन्तश्च विप्रा देशाः पुराणि च ।
अचिरादेव पीड्यन्ते दुर्भिक्षव्याधितस्करैः ॥ १०२॥

ब्राह्मणं पापकर्माणं विप्राणामाततायिनम् ।
क्षत्रियं वैश्यशूद्रौ च नेत्रोद्धारेण योजयेत् ॥ १०३॥

दुर्बलानां बलं राजा बलिनो ये च साधवः ।
बलिनां दुर्बलानां च पापानां मृत्युरिष्यते ॥ १०४॥

सदोषमपि यो हन्याद् अश्राव्य जगतीपते ।
दुर्बलं बलवन्तं वा स पराजयमर्हति ॥ १०५॥

राजाज्ञां प्राड्विवाकं च नेच्छेद्यश्चापि निष्पतेत् ।
साक्षिणं साधुवाक्यं च जितं तमपि निर्दिशेत् ॥ १०६॥

बन्धनान्निष्पतेद्यश्च प्रतिभूर्न ददाति च ।
कुलजश्च धनाढ्यश्च स पराजयमर्हति ॥ १०७॥

राजाज्ञया समाहूतो यो न गच्छेत् सभां नरः ।

बलवन्तमुपाश्रित्य सायुधस्स पराजितः ॥ १०८॥
तं दण्डेन विनिर्जित्य महासाहसिकं नरम् ।
वियुक्तदेहसर्वस्वं परलोकं विसर्जयेत् ॥ १०९॥
मृतस्यापि न देयानि पिण्डदानानि केनचित् ।
दत्त्वा दण्डं प्रयच्छेत मध्यमं पूर्वसाहसम् ॥ ११०॥
कुलस्त्रीव्यभिचारं च राष्ट्रस्य च विमर्दनम् ।
ब्रह्महत्यां च चौर्यं च राजद्रोहं च पञ्चमम् ॥ १११॥
महान्ति पातकान्याहुः ऋषयः पातकानिह ॥ ११२
युद्धादन्यत्र हिंसायां सुरापस्य च कीर्त्यते ।
महान्तं गुरुतल्पे च मित्रद्रोहे च पातकम् ॥ ११३
न कथञ्चिदुपेक्षेत महासाहसिकं नरम् ।
सर्वस्वमपहृत्याशु ततः प्राणैर्वियोजयेत् ॥ ११४
त्रिषु वर्णेषु यो दण्डः प्रणीतो ब्रह्मणा पुरा ।
महासाहसिकं विप्रं कृताङ्कं विप्रवासयेत् ॥ ११५
साहस्रो वा भवेद्दण्डः काञ्चनो देहनिष्क्रियः ।
चतुर्णामपि वर्णानाम् एवमाहोशना कविः ॥ ११६
नारीणां बालवृद्धानां [1]गोपतेश्च महामतिः ।
पापानां दुर्विनीतानां प्राणान्तं च बृहस्पतिः ॥ ११७

---

1. अ-ब—गोः पाते च

दण्डमाह महाभाग सर्वेषां चाततायिनाम् ॥ ११७॥

सर्वेषां पापबुद्धीनां पापं कर्मेह कुर्वताम् ।
धृतराष्ट्रस्य पुत्राणां दण्डो निर्दोष इष्यते ॥ ११८॥

सौबलस्य च दुर्बुद्धेः कर्णस्य च दुरात्मनः ॥ ११९

पश्यतां चैव शूराणां याऽहं द्यूते सभां तदा ।
रजस्वला समानीता भवतां पश्यतां नृप ॥ १२०

वाससैकेन संवीता भवेद् दोषेण भूपते ॥ १२०॥

मा भूद्धर्मविलोपस्ते धृतराष्ट्रकुलक्षयात् ।
क्रोधाग्निना तु दग्धं च सपशुद्रव्यसञ्चयम् ॥ १२१॥

साऽहमेवंविधं दुःखं सम्प्राप्ता तव हेतुना ।
आदित्यस्य प्रसादेन न च प्राणैर्वियोजिता ॥ १२२॥

रक्षिता देवदेवेन जगतः कालहेतुना ।
दिवाकरेण देवेन विवस्त्रा न कृता तदा ॥ १२३॥

एतेषां यतमानानां उत्पतन्त्यनया नृप ।
त्वं तु सर्वां महीं लब्ध्वा कुरुषे स्वयमापदम् ॥ १२४॥

यथाऽऽस्तां सम्मतौ राज्ञां पृथिव्यां राजसत्तमौ ।
मान्धाता चाम्बरीषश्च तथा राजन् विराजसे ॥ १२५॥

प्रशाधि पृथिवीं देवीं प्रजा धर्मेण पालय ।

सपर्वतवनद्वीपां मा राजन् विमनाश्च भूः ॥ १२६॥

यजस्व विविधैर्यज्ञैर् जुहुध्यग्नीन् प्रयच्छ च ।
पुराणि भोगान् वासांसि द्विजातिभ्यो नृपोत्तम ॥ १२७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
[अस्मिन्नध्याये १२७॥ श्लोकाः]

---

## ॥ पञ्चदशोऽध्यायः ॥

---

युधिष्ठिरं प्रत्यर्जुनवाक्यम् ॥

---

वैशम्पायनः—

याज्ञसेन्या वचश्श्रुत्वा पुनरेवार्जुनोऽब्रवीत् ।
अनुमान्य महाबाहुं ज्येष्ठं भ्रातरमीश्वरम् ॥ १

अर्जुनः—

दण्डश्शास्ति प्रजास्सर्वा दण्ड एवाभिरक्षति ।
दण्डस्सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ २

धर्मं संरक्षते दण्डस् तथैवार्थं नराधिप ।
कामं संरक्षते दण्डस् त्रिवर्गो दण्ड उच्यते ॥ ३

दण्डेन रक्ष्यते धान्यं धनं दण्डेन रक्ष्यते ।

एतद्विद्वानुपादाय स्वभावं पश्य लौकिकम् ॥ ४

राजदण्डभयादेके नराः पापं न कुर्वते ।
[1]यमदण्डभयादेके परलोकभयादपि ॥ ५

परस्परभयादेके [2]नराः पापं न कुर्वते ॥ ५॥
एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम् ॥ ६

दण्डस्यैव भयाल्लोके न खादन्ति परस्परम् ।
अन्धे तमसि मज्जेरन् यदि दण्डो न पालयेत् ॥ ७

यस्माददान्तान् दमयेद् दुर्वृत्तान् दण्डयत्यपि ।
दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ॥ ८

वाचि दण्डो ब्राह्मणानां क्षत्रियाणां भुजार्पणम् ।
धनदण्डस्स्मृतो वैश्यो निर्दण्डश्शूद्र उच्यते ॥ ९

असम्मोहाय मर्त्यानाम् अर्थसंरक्षणाय च ।
मर्यादा स्थापिता लोके दण्डसंज्ञा विशां पते ॥ १०

यत्र श्यामो लोहिताक्षो दण्डश्चरति सूद्यतः ।
प्रजास्तत्र न मुह्यन्ति नेता चेत् साधु पश्यति ॥ ११

ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ।
दण्डस्यैव भयादेते मनुष्या वर्त्मनि स्थिताः ॥ १२

नाभीतो यजते राजन् नाभीतो दातुमिच्छति ।

---

1. क—अर्धद्वयं नास्ति 2. क—पापाः

नाभीतः पुरुषः कश्चित् समये स्थातुमिच्छति ॥ १३

नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म दारुणम् ।
[1]नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥ १४

नाघ्नतः कीर्तिरस्तीह न वित्तं न पुनः प्रजाः ॥ १४॥

इन्द्रो वृत्रवधेनैव महेन्द्रस्समपद्यत ।
माहेन्द्रं च गृहं लेभे लोकानां चेश्वरोऽभवत् ॥ १५॥

य एव देवा हन्तारस् ताँल्लोकोऽर्चयते भृशम् ।
हन्ता रुद्रस्तथा स्कन्दश् शक्रोऽग्निर्वरुणो यमः ॥ १६॥

हन्ता कालस्तथा वायुर् मृत्युर्वैश्रवणो रविः ।
वसवो मरुतस्साध्या विश्वे देवाश्च भारत ॥ १७॥

एतान् देवान् नमस्यन्ति प्रतापप्रणता जनाः ।
न ब्रह्माणं न धातारं न पूषाणं कथञ्चन ॥ १८॥

मध्यस्थान् सर्वभूतेषु दान्ताञ् शमपरायणान् ।
यजन्ते मानवाः केचित् प्रशान्तान् सर्वकर्मसु ॥ १९॥

न हि पश्यामि जीवन्तं लोके कश्चिदहिंसया ।
सत्त्वैस्सत्त्वानि जीवन्ति दुर्बलैर्बलवत्तराः ॥ २०॥

नकुलो मूषिकानत्ति बिडालो नकुलं तथा ।
बिडालमत्ति श्वा राजञ् श्वानं व्यालमृगस्तथा ॥ २१॥

---

1. अ-क-ब—अर्धंश्लोकं नास्ति

तानत्ति पुरुषस्सर्वान् पश्य धर्मं यथा गतम् ॥ २२

प्राणस्यान्नमिदं सर्वं जङ्गमं स्थावरं च यत् ।
विधानं दैवविहितं तत्र विद्वान् न मुह्यति ॥ २३
यथा सृष्टोऽसि राजेन्द्र तथा भवितुमर्हसि ॥ २३॥

विनीतक्रोधहर्षा हि दान्ता वनमुपाश्रिताः ।
विना वधं न कुर्वन्ति तापसाः प्राणयापनम् ॥ २४॥

उदके बहवः प्राणाः पृथिव्यां च फलेषु च ।
न च कश्चिन्न तान् हन्ति किमन्यत् प्राणयापनम् ॥ २५॥

सूक्ष्मयोनीनि भूतानि तर्कगम्यानि कानिचित् ।
पक्ष्मणोर्विनिपातेन येषां स्यात् कालपर्ययः ॥ २६॥

[1]ग्रामान्निष्क्रम्य मुनयो विनीतक्रोधमत्सराः ।
वने कुटुम्बधर्माणो दृश्यन्ते परिमोहिताः ॥ २७॥

भूमिं भित्त्वौषधीश्छित्त्वा वृक्षादीनप्यजान् पशून् ।
मनुष्यास्तन्वते यज्ञांस् ते स्वर्गं प्राप्नुवन्ति च ॥ २८॥

दण्डनीत्यां प्रणीतायां सर्वे सिध्यन्त्युपक्रमाः ।
कौन्तेय सर्वभूतानां तत्र मे नास्ति संशयः ॥ २९॥

दण्डश्चेन्न भवेल्लोके विनशिष्यन्निमाः प्रजाः ।
जले मत्स्यानिवाभक्ष्यन् दुर्बलान् बलवत्तराः ॥ ३०॥

---

1. क—गृहान्नि

सत्यं बतेदं ब्रह्मणा पूर्वमुक्तो
दण्डः प्रजा रक्षति साधु नीतः ।
पश्याग्नयः पूतिमांसस्य भीतास्
सन्तर्जिता दण्डभयाज्ज्वलन्ति ॥ ३१॥

अन्धं तम इवेदं स्यान्न प्रज्ञायेत किञ्चन ।
दण्डश्चेन्न भवेल्लोके विभजन् साध्वसाधुनी ॥ ३२॥

ये हि सम्भिन्नमर्यादा नास्तिका वेदनिन्दकाः ।
तेऽपि भावाय कल्पन्ते दण्डेनोपनिपीडिताः ॥ ३३॥

सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः ।
दण्डस्य हि भयाद्भीतो भोगायापि प्रकल्पते ॥ ३४॥

चातुर्वर्ण्याप्रमोहाय सुनीतिकरणाय च ।
दण्डो हि विहितो धात्रा धर्मार्थौ चापि रक्षितुम् ॥ ३५॥

यदि दण्डान्न बिभियुर् वयांसि श्वापदानि च ।
हन्युः पशून् मनुष्यांश्च यज्ञार्थानि हवींषि च ॥ ३६॥

न ब्रह्मचार्यधीयीत न काल्यं दुहते च गौः ।
न कन्योद्वहनं गच्छेद् यदि दण्डो न वर्तते ॥ ३७॥

विश्वलोपः प्रवर्तेत भिद्येरन् सर्वसेतवः ।
ममत्वं न प्रजानीयुर् यदि दण्डो न पालयेत् ॥ ३८॥

न संवत्सरसत्राणि तिष्ठेयुरकुतोभयाः ।

विधिवद्दक्षिणावन्ति यदि दण्डो न पालयेत् ॥ ३९॥

चरेयुर्नाश्रमे धर्मं यथोक्तं विधिमाश्रिताः ।
न विद्यां प्राप्नुयात् कश्चिद् यदि दण्डो न पालयेत् ॥ ४०॥

नैवोष्ट्रा न बलीवर्दा नाश्वाश्वतरगर्दभाः ।
युक्ता वहेयुर्यानानि यदि दण्डो न पालयेत् ॥ ४१॥

न प्रेष्या वचनं कुर्युर् न बालो जातु कर्हिचित् ।
तिष्ठेत् पितुर्मते धर्मो यदि दण्डो न पालयेत् ॥ ४२॥

दण्डे स्थिताः प्रजास्सर्वा भयं दण्डं विदुर्बुधाः ।
दण्डे स्वर्गो मनुष्याणां लोकोऽयं च प्रतिष्ठितः ॥ ४३॥

न तत्र कपटं पापं वञ्चना वाऽपि दृश्यते ।
यत्र दण्डस्सुविहितश् चरत्यरिविनाशनः ॥ ४४॥

न तत्र पापं क्रूरं वा वञ्चना वा प्रवर्तते ॥ ४५

हविश्च प्रलिहेदिष्टं दण्डश्चेन्नोद्यतो भवेत् ।
लिहेत् काकः पुरोडाशं यदि दण्डो न पालयेत् ॥ ४६

यदि दण्डवतो राज्यं विहितं यद्यधर्मतः ।
कार्यं तत्र न कार्यं च भुङ्क्ष्व भोगान् यजस्व च ॥ ४७

सुखेन धर्मं श्रीमन्तश् चरन्ति शुचिवाससः ।
संवसन्तः प्रियैर्दारैर् भुञ्जानाश्चान्नमुत्तमम् ॥ ४८

अर्थे सर्वसमारम्भास् समायत्ता न संशयः ।
स च दण्डे समायत्तः पश्य दण्डस्य गौरवम् ॥ ४९

लोकयात्रार्थमेवेह धर्मप्रवचनं कृतम् ।
अहिंसाऽसाधुहिंसेति श्रेयान् धर्मपरिग्रहः ॥ ५०

नात्यन्तं गुणवत् किञ्चिन्न चाप्यत्यन्तनिर्गुणम् ।
उभयं सर्वकार्येषु दृश्यते साध्वसाधु च ॥ ५१

पशूनां वृषणं छित्त्वा ततो भिन्दन्ति नासिकाम् ।
कृषन्ति बहवो राजन् बध्नन्ति दमयन्ति च ॥ ५२

एवं पर्याकुले लोके विपथे जर्झरीकृते ।
तैस्तैर्न्यायैर्महाराज पुराणं धर्ममाचरेत् ॥ ५३

यज देहि प्रजा रक्ष स्वधर्ममनुपालय ।
अमित्राञ्जहि कौन्तेय मित्राणि परिपालय ॥ ५४

मा च ते निघ्नतश्शत्रून् मन्युर्भवतु पार्थिव ।
न तत्र किल्बिषं किञ्चिद्धन्तुर्भवति भारत ॥ ५५

आततायी हि यो हन्याद् आततायिनमाहवे ।
न तेन भ्रूणहा स स्यान्मन्युस्तं मन्युमृच्छति ॥ ५६

अवध्यस्सर्वभूतानाम् अन्तरात्मा न संशयः ।
अवध्ये चात्मनि कथं वध्यो भवति कर्हिचित् ॥ ५७

यथा हि पुरुषश्शालां पुनः प्रविशते नवाम् ।

एवं मृत्युपथं प्राहुर् ये जनास्तत्त्वदर्शिनः ॥ ५८

एवं जीवश्शरीराणि तानि तानि प्रवर्तते ।

देहानुत्सृजते राजन् प्रतिपत्स्यन्ति चापरान् ॥ ५९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[अस्मिन्नध्याये ५९ श्लोकाः]

---

## ॥ षोडशोऽध्यायः ॥



युधिष्ठिरं प्रति भीमवचनम् ॥

---

वैशम्पायनः—

अर्जुनस्य वचश्श्रुत्वा भीमसेनोऽत्यमर्षणः ।

धैर्यमास्थाय तं ज्येष्ठं भ्राता भ्रातरमब्रवीत् ॥ १

भीमः—

राजन् विदितधर्मोऽसि न तेऽस्त्यविदितं भुवि ।

[1]उपशिक्षाम ते वृत्तं [2]सर्वे चैव न शक्नुमः ॥ २

न वक्ष्यामि न वक्ष्यामीत्येवं मे मनसि स्थितम् ।

अतिदुःखात् तु वक्ष्यामि तन्निबोध जनाधिप ॥ ३

भवतस्तु प्रमोहेन सर्वं संशयितं कृतम् ।

---

1. ख—उपेक्ष मा च ते 2. अ—सदैव न च

विक्लबत्वं च नः प्राप्तम् अबलत्वं तथैव च ॥ ४

कथं हि राजा लोकस्य सर्वशास्त्रविशारदः ।
मोहमापद्यते धीमान् यथा कापुरुषस्तथा ॥ ५

आगतिश्च गतिश्चापि लोकस्य विदिता तव ।
आयत्यां च तदात्वे च न तेऽस्त्यविदितं प्रभो ॥ ६

एवं गते महाराज राज्यं प्रति जनाधिप ।
हेतुमात्रं तु वक्ष्यामि तदिहैकमनाश्शृणु ॥ ७

द्विविधो जायते व्याधिश् शारीरो मानसस्तथा ।
परस्परं तयोर्जन्म निर्द्वन्द्वं नोपलभ्यते ॥ ८

शरीराज्जायते व्याधिर् मानसो नात्र संशयः ।
मानसाज्जायते व्याधिश् शारीर इति निश्चयः ॥ ९

शारीरमानसे दुःखे योऽतीते त्वनुशोचति ।
दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ॥ १०

शीतोष्णे चैव वायुश्च त्रयश्शारीरजा गुणाः ।
तेषां गुणानां साम्यं चेत् तदाहुस्स्वस्थलक्षणम् ॥ ११
तेषामन्यतमोत्सेके विधानमुपदिश्यते ॥ ११॥
उष्णेन बध्यते शीतं शीतेनोष्णं प्रशाम्यति ॥ १२

सत्त्वं रजस्तमश्चैव त्रयो वै मानसा गुणाः ।
तेषां गुणानां साम्यं चेत् तदाहुस्स्वस्थलक्षणम् ॥ १३

तेषामन्यतमोत्सेके विधानमुपदिश्यते ।
हर्षेण वध्यते शोको हर्षश्शोकेन वध्यते ॥ १४

[1]कश्चित् सुखे वर्तमानो दुःखस्य स्मर्तुमिच्छति ।
सर्वं न दुःखी दुःखस्य न सुखी च सुखस्य च ॥ १५

नादुःखी दुःखभावस्य नासुखी च सुखस्य च ।
स्मर्तुमर्हति कौरव्य दिष्टं हि बलवत्तरम् ॥ १६

अथवा ते स्वभावोऽयं येन पाण्डव तुष्यसे ॥ १६॥

दृष्ट्वा सभागतां कृष्णाम् एकवस्त्रां रजस्वलाम् ।
मिषतां पाण्डुपुत्राणां न तस्य स्मर्तुमिच्छसि ॥ १७॥

प्रव्राजनं च नगराद् अजिनैश्च निवासनम् ।
महारण्यनिवासश्च न तस्य स्मर्तुमिच्छसि ॥ १८॥

जटासुरात् परिक्लेशं चित्रसेनेन चाहवम् ।
सैन्धवाच्च परिक्लेशं कथं विस्मृतवानसि ॥ १९॥

पुनरज्ञातचर्यायां कीचकेन पदा वधम् ।
बलिनो हि वयं राजन् देवैरपि सुदुर्जयाः ॥ २०॥

कथं भृत्यत्वमापन्ना विराटनगरे स्मर ॥ २१

यच्च ते द्रोणभीष्माभ्यां युद्धमासीदरिन्दम ।
आत्मनैकेन योद्धव्यं तत् ते युद्धमुपस्थितम् ॥ २२

---

1. ख—कश्चिद्दुःखे वर्तमानः सुखस्य स्मर्तुमृच्छति । [अधिकः पाठः]

यत्र नापि समैः कार्यं न मित्रैर्न च बन्धुभिः ।
[1]तस्मिन्ननिर्जिते युद्धे त्वं प्राणान् यदि मोक्ष्यसे ॥ २३

अन्यं देहं समास्थाय ततस्तैरिह योत्स्यसे ।
तस्मादद्यैव गन्तव्यं युद्धाय भरतर्षभ ॥ २४

एतज्जित्वा महाराज कृतकृत्यो भविष्यसि ॥ २४॥

एतां बुद्धिं विनिश्चित्य भूतानामागतिं गतिम् ।
पितृपैतामहं वृत्तं शाधि राज्यं यथोचितम् ॥ २५॥

दिष्ट्या दुर्योधनः पापो निहतस्सपदानुगः ।
द्रौपद्याः केशपक्षस्य दिष्ट्या ते पदवीं गताः ॥ २६॥

यजस्व वाजिमेधेन विधिवद्दक्षिणावता ।
वयं ते किङ्कराः पार्थ वासुदेवश्च वीर्यवान् ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षोडशोऽध्यायः ॥ १६ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि षोडशोऽध्यायः ॥ १६ ॥
[ अस्मिन्नध्याये २७॥ श्लोकाः ]

---

1. ख—आत्मनैकेन योद्धव्यं तत्ते युद्धमुपस्थितम् । [अधिकः पाठः].

## ॥ सप्तदशोऽध्यायः ॥

भीमं प्रति युधिष्ठिरवचनम् ॥

युधिष्ठिरः—

असन्तोषः प्रमादश्च मदो रागोऽप्रशान्तता ।
बलं मोहोऽभिमानश्च अनुद्वेगश्च सर्वशः ॥ १

एभिः पाप्मभिराश्लिष्टो राज्यं त्वमभिकाङ्क्षसे ।
निरामिषो विनिर्मुक्तः प्रशान्तात्मा सुखी भव ॥ २

य इमामखिलां भूमिं शिष्यादेको महीपतिः ।
तस्याप्युदरमेवैकं किमिदं त्वं प्रशंससि ॥ ३

नाह्ना पूरयितुं शक्यं न मासेन नरर्षभ ।
अपूर्यां पूरयन्निच्छाम् आयुषाऽपि न शक्नुयात् ॥ ४

यथेद्धः प्रज्वलत्यग्निर् असमिद्धः प्रशाम्यति ।
अल्पाहारतयाऽग्निं त्वं शमयौदरमुत्थितम् ॥ ५
जयोदरं पृथिव्या ते श्रेयो निर्जितया तया ॥ ५॥
मानुषान् कामभोगांस्त्वम् ऐश्वर्यं च प्रशंससि ॥ ६
अभोगिनोऽबलाश्चापि यान्ति स्थानमनुत्तमम् ॥ ६॥
योगः क्षेमश्च राष्ट्रस्य धर्माधर्मौ त्वयि श्रितौ ।

मुच्यस्व महतो भारात् त्यागमेवाभिसंश्रय ॥ ७॥

एकोदरकृते व्याघ्रो बहून् सत्त्वाञ् जिघांसति ।
तमन्येऽप्युपजीवन्ति मन्दवेगतरा मृगाः ॥ ८॥

विषयान् प्रतिसंहृत्य संन्यासे कुरुते मतिम् ।
न च तुष्यन्ति राजानः पश्य बुद्ध्यन्तरं यथा ॥ ९॥

पत्राहारैरश्मकुट्टैर् दन्तोलूखलिकैस्तथा ।
अब्भक्षैर्वायुभक्षैश्च तैरयं नरको जितः ॥ १०॥

यश्चेमां पृथिवीं सर्वां प्रशासेदखिलां नृपः ।
तुल्याश्मकाञ्चनो यश्च स कृतार्थो न पार्थिवः ॥ ११॥

सङ्कल्पेषु निरारम्भो निराशीर्निर्ममो भव ।
विशोकं स्थानमातिष्ठ इह चामुत्र चाव्ययम् ॥ १२॥

निरामिषा न शोचन्ति शोचन्ति त्वामिषैषिणः ।
परित्यज्यामिषं सर्वं मृषावादात् प्रमुच्यसे ॥ १३॥

पन्थानौ पितृयानश्च देवयानश्च विश्रुतौ ।
ईजानाः पितृयानेन देवयानेन मोक्षिणः ॥ १४॥

तपसा ब्रह्मचर्येण स्वाध्यायेन च भाविताः ।
विमुच्य देहान् वै यान्ति मृत्योरविषयं गताः ॥ १५॥

आमिषं बन्धनं लोके कर्मेहोक्तं तथाऽऽमिषम् ।
ताभ्यां विमुक्तः पापाभ्यां पदमाप्नोति तत्परम् ॥ १६॥

अपि गाथामिमां गीतां जनकेन वदन्त्युत ।
निर्द्वन्द्वेन विमुक्तेन मोक्षं समनुपश्यता ॥ १७॥

अनन्तं बत मे वित्तं यस्य मे नास्ति किञ्चन ।
मिथिलायां प्रदीप्तायां न मे किञ्चन दह्यते ॥ १८॥

प्रज्ञाप्रासादमारुह्य न शोचेच्छोचतो जनान् ।
जगतीस्थानिवाद्रिस्थो मन्दबुद्धिर्नवेक्षते ॥ १९॥

दृश्यं पश्यति यः पश्यन् स चक्षुष्मान् स बुद्धिमान् ।
अज्ञातानां च विज्ञानान्न पाठाद्बुद्धिरुच्यते ॥ २०॥

यस्तु मानं विजानाति बहुमानमियात् स वै ॥ २१

ब्रह्मभावे प्रभूतानां वैद्यानां भावितात्मनाम् ।
यदा भूतपृथग्भावम् एकस्थमनुपश्यति ॥ २२
तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥ २२॥

ते जनास्तां गतिं यान्ति नाविद्वांसोऽविचेतसः ।
नाबुद्धयो नातपसस् सर्वं बुद्धौ प्रतिष्ठितम् ॥ २३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि सप्तदशोऽध्यायः ॥ १७॥
[अस्मिन्नध्याये २३॥ श्लोकाः ]

## ॥ अष्टादशोऽध्यायः ॥

अर्जुनेन युधिष्ठिरं प्रति जनकतद्भार्यासंवादकथनपूर्वकं कर्तव्योपदेशः ॥

वैशम्पायनः—

तूष्णीम्भूतं तु राजानं पुनरेवार्जुनोऽब्रवीत् ।
सन्तप्तश्शोकदुःखाभ्यां राज्ञो वाक्शल्यपीडितः ॥ १

अर्जुनः—

कथयन्ति पुरावृत्तम् इतिहासमिमं जनाः ।
विदेहराज्ञस्संवादं भार्यया सह भारत ॥ २

उत्सृज्य राज्यं भैक्षार्थं कृतबुद्धिं जनेश्वरम् ।
विदेहराजमहिषी दुःखिता प्रत्यभाषत ॥ ३

धनान्यपत्यं मित्राणि रत्नानि विविधानि च ।
पन्थानं पावनं हित्वा जनकं मौढ्यमास्थितम् ॥ ४

तं ददर्श प्रिया भार्या भैक्षवृत्तिमकिञ्चनम् ।
धान्यमुष्टिमुपासीनं निरीहं गतमत्सरम् ॥ ५

तमुवाच समागत्य भर्तारमकुतोभयम् ।
क्रुद्धा मनस्विनी भार्या विविक्ते हेतुमद्वचः ॥ ६

जनकभार्या—

कथमुत्सृज्य राज्यं स्वं धनधान्यसमाचितम् ।

कापालीं वृत्तिमास्थाय धान्यमुष्टिमुपाससे ॥ ७
प्रतिज्ञा ते वृथा राजन् विचेष्टा चान्यथा तव ।
राज्यं महत् समुत्सृज्य स्वल्पे मुह्यसि पार्थिव ॥ ८
नैतेनातिथयो राजन् देवर्षिपितरस्तथा ।
शक्यमद्य त्वया भर्तुं मोघस्तेऽयं परिश्रमः ॥ ९
देवतातिथिभिश्चैव पितृभिश्चैव पार्थिव ।
सर्वैरेतैः परित्यक्तः परिव्रजसि निष्क्रियः ॥ १०
यस्त्वं त्रैविद्यवृद्धानां ब्राह्मणानां सहस्रशः ।
भर्ता भूत्वाऽथ लोकस्य सोऽद्यान्यैर्भृतिमिच्छसि ॥ ११
श्रियं हित्वाऽद्य दीप्तां त्वं श्ववत् सम्प्रतिपत्स्यसे ।
अपुत्रा जननी तेऽद्य कौसल्या पातिता त्वया ॥ १२
आश्रिता धर्मकामास्त्वां क्षत्रियाः पर्युपासते ।
त्वदाशामभिकाङ्क्षन्तः कृपणाः फलहेतुकाः ॥ १३
तांश्च त्वं विफलान् कृत्वा कान्नु लोकान् गमिष्यसि ।
राजन् संशयिते मोक्षे परतन्त्रेषु देहिषु ॥ १४
नैव तेऽस्ति परो लोको नापरः पापकर्मणः ।
धर्म्यान् दारान् परित्यज्य यस्त्वमिच्छसि जीवितुम् ॥ १५
स्रजो गन्धानलङ्कारान् वासांसि विविधानि च ।
किमर्थमभिसन्त्यज्य परिव्रजसि निष्क्रियः ॥ १६

निपानं सर्वभूतानां भूत्वा त्वं पावनं महत् ।
अद्यावनिपतिर्भूत्वा सोऽद्यान्यान् पर्युपाससे ॥ १७

खादन्ति हस्तिनं न्यासे क्रव्यादा बहवोऽप्युत ।
बहवः कृमयश्चैव किं पुनस्त्वामनर्थकम् ॥ १८

य इमां कुण्डिकामात्रां त्रिविष्टब्धं च ते हरेत् ।
वासश्चापहरेत्तस्मिन् कथं ते मानसं भवेत् ॥ १९

यस्त्वं सर्वं समुत्सृज्य धान्यमुष्टिरनुग्रहः ॥ १९॥

यदनेन कृतं सर्वं किमयं मम दीयते ।
धान्यमुष्टेरिहार्थश्चेत् प्रतिज्ञा ते नशिष्यते ॥ २०॥

का वाऽहं तव को मे त्वं कोऽद्य ते मय्यनुग्रहः ।
प्रशाधि पृथिवीं राजन् यत्र तेऽनुग्रहो भवेत् ॥ २१॥

प्रासादे शयनं यानं वासांस्याभरणानि च ॥ २२

श्रियां निराशैरधनैस् त्यक्तमित्रैरकिञ्चनैः ।
सौखिकैस्सम्भृतो योऽर्थस् स सन्त्यजसि किं नु तम् ॥ २३

योऽत्यर्थं प्रतिगृह्णीयाद् यश्च दद्यात् सदैव हि ।
तयोस्त्वमन्तरं विद्धि श्रेयानाभ्यां क उच्यते ॥ २४

सदैव याचमानेषु सत्सु डम्भविवर्जितु ।
एतेषु दक्षिणा दत्ता [1]दानवानां विदुर्हुतम् ॥ २५

1. ख—दावाग्नाविव दुर्हुतम् घ—दावाग्नाविव दुष्कृतम्

जातवेदा यथा राजन् न दग्ध्वा नोपशाम्यति ।
सदैव याचमानो वै तथा शाम्यति नो द्विजः ॥ २६

सतां च वेदा अन्नं च लोकेऽस्मिन् प्रकृतिर्ध्रुवा ।
अन्नदाता भवेद्दाता कुशास्त्रं मोक्षकाङ्क्षिणः ॥ २७

अन्नाद्गृहस्था लोकेऽस्मिन् भिक्षवस्तत एव च ।
अन्नात् प्राणः प्रभवति अन्नदः प्राणदो भवेत् ॥ २८

गृहस्थेभ्योऽभिनिर्वृत्ता गृहस्थानेव चाश्रिताः ।
प्रभवं च प्रतिष्ठां च ज्ञात्वा निन्दन्त आसते ॥ २९

त्यागं न विन्देद् भैक्षाशान्न मौढ्यान्न च याचनात् ।
ऋजुस्तु योऽर्थं त्यजति तं मुक्तं विद्धि भिक्षुकम् ॥ ३०

असक्तस्सक्तवद्गच्छन् निस्सङ्गो मुक्तबन्धनः ।
समः पुत्रे च शत्रौ च स वै मुक्तो महीपते ॥ ३१

परिव्रजन्ति येऽनर्था मुण्डाः काषायवाससः ।
सिता बहुविधैः पाशैर् विचिन्वन्तो वृथामिषम् ॥ ३२

त्रयीं च नामवार्तां च त्यक्त्वा पुत्रान् व्रजन्ति ये ।
त्रिविष्टब्धं च वासश्च प्रतिगृह्णन्त्यबुद्धयः ॥ ३३

अनिष्कषायाः काषायम् ईहार्थमिति विद्धि तम् ।
धर्मध्वजानां मुण्डानां वृत्त्यर्थमिति मे मतिः ॥ ३४

काषायैरजिनैश्चीरैर् नग्नान् मुण्डाञ्जटाधरान् ।

बिभ्रत् साधून् महाराज यथा लोकाञ्जितेन्द्रियः ॥ ३५
अग्न्याधेयानि गुर्वर्थान् क्रतून् सपशुदक्षिणान् ।
ददात्यहरहः पूर्वं को नु धर्मतरस्ततः ॥ ३६

अर्जुनः—

तत्त्वज्ञो जनको राजा लोकेऽस्मिन्निति गीयते ।
सोऽप्यासीन्मोहसम्पन्नो मा मोहवशमन्वगाः ॥ ३७

एवं धर्ममनुक्रान्ता सदा दानतपःपराः ।
आनृशंस्यगुणैर्युक्ताः कामरागविवर्जिताः ॥ ३८

प्रजानां पालने युक्ता दममुत्तममास्थिताः ।
इष्टा लोकमवाप्स्यामो ब्रह्मण्यास्सत्यवादिनः ॥ ३९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
[अस्मिन्नध्याये ३९ श्लोकाः]

---

## ॥ एकोनविंशोऽध्यायः ॥



अर्जुनं प्रति युधिष्ठिरवचनम् ॥

---

युधिष्ठिरः—

वेदाहं तात शास्त्राणि अपराणि पराणि च ।
उभयं वेदवचनं कुरु कर्म त्यजेति च ॥ १

[1]अमूलानि च शास्त्राणि हेतुभिश्चित्रितानि च ।
निश्चयश्चैष यन्मात्रो वेदाहं तं यथाविधि ॥ २

त्वं तु केवलशास्त्रज्ञो वीरव्रतमनुष्ठितः ।
शास्त्रार्थं तत्त्वतो गन्तुं न समर्थः कथञ्चन ॥ ३

शास्त्रार्थतत्त्वदर्शी च धर्मनिश्चयकोविदः ।
तेनाप्येवं न वाच्योऽहं यदि धर्मं प्रपश्यसि ॥ ४

भ्रातृसौहृदमास्थाय यदुक्तं वचनं त्वया ।
न्याय्यं युक्तं च कौन्तेय प्रीतोऽहं तेन तेऽर्जुन ॥ ५

महेश्वरसमं सत्त्वं ब्रह्मणा चैव यत् समम् ।
वासुदेवसमं चैव न भूतं न भविष्यति ॥ ६

तथा त्वं योधमुख्येषु सत्त्वं परममुच्यते ॥ ६॥

बलमिन्द्रे च वायौ च बलं यच्च जनार्दने ।
तद्बलं भीमसेने च त्वयि चार्जुन विद्यते ॥ ७॥

त्वत्समश्चित्रयोधी च दूरपाती च पाण्डव ।
दिव्यास्त्रेण च सम्पन्नः को वाऽन्यस्त्वत्समो नरः ॥ ८॥

युद्धधर्मेषु सर्वेषु क्रियाणां नैपुणेषु च ।
न त्वया सदृशः कश्चित् त्रिषु लोकेषु विद्यते ॥ ९॥

धार्मिकं धर्मयुक्तं च निरशेषं ज्ञायते मया ।

1. ख-ब—आमूलानि

धर्मसूक्ष्मं च यद्वाच्यं तत्र दुष्प्रतरं त्वया ॥ १०॥
धनञ्जय न मे बुद्धिम् अतिशङ्कितुमर्हसि ॥ ११
युद्धशास्त्रविदेव त्वं न वृद्धास्सेवितास्त्वया ।
समासविस्तरविदां न तेषां वेत्सि निश्चयम् ॥ १२
तपस्त्यागो विधिरिति निश्चयस्तात धीमताम् ।
परस्परं ज्याय एषाम् इति नैश्श्रेयसी मतिः ॥ १३
यस्त्वेतन्मन्यसे पार्थ न ज्यायोऽस्ति धनादिति ।
अत्र ते वर्तयिष्यामि यथा नैतत् प्रधानतः ॥ १४
तपस्स्वाध्यायशीला हि दृश्यन्ते धार्मिका जनाः ।
ऋषयस्तत्परा नाम येषां लोकास्सनातनाः ॥ १५
अजातश्मश्रवो धीरास् तथाऽन्ये वनवासिनः ।
अरुणाः केतवश्चैव स्वाध्यायेन दिवं गताः ॥ १६
उत्तरेण तु पन्थानम् आर्या विषयनिग्रहात् ।
अबुद्धिजं तमस्त्यक्त्वा लोकांस्त्यागवतां गताः ॥ १७
दक्षिणेन तु पन्थानं यद् भास्वन्तं प्रपश्यसि ।
एते क्रियावतां लोका ये श्मशानानि भेजिरे ॥ १८
अनिर्देश्या गतिस्सा तु यां प्रपश्यन्ति योगिनः ।
तस्मात् त्यागः प्रधानेष्टस् स तु दुःखं प्रवेदितुम् ॥ १९
व्यनुसृत्य तु शास्त्राणि कवयस्समवस्थिताः ।

अपीह स्यादपीह स्यात् सारासारदिदृक्षया ॥ २०

वेदवादानतिक्रम्य शास्त्राण्यारण्यकानि च ।
विपाट्य कदलीस्कन्धं सारं ददृशिरे न ते ॥ २१

अथैकान्तव्युदासेन शरीरे पाञ्चभौतिके ।
इच्छाद्वेषसमायुक्तम् आत्मानं प्राहुरिङ्गितैः ॥ २२

अग्राह्यं चक्षुषा सत्त्वम् अनिर्देश्यं च तद्गिरा ।
कर्महेतुपुरस्कारं भूतेषु परिवर्तते ॥ २३

कल्याणगोचरं कृत्वा मानं तृष्णां निगृह्य च ।
कर्मसन्ततिमुत्सृज्य स्यान्निरालम्बनस्सुखी ॥ २४

तस्मिन्नेवं सूक्ष्मगम्ये मार्गे सद्भिर्निषेविते ।
कथमर्थमनर्थाढ्यम् अर्जुन त्वं प्रशंससि ॥ २५

पूर्वशास्त्रविदो ह्येव जनाः पश्यन्ति भारत ।
क्रियासु निरता नित्यं दाने यज्ञे च कर्मणि ॥ २६

प्रभवन्ति दुरावर्ता हेतुमन्तोऽपि पण्डिताः ।
दृढपूर्वश्रुता मूर्खा नैतदस्तीति वादिनः ॥ २७

अमृतस्यास्य मन्तारो वक्तारो जनसंसदि ।
चरन्ति वसुधां कृत्स्नां वावदूका बहुश्रुताः ॥ २८

यान् वयं न विजानीमः कस्ताञ् ज्ञातुमिहार्हति ।
एवं प्राज्ञा नराश्चापि बहवश्शास्त्रवित्तमाः ॥ २९

तपसा सुखमाप्नोति बुद्ध्या वै विन्दते महत् ।
त्यागेन महदाप्नोति सदा कौन्तेय धर्मवित् ॥ ३०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
[ अस्मिन्नध्याये ३० श्लोकाः ]

॥ विंशोऽध्यायः ॥



युधिष्ठिरं प्रति देवस्थानस्य वचनम् ॥ १ ॥ इन्द्रबृहस्पतिसंवादानुवादः ॥ २ ॥



वैशम्पायनः—

अस्मिन् वाक्यान्तरे वाक्यं देवस्थानो महातपाः ।
अभिनीततरं वाक्यम् इत्युवाच युधिष्ठिरम् ॥ १

देवस्थानः—

यद्वचः फल्गुनेनोक्तं न ज्यायोऽस्ति धनादिति ।
अत्र ते वर्तयिष्यामि तदेकाग्रमनाश्शृणु ॥ २

अजातशत्रो धर्मेण कृत्स्ना ते पृथिवी जिता ।
तां जित्वा न वृथा राजन् परित्यक्तुमिहार्हसि ॥ ३

चतुष्पदा हि निश्श्रेणी ब्रह्मण्येषा प्रतिष्ठिता ।
तां क्रमेण महाबाहो यथावज्जय पार्थिव ॥ ४

तस्मात् पार्थ महायज्ञैर् यजस्व बहुदक्षिणैः ॥ ४॥

स्वाध्याययज्ञास्त्वृषयो ध्यानयज्ञास्तथाऽपरे ।
कर्मनिष्ठाश्च बुद्ध्यर्थास् तपोनिष्ठाश्च भारत ॥ ५॥

वैखानसानां कौन्तेय वचनं श्रूयते यथा ॥ ६

ईहते धर्महेतोर्यस् तस्यानीहा गरीयसी ।
भूयान् दोषोऽस्य वर्तेत यस्तत् कर्म समाश्रयेत् ॥ ७

कृच्छ्राच्च द्रव्यसंहारं कुर्वन्ति विधिकारणात् ।
आत्मना मुषितो बुद्ध्या भ्रूणहत्यां न बुध्यते ॥ ८

अनर्हते यद्ददाति न ददाति यदर्हते ।
अर्हानर्हापरिज्ञानाद् दानधर्मो हि दुष्करः ॥ ९

इष्टाय सृष्टानि धनानि लोके
यथाऽऽदिष्टः पुरुषो रक्षिता च ।
तस्मात् सर्वं यज्ञ एवोपयोज्यं
धनं ततोऽनन्तर एव कामः ॥ १०

यज्ञैरिन्द्रो विविधै रन्नवद्भिर्
देवान् सर्वानभ्ययाद्भूरितेजाः ।
तेनेन्द्रो द्यां प्राप्य विभ्राजतेऽसौ
तस्माद्यज्ञे सर्वमेवोपयोज्यम् ॥ ११

महादेवस्सर्वमेधे महात्मा
हुत्वाऽऽत्मानं देवदेवो बभूव ।
विश्वान् देवान् व्याप्य विष्टभ्य कीर्त्या
विराजते द्युतिमान् कृत्तिवासाः ॥ १२

आवीक्षितः पार्थिवोऽभून्मरुत्तो
ऋद्ध्या मर्त्यो योऽयजद्देवराजम् ।
यज्ञे यस्य श्रीस्स्वयं सन्निविष्टा
यस्मिन् भाण्डे काञ्चनं सर्वमासीत् ॥ १३

हरिश्चन्द्रः पार्थिवेन्द्रश्श्रुतस्ते
यज्ञैरिष्ट्वा पुण्यकृद्वीतशोकः ।
ऋद्ध्या शक्रं योऽजयन्मानुषस्संस्
तस्माद्यज्ञे सर्वमेवोपयोज्यम् ॥* १४

अत्र चोदाहरन्तीमम् इतिहासं पुरातनम् ।
इन्द्रेण समये पृष्टो यदुवाच बृहस्पतिः ॥ १५

सन्तोषो वै स्वर्गसमस् सन्तोषः परमं सुखम् ।
[1]तुष्टेर्न किञ्चित् परतस् सा सम्यक् प्रतितिष्ठति ॥ १६

यदा संहरते कामान् कूर्मोऽङ्गानीव सर्वशः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

1. क-व—तुष्टा तु ख—तुष्टेन

यदाऽऽत्मज्योतिरात्मान्तर आत्मन्येव प्रसीदति ॥ १७

न बिभेति यदा चासौ यदा चास्मान्न बिभ्यति ।
कामद्वेषौ च जयति तदाऽऽत्मानं प्रपश्यति ॥ १८

यदाऽसौ सर्वभूतानां न द्रुह्यति न तुष्यति ।
कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥ १९

एवं कौन्तेय भूतानि तत्तद्धर्मं तथा तथा ।
तदा तदा प्रशंसन्ति तस्माद्बुध्यस्व भारत ॥ २०

अन्ये शमं प्रशंसन्ति व्यायाममपरे जनाः ।
नैतन्न चापरं केचिद् उभयं च तथाऽपरे ॥ २१

यज्ञमेके प्रशंसन्ति संन्यासमपरे जनाः ।
नैकं न चापरं केचिद् उभयं च तथाऽपरे ॥ २२

दानमेके प्रशंसन्ति केचिच्चैव प्रतिग्रहम् ।
केचित् सर्वं परित्यज्य तूष्णीं ध्यायन्त आसते ॥ २३

राज्यमेके प्रशंसन्ति प्रजानां परिपालनात् ।
हित्वा हित्वा च जित्वा च केचिदेकान्तशीलिनः ॥ २४

एतत् सर्वं समालोक्य बुधानामेष निश्चयः ।
अद्रोहेणैव भूतानां यो धर्मस्स सतां मतः ॥ २५

अद्रोहस्सत्यवचनं संविभागो दमः क्षमा ।
प्रजनं स्वेषु दारेषु मार्दवं ह्रीरचापलम् ॥ २६

एवं धर्मं प्रधानेष्टं मनुस्स्वायम्भुवोऽब्रवीत् ।
तस्मादेतत् प्रयत्नेन कौन्तेय परिपालयेत् ॥ २७

यो हि राज्ये स्थितश्शश्वद् वशी तुल्यप्रियाप्रियः ।
क्षत्रियो यज्ञशिष्टाशी राजा शास्त्रार्थतत्त्ववित् ॥ २८

असाधुनिग्रहरतस् साधूनां प्रग्रहे रतः ।
धर्मवर्त्मनि संस्थाप्य प्रजा वर्तेत धर्मवित् ॥ २९

पुत्रसङ्क्रामितश्रीश्च वने वन्येन वर्तयेत् ।
विधानमाश्रमाणां वै कुर्वन् कालमतन्द्रितः ॥ ३०

य एवं वर्तते राजा राजधर्मविनिश्चितः ।
तस्यायं च परश्चैव लोकस्स्यात् सफलो नृप ॥ ३१

निर्वाणं हि सुदुष्प्रापं बहुविघ्नं च मे मतम् ॥ ३१॥

एवं धर्ममनुक्रान्तास् सत्यदानतपःपराः ।
आनृशंस्यगुणैर्युक्ताः कामक्रोधविवर्जिताः ॥ ३२॥

प्रजानां पालने युक्ता [1]धर्ममुत्तममास्थिताः ।
गोब्राह्मणार्थे युध्यन्तस् सम्प्राप्य गतिमुत्तमाम् ॥ ३३॥

एवं रुद्रास्सवसवस् तथाऽऽदित्याः परन्तप ।

---

1. ख-ब—दम

साध्या राजर्षिसङ्घाश्च [1]धर्ममेतं समाश्रिताः ॥ ३४॥
अप्रमत्तास्ततस्स्वर्गं प्राप्ताः पुण्यैस्स्वकर्मभिः ॥ ३५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि विंशोऽध्यायः ॥ २० ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि विंशोऽध्यायः ॥ २० ॥
[ अस्मिन्नध्याये ३५ श्लोकाः ]

---

## ॥ एकविंशोऽध्यायः ॥



युधिष्ठिरं प्रत्यर्जुनवचनम् ॥

---

वैशम्पायनः—

अस्मिन् वाक्यान्तरे वाक्यं पुनरेवार्जुनोऽब्रवीत् ।
निर्विण्णमनसं ज्येष्ठम् इदं भ्रातरमच्युतम् ॥ १

अर्जुनः—

क्षत्रधर्मेण धर्मज्ञ प्राप्य राज्यं सुदुर्लभम् ।
जित्वा चारीन् नरश्रेष्ठ तप्यते किं भवान् भृशम् ॥ २

क्षत्रियाणां महाराज सङ्ग्रामे निधनं स्मृतम् ।
विशिष्टं बहुभिर्यज्ञैः क्षत्रधर्ममनुस्मर ॥ ३

ब्राह्मणानां जपस्त्यागः प्रेत्य धर्मविधिस्स्मृतः ।
क्षत्रियाणां हि निधनं सङ्ग्रामे विहितं प्रभो ॥ ४

---

1. ख—शर्मं घ—शम

क्षात्रधर्मो महारौद्रश् शस्त्रधर्म इति स्मृतः ।
वधश्च भरतश्रेष्ठ काले शस्त्रेण संयुगे ॥ ५

ब्राह्मणस्यापि चेद्राजन् क्षत्रधर्मेण वर्ततः ।
प्रशस्तं जीवितं लोके क्षत्रं हि ब्रह्मसंहितम् ॥ ६

न त्यागो न पुनर्यज्ञो न तपो मनुजेश्वर ।
क्षत्रियस्य विधीयन्ते न परस्वोपजीवनम् ॥ ७

स भवान् सर्वधर्मज्ञो धर्मात्मा भरतर्षभ ।
राजा मनीषी निपुणो दृष्टलोकपरावरः ॥ ८

त्यक्त्वा सन्तापजं शोकं दंशितो भव कर्मणि ।
क्षत्रियस्य विशेषेण हृदयं वज्रसंहितम् ॥ ९

जित्वाऽरीन् क्षत्रधर्मेण प्राप्य राज्यमकण्टकम् ।
विजितात्मा मनुष्येन्द्र यज्ञदानपरो भव ॥ १०

इन्द्रो वै ब्रह्मणः पुत्रः क्षत्रियः कर्मणाऽभवत् ।
ज्ञातीनां पापवृत्तानां जघान नवतीर्नव ॥ ११

तच्चास्य कर्म पूज्यं च प्रशस्तं च विशां पते ।
तेन चेन्द्रत्वमापेदे देवानामिति नश्श्रुतिः ॥ १२

स त्वं यज्ञैर्बहुविधैर् यजस्व बहुदक्षिणैः ।
यथैवेन्द्रो मनुष्येन्द्र चिराय विगतज्वरः ॥ १३

मा त्वमेवं गते किञ्चित् क्षत्रियर्षभ शोचथाः ।
गतास्ते क्षत्रधर्मेण शस्त्रपूताः परां गतिम् ॥ १४

भवितव्यं तथा तच्च यद्वृत्तं भरतर्षभ ।
दिष्टं हि राजशार्दूल न शक्यमतिवर्तितुम् ॥ १५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
[ अस्मिन्नध्याये १५ श्लोकाः ]

---

## ॥ द्वाविंशोऽध्यायः ॥

---

व्यासेन युधिष्ठिरं प्रति शङ्खलिखितोपाख्यानकथनपूर्वकं क्षात्रधर्म-स्वीकरणचोदना ॥

---

वैशम्पायनः—

एवमुक्तस्तु कौन्तेयो गुडाकेशेन भारत ।
नोवाच किञ्चित् कौरव्यस् ततो द्वैपायनोऽब्रवीत् ॥ १

व्यासः—

बीभत्सोर्वचनं सौम्य सत्यमेतद्युधिष्ठिर ।
शास्त्रदृष्टः परो धर्मस् स्मृतो गार्हस्थ्य आश्रमः ॥ २

स्वधर्मं चर धर्मज्ञ शास्त्रदृष्टं यथाविधि ।

[1]न हि गार्हस्थ्यमुत्सृज्य तवारण्यं विधीयते ॥ ३
वयांसि पशवश्चैव भूतानि च जनाधिप ।
गृहस्थैरेव धार्यन्ते तस्माच्छ्रेष्ठो गृहाश्रमः ॥ ४
सोऽयं चतुर्णामेतेषाम् आश्रमाणां दुराचरः ।
तं चराविमनाः पार्थ दुश्चरं दुर्बलेन्द्रियैः ॥ ५
वेदज्ञानं हि ते कृत्स्नं तपश्च चरितं महत् ।
पितृपैतामहं राज्यं धुर्यवद्वोढुमर्हसि ॥ ६
तपो यज्ञस्तथा विद्या भैक्ष्यमिन्द्रियसंयमः ।
ध्यानं विद्या समुत्थानं सन्तोषश्च श्रियं प्रति ॥ ७
वेदज्ञानं तथा कृत्स्नं तपस्सुचरितं तथा ।
तथा ह्येकान्तशीलत्वं तुष्टिर्दानं च शक्तितः ॥ ८
ब्राह्मणानां महाराज चेष्टा संसिद्धिकारिका ॥ ८॥
क्षत्रियाणां तु वक्ष्यामि त्वयाऽपि विदितं पुनः ॥ ९
यज्ञो विद्या समुत्थानम् असन्तोषश्श्रियं प्रति ।
दण्डधारणमुग्रत्वं प्रजानां परिपालनम् ॥ १०
वेदज्ञानं तथा कृत्स्नं तपस्सुचरितं महत् ।
द्रविणं स्वार्जितं भूरि सम्यग्वै दण्डधारणम् ॥ ११
एतानि लोके चत्वारि सुकृतानि विशां पते ।

1. ख—गृहिणं हि सदा देवाः पितरोऽतिथयस्तथा ।
भृत्याश्चैवोपलिप्सन्ते तान् भरस्व महीपते ॥ [अधिकः पाठः]

साधयन्ते परे लोके मानवानिति नश्श्रुतम् ॥ १२
एषां ज्यायश्च कौन्तेय दण्डधारणमुच्यते ।
बलं हि क्षत्रिये नित्यं बले दण्डस्समाहितः ॥ १३
एताश्चेष्टाः क्षत्रियाणां राजन् संसिद्धिकारिकाः ।
अपि गाथामिमां चात्र बृहस्पतिरगायत ॥ १४
भूमिरेतौ निगिरति सर्पौ बिलशयाविव ।
राजानं चाप्ययोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ १५
सुद्युम्नश्चापि राजर्षिश् श्रूयते दण्डधारणात् ।
प्राप्तवान् परमां सिद्धिं दक्षः प्राचेतसो यथा ॥* १६

युधिष्ठिरः—

भगवन् कर्मणा केन सुद्युम्नो वसुधाधिपः ।
सिद्धिं परमिकां प्राप्तश् श्रोतुमिच्छामि तं नृपम् ॥ १७

व्यासः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
शङ्खश्च लिखितश्चास्तां भ्रातरौ संशितव्रतौ ॥ १८
तयोरावसथावास्तां रमणीयौ पृथक् पृथक् ।
नित्यपुष्पफलैर्वृक्षैर् उपेतौ बाहुदामनु ॥ १९
ततः कदाचिल्लिखितश् शङ्खस्याश्रममागमत् ।
यदृच्छयाऽथ शङ्खोऽपि निष्क्रान्तोऽभवदाश्रमात् ॥ २०

---

सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

सोऽभिगम्याश्रमं भ्रातुश् चक्रूमँल्लिखितस्तदा ।
फलानि शातयामास सम्यक् परिणतान्युत ॥ २१

तान्युपादाय विस्रब्धो भक्षयामास स द्विजः ।
तस्मिंश्च भक्षयत्येव शङ्खोऽप्याश्रममागमत् ॥ २२
भक्षयन्तं तदा दृष्ट्वा शङ्खो भ्रातरमब्रवीत् ॥ २२॥

शङ्खः—
कुतः फलान्यवाप्तानि खादसे केन हेतुना ॥ २३

व्यासः—
सोऽब्रवीद्भ्रातरं ज्येष्ठम् उपस्पृश्याभिवाद्य च ।
इत एव गृहीतानि मयेति प्रहसन्निव ॥ २४

तमब्रवीच्चतरशङ्खस् तीव्रकोपसमन्वितः ॥ २४॥

शङ्खः—
स्तेयं त्वया कृतमिदं फलान्याददता स्वयम् ॥ २५
गच्छ राजानमासाद्य स्वकर्म प्रथयस्व वै ।
अदत्तादानमेवं मे कृतं पार्थिवसत्तम ॥ २६

स्तेनं मां त्वं विदित्वा च स्वधर्ममनुपालय ।
शीघ्रं धारय चोरस्य मम दण्डं नराधिप ॥ २७

व्यासः—
इत्युक्तस्तस्य वचनात् सुद्युम्नं वसुधाधिपम् ।
अभ्यगच्छन्महाभागो लिखितस्संशितव्रतः ॥ २८
सुद्युम्नो द्वारपालेभ्यश् श्रुत्वा लिखितमागतम् ।

अभ्यगच्छत् सहामात्यः पद्भ्यामेव नराधिप ॥ २९

तमब्रवीत् समागम्य राजा ब्राह्मणसत्तमम् ॥ २९॥

सुद्युम्नः—

किमागमनमाचक्ष्व भगवन् कृतमेव तत् ॥ ३०

व्यासः—

एवमुक्तस्स विप्रर्षीः राजानमिदमब्रवीत् ॥ ३०॥

लिखितः—

प्रतिश्रुत्य करिष्येति श्रुत्वा तत् कर्तुमर्हसि ॥ ३१

अनिसृष्टानि गुरुणा फलानि पुरुषर्षभ ।

भक्षितानि मया राजंस् तत्र मां शाधि मा चिरम् ॥ ३२

सुद्युम्नः—

प्रमाण चेन्मतो राजा भवतो दण्डधारणे ।

अनुज्ञापयामि तथा हेतुस्स्याद्ब्राह्मणर्षभ ॥ ३३

भगवानभ्यनुज्ञातश् शुचिकर्मा महाव्रतः ।

ब्रूहि कामानतोऽन्यांस्त्वं करिष्यामि हि ते वचः ॥ ३४

व्यासः—

सञ्चोद्यमानो विप्रर्षिः पार्थिवेन महात्मना ।

नान्यं च वरयामास तस्माद्दण्डादृते वरम् ॥ ३५

ततस्स पृथिवीपालो लिखितस्य महात्मनः ।

करौ प्रच्छेदयामास धृतदण्डो जगाम सः ॥ ३६

स गत्वा भ्रातरं शङ्खम् आर्तरूपोऽब्रवीदिदम् ॥ ३६॥

राजा—

धृतदण्डस्य भगवन् मम त्वं क्षन्तुमर्हति ॥ ३७

शङ्खः—

न कुप्ये तव धर्मज्ञ न त्वं दूषयसे मम ।
सुनिर्मलं कुलं ब्रह्मन् अस्मिञ्जगति विश्रुतम् ॥ ३८

धर्मस्त्वया हतो भूयांस् ततस्ते निष्कृतिः कृता ॥ ३८॥

त्वं गत्वा बाहुदां शीघ्रं तर्पयस्व यथाविधि ।
देवानृषीन् पितॄंश्चैव मा चाधर्मे मनः कृथाः ॥ ३९॥

ब्रह्महत्यां सुरापानं स्तेयं गुर्वङ्गनागमम् ।
महान्ति पातकान्याहुस् संयोगं चैव तैस्सह ॥ ४०॥

न स्तेयसदृशं ब्रह्मन् महापातकमस्ति हि ।
जगत्यस्मिन् महाभाग ब्रह्महत्यासमं हि तत् ॥ ४१॥

सर्वपातकिनां ब्रह्मन् दण्डश्शारीर उच्यते ।
तस्करस्य विशेषेण नान्यो दण्डो विधीयते ॥ ४२॥

ब्राह्मणः क्षत्रियो वाऽपि वैश्यश्शूद्रोऽथवा द्विज ।
सर्वे कामकृते पापे हन्तव्या न विचारणा ॥ ४३॥

राजभिर्धृतदण्डा वै कृत्वा पापानि मानवाः ।
निर्मलास्स्वर्गमायान्ति सन्तस्सुकृतिनो यथा ॥ ४४॥

उद्धृतं नः कुलं ब्रह्मन्नाज्ञादण्डे धृते त्वयि ॥ ४५

व्यासः—

तस्य तद्वचनं श्रुत्वा शङ्खस्य लिखितस्तदा ।
अवगाह्यापगां पुण्याम् उदकार्थं प्रचक्रमे ॥ ४६

प्रादुरास्तां करौ तस्य ततो जलजसन्निभौ ।
ततस्स [1]विस्मितो भ्रातुर् दर्शयामास तौ करौ ॥ ४७

ततस्तमब्रवीच्छङ्खस् तपसेदं कृतं मया ।
मा च तेऽत्र विशङ्का भूद् दैवमत्र विधीयते ॥ ४८

लिखितः—

किं नु नाहं त्वया पूतः पूर्वमेव महाद्युते ।
यस्य ते तपसो वीर्यम् ईदृशं द्विजसत्तम ॥ ४९

शङ्खः—

एवमेतन्मया कार्यं नाहं दण्डधरस्तव ।
स च पूतो नरपतिस् त्वं चापि पितृभिस्सह ॥ ५०

व्यासः—

स राजा पाण्डवश्रेष्ठ श्रेयानेतेन कर्मणा ।
प्राप्तवान् परमां सिद्धिं दक्षः प्राचेतसो यथा ॥ ५१

एष धर्मः क्षत्रियाणां प्रजानां परिपालनम् ।
उत्पथेभ्यो महाराज मा स्म शोके मनः कृथाः ॥ ५२

भ्रातुरस्य हितं वाक्यं शृणु पाण्डव तत्त्वतः ।
दण्ड एव हि राजेन्द्र क्षत्रधर्मो न मुण्डनम् ॥ ५३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
[अस्मिन्नध्याये ५३ श्लोकाः]

1. क-ख-ब—विस्मयो

## ॥ त्रयोविंशोऽध्यायः ॥

व्यासेन युधिष्ठिरं प्रति राजधर्मकथनपूर्वकं राज्यपालनचोदना ॥

वैशम्पायनः—

पुनरेव महर्षिस्तं कृष्णद्वैपायनोऽब्रवीत् ।
अजातशत्रुं कौन्तेयम् इदं वचनमर्थवत् ॥ १

व्यासः—

अरण्ये वसतां तात भ्रातॄणां ते तपस्विनाम् ।
मनोरथा महाराज ये तत्रासन् युधिष्ठिर ॥ २
तानिमे भरतश्रेष्ठ प्राप्नुवन्तु महारथाः ॥ २॥
प्रशाधि पृथिवीं पार्थ ययातिरिव नाहुषः ॥ ३

अरण्ये दुःखवसतिर् अनुभूता तपस्विभिः ।
दुःखस्यान्ते नरव्याघ्रास् सुखान्यनुभवन्त्विमे ॥ ४

धर्ममर्थं च कामं च भ्रातृभिस्सह भारत ।
अनुभूय ततः पश्चात् प्रस्थास्यसि विशां पते ॥ ५

अतिथीनां पितॄणां च देवतानां च भारत ।
आनृण्यं गच्छ कौन्तेय ततस्स्वर्गं गमिष्यसि ॥ ६

सर्वमेधाश्वमेधाभ्यां यजस्व कुरुपुङ्गव ।
ततः पश्चान्महाराज गमिष्यसि परां गतिम् ॥ ७
भ्रातॄंश्च सर्वान् क्रतुभिस् संयोज्य बहुदक्षिणैः ।

सम्प्राप्य कीर्तिमतुलां पाण्डवेय गमिष्यसि ॥ ८

विद्यते पुरुषव्याघ्र वचनं कुरुपुङ्गव ।
शृणुष्व च यथा कुर्वन् धर्मान्न चलसे नृप ॥ ९

आददानस्य विजयं विग्रहं च युधिष्ठिर ।
समानधर्मकुशलास् स्थापयन्ति नरेश्वर ॥ १०

प्रत्यक्षमनुमानं च उपमानं तथाऽऽगमः ।
अर्थापत्तिस्तथैतिह्यं संशयो निर्णयस्तथा ॥ ११

आकारो ह्यिङ्गितश्चैव गतिश्चेष्टा च भारत ।
प्रतिज्ञा चैव हेतुश्च दृष्टान्तोपनयस्तथा ॥ १२

उक्तं निगमनं तेषां प्रमेयं च प्रयोजनम् ।
एतानि साधनान्याहुर् बहुवर्गप्रसिद्धये ॥ १३

प्रत्यक्षमनुमानं च सर्वेषां योनिरिष्यते ।
प्रमाणज्ञो हि शक्नोति दण्डनीतौ विचक्षणः ॥ १४
अप्रमाणवता नीतो दण्डो हन्यान्महीपतिम् ॥ १४॥
देशकालप्रतीक्षो यश् शत्रूंस्तान् हर्षयेन्नृप ।
शास्त्रजां बुद्धिमास्थाय संयुज्येतैनसा न सः ॥ १५॥
आददद् बलिषड्भागं यो राष्ट्रं नाभिरक्षति ।
प्रतिगृह्णाति तत्पापं चतुर्थांशेन पार्थिवः ॥ १६॥
निबोध च यथाऽऽतिष्ठन् धर्मान्न चलते पथः ।

निग्रहाद्धर्मशास्त्राणाम् अविरुद्धन्नपेतभीः ॥ १७॥

कामक्रोधावनादृत्य पितेव समदर्शनः ॥ १८

दैवेनाभ्याहतो राजा कर्मकाले महाद्युते ।
यन्न साधयते कर्म न तत्राहुर्व्यतिक्रमम् ॥ १९

तरसा बुद्धिपूर्वं वा निग्राह्या एव शत्रवः ।
पापैस्सह न सन्दध्याद् राष्ट्रं पश्यन्न कारयेत् ॥ २०

शूरान् धर्मांश्च सत्कुर्याद् विद्वांसश्च युधिष्ठिर ।
[1]गोमिनो धनिनश्चैव परिपाल्या विशेषतः ॥ २१

व्यवहारेषु योक्तव्याः प्रष्टव्याश्च बहुश्रुताः ।
प्रमाणज्ञा महीपाल न्यायशास्त्रावलम्बिनः ॥ २२

वेदार्थतत्त्वविद्राजंस् तर्कशास्त्रबहुश्रुताः ।
मन्त्रे च व्यवहारे च नियोक्तव्या विजानता ॥ २३

तर्कशास्त्रकृता बुद्धिर् धर्मशास्त्रकृता च या ।
दण्डनीतिकृता चैव त्रैलोक्यमपि साधयेत् ॥ २४

नियोज्या वेदतत्त्वज्ञा यज्ञकर्मसु पार्थिव ।
वेदज्ञा ये च शास्त्रज्ञास् ते च राजन् सुबुद्धयः ॥ २५

आन्वीक्षकीत्रयीवार्तादण्डनीतिषु पारगाः ।
ते तु सर्वत्र योक्तव्यास् ते च बुद्धेः परं गताः ॥ २६

---

1. अ-क—योगिनो

गुणयुक्तेऽपि नैकस्मिन् विश्वसीत विचक्षणः ॥ २६॥

अरक्षिता दुर्विनीतो मानी स्तब्धोऽभ्यसूयकः ।
एनसा युज्यते राजा दुर्दान्त इति चोच्यते ॥ २७॥

ये रक्ष्यमाणा हीयन्ते दैवेनाभ्याहता नृप ।
तस्करैश्चापि मृद्यन्ते सर्वं तद्राजकिल्बिषम् ॥ २८॥

सुमन्त्रिते सुनीते च न्यायतश्चोपपादिते ।
पौरुषे कर्मणि कृते नास्त्यधर्मो युधिष्ठिर ॥ २९॥

विपद्यन्ते च कर्माणि सिद्ध्यन्त्यपि च दैवतः ।
कृते पुरुषकारे तु नैनस्स्पृशति पार्थिवम् ॥ ३०॥

अत्र ते राजशार्दूल कथयिष्ये कथामिमाम् ।
यद्वृत्तं पूर्वराजर्षेर् हयग्रीवस्य पार्थिव ॥ ३१॥

शत्रून् हत्वा हतस्याजौ शूरस्याक्लिष्टकर्मणः ।
असहायस्य वीरस्य निर्जितस्य युधिष्ठिर ॥ ३२॥

यत् कर्म वै निग्रहे शात्रवाणां
योगश्चाग्र्यः पालने मानवानाम् ।
कृत्वा कर्म प्राप्य कीर्तिं प्रयुद्धे
वाजिग्रीवो मोदते देवलोके ॥ ३३॥

सन्त्यक्तात्मा समरे चाततायी
शस्त्रैश्छिन्नो दस्युभिर्युध्यमानः ।

अश्वग्रीवः पुण्यशीलो महात्मा
　　संसिद्धात्मा मोदते देवलोके ॥ ३४॥

धनुर्यूपो रशना ज्या शरस्स्रुक्
　　स्रुवः खड्गो रुधिरं यत्र चाज्यम् ।
रथो वेदिः कामगो युद्धमग्निश्
　　चातुर्होत्रं चतुरो वाजिमुख्याः ॥ ३५॥

हुत्वा तस्मिन् [1]यज्ञवह्नावराती
　　पाशान्मुक्त्वा राजसिंहस्तरस्वी ।
प्राणान् हुत्वा चावभृथे रणेषु
　　वाजिग्रीवो मोदते देवलोके ॥ ३६॥

[2]राष्ट्रं रक्षन् बुद्धिपूर्वं नयेन
　　सन्त्यक्तात्मा यज्ञशीलो महात्मा ।
सर्वाँल्लोकान् व्याप्य कीर्त्या मनस्वी
　　वाजिग्रीवो मोदते देवलोके ॥ ३७॥

दैवीं सिद्धिं मानुषीं दण्डनीत्या
　　योगन्यायैः पालयित्वा महीं च ।
तस्माद्राजा धर्मशीलो महात्मा
　　वाजिग्रीवो मोदते देवलोके ॥ ३८॥

---

1. क-ख—श्वाजि　　घ—ध्वाजि
2. ख—अर्धद्वयं नास्ति

विद्वांस्त्यागी श्रद्दधानः कृतज्ञस्
त्यक्त्वा लोकं मानुषं कर्म कृत्वा ।
मेधाविनां विदुषां सम्मतानां
तनुत्यजां लोकमाक्रम्य राज्ञाम् ॥ ३९॥

सम्यग्वेदान् प्राप्य शास्त्राण्यधीत्य
सम्यग्राज्यं पालयित्वा महात्मा ।
चातुर्वर्ण्यं स्थापयित्वा स्वधर्मे
वाजिग्रीवो मोदते देवलोके ॥ ४०॥

[1]वृत्तं यस्य श्लाघनीयं मनुष्यास्
सन्तो विद्वांसोऽर्हयन्त्यर्हणीयम् ।
स्वर्गं जित्वा वीरलोकानवाप्य
सिद्धिं प्राप्तः पुण्यकीर्तिर्महात्मा ॥ ४१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
॥ अस्मिन्नध्याये ४१॥ श्लोकाः ॥

---

1. ख—जित्वा सङ्ग्रामान् पालयित्वा स्वराष्ट्रं
सोमं पीत्वा तर्पयित्वा द्विजाग्र्यान् ।
युक्त्या दण्डं धारयित्वा प्रजानां
युद्धे क्षीणे मोदते देवलोके ॥ [अधिकः पाठः]

## ॥ चतुर्विंशोऽध्यायः ॥



व्यासेन युधिष्ठिरं प्रति सेनजिद्वचनानुवादपूर्वकं राजधर्मकथनम् ॥

---

**वैशम्पायनः—**

द्वैपायनवचश्श्रुत्वा कुपिते च धनञ्जये ।
व्यासमामन्त्र्य कौरव्यः प्रत्युवाच युधिष्ठिरः ॥ १

**युधिष्ठिरः—**

न पार्थिवमिदं राज्यं न च भोगाः पृथग्विधाः ।
प्रीणयन्ति मनो मेऽद्य शोको मां दारयत्ययम् ॥ २

श्रुत्वा वीरविहीनानां विपुत्राणां च योषिताम् ।
परिदेवयमानानां न शान्ति मनसा लभे ॥ ३

**वैशम्पायनः—**

इत्युक्तः प्रत्युवाचेदं व्यासो योगविदां वरः ।
युधिष्ठिरं महाभागं धर्मज्ञो धर्मपारगः ॥ ४

**व्यासः—**

न कर्मणा लभ्यते चिन्तया वा
नाप्यस्य कश्चित् पुरुषस्य दाता ।
पर्याययोगाद्विहितं विधात्रा
कालेन सर्वं लभते मनुष्यः ॥ ५

न बुद्धि[1]शक्त्याऽध्ययनेन शक्यं
प्राप्तुं विशेषं मनुजैरकाले ।
मूर्खोऽपि चाप्नोति कदाचिदर्थान्
कालो हि सर्वं पुरुषस्य दाता ॥ ६

न भूरकालेषु फलं ददाति
शिल्पानि मन्त्राणि तथौषधानि ।
तान्येव कालेन समाहितानि
सिद्ध्यन्ति चैधन्ति च भूतिकाले ॥ ७

कालेन शीघ्रं प्रवहन्ति वाताः
कालेन वृष्टिर्जलदानुपैति ।
कालेन पद्मोत्पलवत्य आपः
कालेन पुष्यन्ति नगा वनेषु ॥ ८

कालेन कृष्णाश्च सिताश्च रात्र्यः
कालेन चन्द्रः परिपूर्णरश्मिः ।
नाकालतः पुष्पफलं द्रुमाणां
नाकालवेगास्सरितो वहन्ति ॥ ९

नाकालमत्ताः खगपन्नगाश्च
वनद्विपाश्शैलमृगाश्च लोके ।

1. क—शाखा

नाकालतस्त्रीषु भवन्ति गर्भा
नायान्त्यकाले शिशिरोष्णवर्षाः ॥ १०

नाकालतो म्रियते जायते वा
नाकालतो व्याहरते च बालः ।
नाकालतो यौवनमभ्युपैति
नाकालतो रोहति बीजमुप्तम् ॥ ११

नाकालतो भानुरुपैति योगं
नाकालतोऽस्तं गिरिमभ्युपैति ।
नाकालतो वर्धते हीयते वा
चन्द्रस्समुद्रश्च महोर्मिमालः ॥ १२

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
गीतं सेनजिता राज्ञा दुःखार्तेन युधिष्ठिर ॥ १३

सर्वानेवैष पर्यायो मर्त्यान् स्पृशति दुस्तरः ।
कालेन परिपक्वाश्च म्रियन्ते चापि मानवाः ॥ १४

घ्नन्ति चान्ये नरान् राजंस् तानप्यन्ये तथा नराः ।
संज्ञैषा लौकिकी राजन् न निहन्ति न हन्यते ॥ १५

हन्तीति मन्यते कश्चिन्न हन्तीत्यपि चापरः ।
स्वभावतस्तु नियतौ भूतानां प्रभवाप्ययौ ॥ १६

नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।

अहो दुःखमिति ध्यात्वा दुःखस्यापचितिं चरेत् ॥ १७

कथं मुह्यसि मूढस्सन् शोच्यान् किमनुशोचसि ।
पश्य दुःखानि दुःखेषु भयेष्वतिभयान्यपि ॥ १८

आत्माऽपि चायं न मम सर्वाऽपि पृथिवी मम ।
यथा मम तथा ह्येषाम् इति पश्यन् न मुह्यति ॥ १९

शोकस्थानसहस्राणि [1]भयस्थानशतानि च ।
दिवसे दिवसे मूढम् आविशन्ति न पण्डितम् ॥ २०

एवमेतानि कालेन प्रियद्वेष्याणि भागशः ।
जीवेषु परिवर्तन्ते दुःखानि च सुखानि च ॥ २१

दुःखमेवास्ति न सुखं तस्मात् तदुपलभ्यते ।
तृष्णार्तिप्रभवं दुःखं [2]दुःखार्तिप्रभवं सुखम् ॥ २२

सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
न नित्यं लभते दुःखं न नित्यं लभते सुखम् ॥ २३

सुखमेव हि दुःखान्तं कदाचि[3]द्दुःखिनस्सुखम् ।
तस्मादेतद्द्वयं जह्याद् य इच्छेद्भूतिमात्मनः ॥ २४

यन्निमित्तं भवेच्छोकस् तापो वा दुःखमेव वा ।
आयासो वा यतोमूलस् तदेकाङ्गमपि त्यजेत् ॥ २५

1. अ—हर्ष 2. ब—सुखार्ति
3. अ—दुःखत

सुखं वा यदि वा दुःखं प्रियं वा यदि वाऽप्रियम् ।
प्राप्तं प्राप्तमुपासीत हृदयेनाविदूयता ॥ २६

ईषदप्यङ्ग दाराणां पुत्राणां वाऽऽचरन् प्रियम् ।
ततो ज्ञास्यसि कः कस्य केन वा कथमेव वा ॥ २७

ये च मूढतमा लोके ये च बुद्धेः परं गताः ।
त एव सुखमेधन्ते मध्यः क्लेशेन युज्यते ॥ २८

भीष्मः—

इत्यब्रवीन्महाप्राज्ञो युधिष्ठिर स सेनजित् ।
परावरज्ञो लोकस्य स राजा सुखदुःखवित् ॥ २९

परदुःखेन यो दुःखी न स जातु सुखी भवेत् ।
दुःखानां हि क्षयो नास्ति जायते ह्यपरावरम् ॥ ३०

सुखं च दुःखं च भवाभवौ च
लाभालाभौ मरणं जीवितं च ।
पर्यायतस्सर्वमिहाप्नुवन्ति
तस्मान्न मुह्येन्न च सम्प्रहृष्येत् ॥ ३१

दीक्षां राज्ञां संयुगे धर्ममाहुर्
योगं राष्ट्रे दण्डनीतिं च सम्यक् ।
वित्तत्यागं दक्षिणां चैव यज्ञे
सम्यग्दानं पावनानीति विद्यात् ॥ ३२

रक्षन् राष्ट्रं बुद्धिपूर्वं नयेन
सन्त्यक्तात्मा यज्ञशीलो महात्मा ।
सर्वाँल्लोकान् धर्मदृष्ट्याऽवलोक-
न्नूर्ध्वं देहान्मोदते देवलोके ॥ ३३

जित्वा सङ्ग्रामं पालयित्वा च राष्ट्रं
सोमं पीत्वा वर्धयित्वा प्रजाश्च ।
युक्त्या दण्डं धारयित्वा प्रजानां
पश्चात् क्षीणायुर्मोदते देवलोके ॥ ३४

यजन्ति यज्ञान् विजयन्ति राज्यं
रक्षन्ति राष्ट्राणि प्रियाणि चैषाम् ॥ ३४॥

[1]सम्यग्वेदान् सर्वशास्त्राण्यधीत्य
सम्यग्राष्ट्रं पालयित्वा प्रजाश्च ।
चातुर्वर्ण्यं शास्त्रदृष्ट्या निवेश्य
पूतात्मा वै मोदते देवलोके ॥ ३५॥

यस्य वृत्तं नमस्यन्ति स्वर्गस्थस्यापि मानवाः ।
पौरजानपदामात्यास् स राजन् राजसत्तमः ॥ ३६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
[ अस्मिन्नध्याये ३६ श्लोकाः ]

---

1. ख—अर्धद्वयं नास्ति

## ॥ पञ्चविंशोऽध्यायः ॥



युधिष्ठिरेण व्यासं प्रति निर्वेदवचनम् ॥ १ ॥ व्यासेन युधिष्ठिरं प्रति राज्यपालनविधानम् ॥ २ ॥

---

युधिष्ठिरः—

अभिमन्यौ हते बाले द्रौपद्यास्तनयेषु च ।
धृष्टद्युम्ने विराटे च द्रुपदे च महीपतौ ॥ १

वसुषेणे च धर्मज्ञे धृष्टकेतौ च चेदिपे ।
तथाऽन्येषु नरेन्द्रेषु नानादेश्येषु संयुगे ॥ २

न विमुञ्चति मां शोको ज्ञातिघातिनमातुरम् ।
राज्यकामुकमत्युग्रं स्ववंशोत्सादकारकम् ॥ ३

यस्याङ्के क्रीडमानेन मया विपरिवर्तितम् ।
स मया राज्यलुब्धेन गाङ्गेयो युधि पातितः ॥ ४

यदा ह्येनं विघूर्णन्तं मदर्थे पार्थसायकैः ।
[1]तक्ष्यमाणं यथा वज्रैः प्रेक्षमाणं शिखण्डिनम् ॥ ५

जीर्णं सिंहमिव प्राज्ञं नरसिंहं पितामहम् ।
कीर्यमाणं शरैर्दीप्तैर् दृष्ट्वा मे व्यथितं मनः ॥ ६

प्राङ्मुखं सीदमानं च रथात् पररथारुजम् ।

---

1. क—धक्ष्यमाणं

घूर्णमानं यथा शैलं तदा मे कश्मलोऽभवत् ॥ ७

यस्स बाणधनुष्पाणिर् योधयामास भार्गवम् ।
बहून्यहानि कौरव्यः कुरुक्षेत्रे महामृधे ॥ ८

समेतं पार्थिवं क्षत्रं वाराणस्यां नदीसुतः ।
कन्यार्थमाह्वयद्वीरो रथेनैकेन संयुगे ॥ ९

येन चोग्रायुधो राजा चक्रवर्ती दुरासदः ।
दग्धश्शस्त्रप्रतापेन स मया युधि पातितः ॥ १०

स्वयं मृत्युं रक्षमाणः पाञ्चाल्यं यश्शिखण्डिनम् ।
न बाणैः पातयामास सोऽर्जुनेन निपातितः ॥ ११

यदैनं पतितं भूमावपश्यं रुधिरोक्षितम् ।
तदैवाविशदत्युग्रो ज्वरो मां मुनिसत्तम ॥ १२

येन संवर्धिता बाला येन स्म परिरक्षिताः ।
स मया राज्यलुब्धेन पापेन गुरुघातिना ॥ १३
अल्पकालस्य राज्यस्य कृते मूढेन पातितः ॥ १३॥

आचार्यश्च महेष्वासस् सर्वपार्थिवपूजितः ।
अभिगम्य रणे मिथ्या पापेनोक्तस्सुतं प्रति ॥ १४॥

तन्मे दहति गात्राणि यन्मां गुरुरभाषत ।
सत्यमाख्याहि राजंस्त्वं यदि जीवति मे सुतः ॥ १५॥

सत्यमामर्शयन् विप्रो मयि तत् परिपृष्टवान् ॥ १६

कुञ्जरं चान्तरं कृत्वा मिथ्योपचरितो मया ।
सुभृशं राज्यलुब्धेन पापेन गुरुघातिना ॥ १७

सत्यकञ्चुकमामुच्य मयोक्तो गुरुराहवे ।
अश्वत्थामा हत इति कुञ्जरे निहते मुने ॥ १८

कान् वा लोकान् गमिष्यामि कृत्वा तत् कर्म दारुणम् ॥ १८॥

अघातयं च यत् कर्णं समरेष्वपलायिनम् ।
ज्येष्ठभ्रातरमत्युग्रः को मत्तः पापकृत्तमः ॥ १९॥

अभिमन्युं च यद्बालं जातं सिंहमिवाद्रिषु ।
प्रावेशयमहं लुब्धो वाहिनीं द्रोणपालिताम् ॥ २०॥

तदाप्रभृति बीभत्सुं न शक्नोम्यभिवीक्षितुम् ।
कृष्णं च पुण्डरीकाक्षं किल्बिषी भ्रूणहा यथा ॥ २१॥

द्रौपदीं चाप्यदुःखार्हां पञ्चपुत्रविनाकृताम् ।
शोचामि पृथिवीं हीनां पञ्चभिः पर्वतैरिव ॥ २२॥

सोऽहमागस्करः पापः पृथिवीनाशकारकः ।
आसीन एवमेवेदं शोषयिष्ये कलेवरम् ॥ २३॥

प्रायोपविष्टं जानीध्वं मामद्य गुरुघातिनम् ।
यथाऽन्यास्वपि जातीषु न भवेयं कुलान्तकृत् ॥ २४॥

न भोक्ष्ये न च पानीयम् उपयोक्ष्ये कथञ्चन ।
शोषयिष्ये प्रियान् प्राणान् इहस्थोऽहं तपोधन ॥ २५॥

यथेष्टं गम्यतां कामम् अनुजाने प्रसाद्य वः ।
सर्वे मामनुजानीत त्यक्ष्यामीदं कलेबरम् ॥ २६॥

वैशम्पायनः—

तमेवं वादिनं पार्थं बन्धुशोकेन विह्वलम् ।
मैवमित्यब्रवीद्व्यासो निगृह्य मुनिसत्तमः ॥ २७॥

व्यासः—

अतिवेलं महाराज न शोकं कर्तुमर्हसि ।
पुनरुक्तं तु वक्ष्यामि दिष्टमेतदिति प्रभो ॥ २८॥

संयोगाश्च वियोगाश्च जातानां प्राणिनां ध्रुवम् ।
बुद्बुदा इव तोयेषु भवन्ति न भवन्ति च ॥ २९॥

सर्वे क्षयान्ता निचयाः पतनान्तास्समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ ३०॥

सुखं दुःखान्तमालस्यं दुःखान्तं च सुखोदयम् ।
विभूतिश्श्रीर्धृतिस्सिद्धिर् नादक्षे निवसन्त्युत ॥ ३१॥

नालं सुखाय सुहृदो नालं दुःखाय शत्रवः ।
न प्रतिज्ञाऽलमर्थानां न सुखानामलं धनम् ॥ ३२॥

यथा सृष्टोऽसि कौन्तेय धात्रा कर्म तथा कुरु ।
अत एव हि सिद्धिस्ते नेशस्त्वं ह्यात्मनो नृप ॥ ३३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
[अस्मिन्नध्याये ३३॥ श्लोकाः]

---

## ॥ षड्विंशोऽध्यायः ॥



व्यासेन युधिष्ठिरं प्रत्यश्मजनकसंवादानुवादपूर्वकं क्षात्रधर्मविधानम् ॥

---

वैशम्पायनः—

ज्ञातिशोकाभितप्तस्य प्राणानिष्टांस्त्यजिष्यतः ।
ज्येष्ठस्य पाण्डुपुत्रस्य व्यासश्शोकमपानुदत् ॥ १

व्यासः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
अश्मगीतं नरव्याघ्र तन्निबोध युधिष्ठिर ॥ २

अश्मानं ब्राह्मणं प्राज्ञं वैदेहो जनको नृपः ।
संशयं परिपप्रच्छ दुःखशोकसमन्वितः ॥ ३

जनकः—

आगमे यदि वाऽपाये ज्ञातीनां द्रविणस्य वा ।
नरेण प्रतिपत्तव्यं कल्याणं कथमिच्छता ॥ ४

अश्मा—

उत्पन्नमिममात्मानं नरस्यानन्तरं ततः ।
तानि तान्यभिवर्तन्ते दुःखानि च सुखानि च ॥ ५

तेषामन्यतरोत्पत्तौ यद्यदेवोपसेवते ।
तत् तत्र चेतनामस्य हरत्यभ्रमिवानिलः ॥ ६

अभिजातोऽस्मि सिद्धोऽस्मि नास्मि केवलमानुषः ।
इत्येभिर्हेतुभिस्तस्य त्रिभिश्चित्तं प्रसिच्यते ॥ ७

सम्प्रसिक्तमना भोगान् विसृज्य पितृसञ्चितान् ।
परिक्षीणः परस्वानाम् आदानं बहु मन्यते ॥ ८

तमतिक्रान्तमर्यादमाददानमसाम्प्रतम् ।
प्रतिषेधन्ति राजानो लुब्धा मृगमिवेषुभिः ॥ ९

तेषां परमदुःखानां बुद्ध्या भैषज्यमाचरेत् ।
सर्वप्राणभृतां वृत्तं प्रेक्षमाणस्ततस्ततः ॥ १०

ये च विंशतिवर्षा वै त्रिंशद्वर्षाश्च मानवाः ।
परेण ते वर्षशतान्न जीविष्यन्ति पार्थिव ॥ ११

मानसानां पुनर्योनिर् दुःखानां चित्तविभ्रमः ।

अनिष्टोपनिपातो वा तृतीयं नोपपद्यते ॥ १२

एवमेतानि दुःखानि तानि तानीह मानवम् ।
विविधान्युपवर्तन्ते तथा संस्पर्शजान्यपि ॥ १३

जरामृत्यू हि भूतानां खादितारौ वृकाविव ।
बलिनां दुर्बलानां च ह्रस्वानां महतामपि ॥ १४

न कश्चिज्जात्वतिक्रामेज् जरामृत्यू हि मानवः ।
अपि सागरपर्यन्तां विजित्येमां वसुन्धराम् ॥ १५

[1]पूर्वे वयसि मध्ये वा अन्तिमे वा जनाधिप ।
अवर्जनीयास्तेऽर्था वै काङ्क्षिता ये ततोऽन्यथा ॥ १६

सुप्रियैर्विप्रयोगश्च सम्प्रयोगश्च विप्रियैः ।
अर्थानर्थौ सुखं दुःखं विधानमनुवर्तते ॥ १७

प्रादुर्भावश्च भूतानां देहत्यागस्तथैव च ।
प्राप्तिव्यायामयोगश्च सर्वमेतत् प्रतिष्ठितम् ॥ १८

गन्धवर्णरसस्पर्शा निवर्तन्ते स्वभावतः ।
तथैव सुखदुःखानाम् विधानमनुवर्तते ॥ १९

आसनं शयनं यानम् उत्थानं पानभोजनम् ।
नियतं सर्वभूतानां कालेनैव भवत्युत ॥ २०

---

1. ख—सुखं वा यदि वा दुःखं भूतानां प्रत्युपस्थितम् ।
प्राप्तव्यमेव तैस्सर्वं परिहारो न विद्यते ॥ [अधिकः पाठः]

वैद्याश्चाप्यातुरास्सन्ति बलवन्तश्च दुर्बलाः ।
श्रीमन्तश्चापरे षण्ढा विचित्रः कालपर्ययः ॥ २१

कुले जन्म तथा वीर्यम् आरोग्यं रूपमेव च ।
सौभाग्यमुपभोगश्च भवितव्येन लभ्यते ॥ २२

सन्ति पुत्रास्सुबहवो दरिद्राणामनिच्छताम् ।
बहूनामिच्छतां नास्ति समृद्धानां विचेष्टताम् ॥ २३

व्याधिरग्निर्बलं शस्त्रं बुभुक्षाश्चापदो विषम् ।
जरा च मरणं जन्तोर् उच्चाच्च पतनं तथा ॥ २४

निर्याणं यस्य यद्दृष्टं तेन गच्छति हेतुना ॥ २४॥
दृश्यते चाभ्यतिक्रामन् नातिक्रान्ते यथा पुनः ।
दृश्यते च युवा चैव विनश्यत्यसुमान् नरः ॥ २५॥

दरिद्राश्च परिक्लिष्टाश् शतवर्षं जरातुराः ।
अकिञ्चनाश्च दृश्यन्ते पुरुषाश्चिरजीविनः ॥ २६॥

समृद्धे च कुले जाता विनश्यन्ति पतङ्गवत् ॥ २७

प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।
दरिद्राणां तु भूयिष्ठं काष्ठमश्मा हि जीर्यते ॥ २८

अहमेतत् करोमीति मन्यते कालचोदितः ।
यद्यदिष्टमसन्तोषाद् दुरात्मा क्षुद्रमाचरेत् ॥ २९

मृगयाऽक्षास्स्त्रियः पानं प्रसङ्गा निन्दिता बुधैः ।

दृश्यन्ते चात्र बहवस् सम्प्रसक्ता बहुश्रुताः ॥ ३०
इति कालेन सर्वार्थान् ईप्सितानीप्सितानपि ।
स्पृशन्ति सर्वभूतानि निमित्तं नोपलभ्यते ॥ ३१
वायुमाकाशमग्निं च चन्द्रादित्यावहःक्षपे ।
ज्योतींषि सरितश्शैलान् कः करोति बिभर्ति च ॥ ३२
शीतमुष्णं तथा वर्षं कालेन परिवर्तते ।
एवमेव मनुष्याणां सुखदुःखे नरर्षभ ॥ ३३
नौषधानि न [1]शस्त्राणि न होमा न पुनर्जपाः ।
त्रायन्ते मृत्युनोपेतं जरया चापि मानवम् ॥ ३४
यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ ३५
ये च निष्पुरुषैर्नृत्तगीतवाद्यैरुपस्थिताः ।
ये चानाथाः परान्नादाः कालस्तेषु समक्रियः ॥ ३६
मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेषु व्यतीतेषु तानि तेषु तदा तदा ॥ ३७
नैवास्य कश्चिद्भवति नायं भवति कस्यचित् ।
पथि सङ्गतमेवेदं दारबन्धुसुहृज्जनैः ॥ ३८
कासौ क्व च गमिष्यामि कोन्वहं किमिहास्थितः ।

---

1. क-ब—शास्त्राणि

कस्मात् किमनुशोचेऽहम् इत्येवं स्थापयेन्मनः ॥ ३९

अनित्ये प्रियसंवासे संसारे चक्रवद्गते ।

नदृष्टपूर्वं प्रत्यक्षं परलोकं विदुर्बुधाः ॥ ४०

आगमांस्त्वनतिक्रम्य श्रद्धातव्यं बुभूषता ॥ ४०॥

कुर्वीत पितृदैवत्यं धर्मानपि समाचरेत् ।

यजेत विधिवद्विद्वांस् त्रिवर्गं चाप्यनुव्रजेत् ॥ ४१॥

सन्निमज्जेज्जगदिदं गम्भीरे शोकसागरे ।

जन्ममृत्युजराग्राहे न कश्चिदवबुध्यते ॥ ४२॥

आयुर्वेदमधीयन्तः केवलं स्वपरिग्रहम् ।

दृश्यन्ते बहवो वैद्या व्याधिभिस्समभिप्लुताः ॥ ४३॥

ते पिबन्तः कषायांश्च सर्पींषि विविधानि च ।

न मृत्युमतिवर्तन्ते वेलामिव महोदधिः ॥ ४४॥

रसायनविदश्चैव सुप्रयुक्तरसायनाः ।

दृश्यन्ते जरया भग्ना नागा नागैरिवोत्तमैः ॥ ४५॥

तथैव तपसोपेतास् स्वाध्यायाध्ययने रताः ।

दातारो यज्ञशीलाश्च न तरन्ति जरान्तकौ ॥ ४६॥

अहानि न निवर्तन्ते न मासा न पुनः क्षपाः ।

जातानां सर्वभूतानां न पुनर्वै समागमः ॥ ४७॥

सोऽयं विपुलमध्वानं कालेन ध्रुवमध्रुवः ।

स्रोतसैव समभ्येति सर्वभूतनिषेवितम् ॥ ४८॥

देहो वा जीविताद्भ्येति देही वाऽप्येति देहतः ।
पथि सङ्गतमेवेदं दारैरन्यैश्च बन्धुभिः ॥ ४९॥

नायमत्यन्तसंवासो लभ्यते जातु केनचित् ।
अपि स्वेन शरीरेण किमुतान्यत्र केनचित् ॥ ५०॥

क्व नु तेऽद्य पिता राजन् क्व नु तेऽद्य पितामहाः ।
न त्वं पश्यसि तानद्य न त्वां पश्यन्ति तेऽपिच ॥ ५१॥

न चापि पुरुषो द्रष्टा स्वर्गस्य नरकस्य वा ।
आगमस्तु सतां चक्षुर् नृपते तमिहाचर ॥ ५२॥

चरितव्रतचर्यो हि प्रजायेत यजेत च ।
पितृदेवमहर्षीणाम् आनृण्यायानसूयकः ॥ ५३॥

स यज्ञशीलः प्रजने निविष्टः
प्राग्ब्रह्मचारी प्रविभक्तभैक्षः ।
आराधयन् स्वर्गमिमं च लोकं
परं च मुक्त्वा हृदयव्यलीकम् ॥ ५४॥

सम्यक् स्वधर्मं चरतो नृपस्य
द्रव्याणि चाभ्याहरतो यथावत् ।
प्रवृद्धचक्रस्य यशोऽभिवर्धेत्
सर्वेषु लोकेषु चराचरेषु ॥ ५५॥

व्यासः—

इत्येवमाकर्ण्य विदेहराजो
वाक्यं समग्रं परिपूर्णहेतु ।
अश्मानमामन्त्र्य विशुद्धबुद्धिर्
ययौ गृहं स्वं प्रति शान्तशोकः ॥ ५६॥

तथा त्वमप्यद्य विमुच्य शोकम्
उत्तिष्ठ शक्रोपम हर्षमेहि ।
क्षात्रेण धर्मेण मही जिता ते
तां भुङ्क्ष्व कुन्तीसुत माऽवमंस्थाः ॥ ५७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
[अस्मिन्नध्याये ५७॥ श्लोकाः]

---

## ॥ सप्तविंशोऽध्यायः ॥

कृष्णेन युधिष्ठिरं प्रति सृञ्जयाय नारदोक्तषोडशराजोपाख्यान-
कथनम् ॥

---

वैशम्पायनः—

अव्याहरति कौन्तेये धर्मपुत्रे युधिष्ठिरे ।
गुडाकेशो हृषीकेशम् अभ्यभाषत पाण्डवः ॥ १

अर्जुनः—

ज्ञातिशोकाभिसन्तप्तो धर्मराजः परन्तपः ।
एष शोकार्णवे मग्नस् तमाश्वासय माधव ॥ २

सर्वे स्म ते संशयिताः पुनरेव जनार्दन ।
अस्य शोकं महाप्राज्ञ प्रणाशयितुमर्हसि ॥ ३

वैशम्पायनः—

एवमुक्तस्स गोविन्दो विजयेन महात्मना ।
पर्यवर्तत राजानं पुण्डरीकेक्षणोऽच्युतः ॥ ४

अनतिक्रमणीयो हि धर्मराजस्य माधवः ।
बाल्यात् प्रभृति गोविन्दः प्रीत्या चाभ्यधिकोऽर्जुनात् ॥ ५

सम्प्रगृह्य महाबाहुर् भुजं चन्दनरूषितम् ।
शैलस्तम्भोपमं शौरिर् उवाचाभिविनादयन् ॥ ६

शुशुभे वदनं तस्य सुदंष्ट्रं चारुलोचनम् ।
व्याकोचमिव सुस्पष्टं पद्मं सूर्यविबोधितम् ॥ ७

श्रीभगवान्—

मा कृथाः पुरुषव्याघ्र त्वं शोकं गात्रशोषणम् ।
न हि ते सुलभा भूयो निहता स्मिन् रणाजिरे ॥ ८

स्वप्नलब्धा यथा लाभा वितथाः प्रतिबोधने ।
तथा ते क्षत्रिया राजन् ये व्यतीता रणाजिरे ॥ ९

सर्वे ह्यभिमुखाश्शूरा निहता रणशोभिनः ।
नैषां कश्चित् पृष्ठतो वा पलायन् वाऽपिचाहतः ॥ १०

सर्वे त्यक्त्वाऽऽत्मनः प्राणान् युद्ध्वा वीरा महारणे ।
शस्त्रपूता दिवं प्राप्ता न 'ताञ् छोचितुमर्हसि ॥ ११

[1]क्षत्रधर्मरताश्शूरा वेदवेदाङ्गपारगाः ।
प्राप्ता वीरगतिं पुण्यां न ताञ् शोचितुमर्हसि ॥ १२

अत्रैवोदाहरन्तीमम् इतिहासं पुरातनम् ।
सृञ्जयं पुत्रशोकार्तं यथाऽयं प्राह नारदः ॥ १३

नारदः—

सुखदुःखैरहं त्वं च प्रजास्सर्वाश्च सृञ्जय ।
अवितृप्ता मरिष्यामस् तत्र का परिदेवना ॥ १४

महाभाग्यं पुरा राज्ञां कीर्त्यमानं मया शृणु ।
गच्छावधानं नृपते ततो दुःखं प्रहास्यसि ॥ १५

मृतान् महानुभावांस्त्वं श्रुत्वैव पृथिवीपतीन् ।
शैत्यमानय सन्तापं शृणु विस्तरशश्च मे ॥ १६

आवीक्षितं मरुत्तं च मृतं सृञ्जय शुश्रुम ॥ १६॥

यस्य सेन्द्रास्सवरुणा बृहस्पतिपुरोगमाः ।
देवा विश्वसृजो राजन् यज्ञमीयुर्महात्मनः ॥ १७॥

1. ब—अर्धद्वयं नास्ति

यस्स्पर्धामानयच्छक्रं देवराजं पुरन्दरम् ।
[1]शक्रप्रियैषिणं विद्वान् प्रत्याचष्ट [2]बृहस्पतिम् ॥ १८॥

संवर्तो याजयामास यं पीडार्थं बृहस्पतेः ॥ १९

यस्मिन् प्रशासति महीं नृपतौ नृपसत्तम ।
अकृष्टपच्या पृथिवी विबभौ सस्यमालिनी ॥ २०

आवीक्षितस्य सत्रे वै विश्वे देवास्सभासदः ।
मरुतः परिवेष्टारस् सदस्याश्च दिवौकसः ॥ २१

मरुद्गणा मरुत्तस्य यत् सोममपिबन्नुत ॥
देवान् मनुष्यान् गन्धर्वान् अत्यरिच्यन्त दक्षिणाः ॥ २२

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ॥ २३
अयज्वानमदक्षिण्यम् अयि श्वैत्येत्युदाहरत् ॥ २३॥

सुहोत्रं चेद्वैतिथिनं मृतं सृञ्जय शुश्रुम ॥ २४

यस्मै हिरण्यं ववृषे मघवान् परिवत्सरम् ॥ २४॥

सत्यनामा वसुमती यं प्राप्यासीज्जनाधिपम् ।
हिरण्यमवहन्नद्यस् तस्मिञ्जनपदेश्वरे ॥ २५॥

मत्स्यान् कर्कटकान् नक्रान् कच्छपाञ् शिंशुमारकान् ।
नदीष्ववासृजद्राजन् मघवान् लोकपूजितः ॥ २६॥

---

1. अ-क-ख—शक्राप्रियैषिणं　2. अ-क-ख—बृहस्पतिः

हैरण्यान् पातितान् दृष्ट्वा मत्स्यान् मकरकच्छपान् ।
सहस्रशोऽथ शतशस् ततोऽस्मयत वैतिथिः ॥ २७॥

तद्धिरण्यमपर्यन्तम् आवृतं कुरुजाङ्गले ।
ईजानो वितते यज्ञे ब्राह्मणेभ्यस्त्वमन्यत ॥ २८॥

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतमस्तुभ्यं मा पुत्रमनुतप्यथाः ॥ २९॥

[1]शिबिमौशीनरं चैव मृतं सृञ्जय शुश्रुम ।
य इमां पृथिवीं सर्वां चर्मवत् समवेष्टत ॥ ३०॥

महता रथघोषेण पृथिवीमनुनादयन् ।

---

1. ख—अयज्वानमदाक्षिण्यं श्वैत्य संशाम्य मा शुचः ।
अङ्गं बृहद्रथं चैव मृतं सृञ्जय शुश्रुम ॥
यस्सहस्रं सहस्राणां श्वेतानश्वानवासृजत् ॥
सहस्रं च सहस्राणां कन्या हेमविभूषिताः ।
ईजानो वितते यज्ञे दक्षिणा अत्यकालयत् ॥
शतं शतसहस्राणां वृषाणां हेममालिनाम् ।
गवां सहस्रानुचरा दक्षिणा अत्यकालयत् ॥
अङ्गस्य यजमानस्य तदा विष्णुपदे गिरौ ।
अमाद्यदिन्द्रस्सोमेन दक्षिणाभिर्द्विजातयः ॥
यस्य यज्ञेषु राजेन्द्र शतसंख्येषु वै पुरा ।
देवान् मनुष्यान् गन्धर्वान् अत्यरिच्यन्त दक्षिणाः ॥
न जातो जनिता वाऽन्यः पुमान् कस्तत् प्रदास्यति ।
यदङ्गः प्रददौ वित्तं सोमसंस्थासु सप्तसु ॥
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ॥ [अधिकः पाठः]

एकच्छत्रां महीं चक्रे जैत्रेणैकरथेन यः ॥ ३१॥

यावदस्य गवाश्वं स्याद् आरण्यैः पशुभिस्सह ।
तावतीः प्रददौ गास्स शिबिरौशीनरोऽध्वरे ॥ ३२॥

नोद्यन्तारं धुरं तस्य कश्चिन्मेने प्रजापतिः ।
न भूतं न भविष्यं च सर्वराजसु सृञ्जय ॥ ३३॥

अन्यत्रौशीनराच्छैब्याद् राजर्षेरिन्द्रविक्रमात् ॥ ३४

अदक्षिणमयज्वानं पुत्रं संस्मृत्य मा शुचः ॥ ३४॥

भरतं चैव दौष्यन्तिं मृतं सृञ्जय शुश्रुम ।
शाकुन्तलं महात्मानं भूरिद्रविण[1]चेतसम् ॥ ३५॥

योऽबध्नात् [2]त्रिशतं वाजीन् देवेभ्यो यमुनामनु ।
सरस्वतीं त्रिंशतो नु गङ्गामनु चतुर्दश ॥ ३६॥

अश्वमेधसहस्रेण राजसूयशतेन च ।
इष्टवान् स महातेजा दौष्यन्तिर्भरतः पुरा ॥ ३७॥

भरतस्य तु यत् कर्म सर्वराजसु पार्थिव ।
खं मर्त्या इव बाहुभ्यां नानुगन्तुमशक्नुवन् ॥ ३८॥

सहस्रं यद्धयान् बध्नात् पुरा विद्यां वितत्य च ।
सहस्रं यत्र पद्मानां कण्वाय भरतो ददौ ॥ ३९॥

---

1. ख—तेजसम्		2. क-ख-ब—त्रिंशतो

[1]स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतमस्तुभ्यं मा पुत्रमनुतप्यथाः ॥ ४०॥

रामं दाशरथिं चापि मृतं सृञ्जय शुश्रुम ।
योऽन्वकम्पत वै नित्यं प्रजाः पुत्रानिवौरसान् ॥ ४१॥

नाधनो यस्य विषये नानर्थः कस्यचिद्भवेत् ।
सर्वस्यासीत् पितृसमो रामो राज्यं यदाऽन्वशात् ॥ ४२॥

कालवर्षी च पर्जन्यस् सस्यानि समवर्धयत् ।
नित्यं [2]सुवर्षमेवासीद् रामे राज्यं प्रशासति ॥ ४३॥

प्राणिनो नाप्सु मज्जन्ति नानर्थे पावकोऽदहत् ।
न व्यालकाद् भयं चासीद् रामे राज्यं प्रशासति ॥ ४४॥

[3]नान्योन्येन विवादोऽभूत् स्त्रीणामपि कुतो नृणाम् ।
धर्मनित्याः प्रजाश्चासन् रामे राज्यं प्रशासति ॥ ४५॥

सन्तुष्टास्सर्वसिद्धार्था निर्भयास्स्वैरचारिणः ।
नरास्सत्यव्रतधरा रामे राज्यं प्रशासति ॥ ४६॥

नित्यपुष्पफलाश्चैव पादपा निरुपद्रवाः ।
सर्वा द्रोणदुघा गावो रामे राज्यं प्रशासति ॥ ४७॥

---

1. ख—अर्धद्वयं नास्ति
2. ख—सुसुखमेवा घ—सुपुममेवा
3. ख—आसन् वर्षसहस्राश्च तथा पुत्रसहस्रिणः ।
अरोगास्सर्वसिद्धार्था रामे राज्यं प्रशासति ॥ [अधिकः पाठः]

स चतुर्दश वर्षाणि वने प्रोष्य महामनाः ।
दशाश्वमेधानाजह्रे यथाविधि निरर्गलान् ॥ ४८॥
युवा श्यामो लोहिताक्षो मातङ्ग इव यूथपः ।
आजानुबाहुस्सुमुखस् सिंहस्कन्धो महाभुजः ॥ ४९॥
दशवर्षसहस्राणि रामो राज्यमकारयत् ॥ ५०
[1]स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ॥ ५१
भगीरथं च राजानं मृतं सृञ्जय शुश्रुम ॥ ५१॥
यस्येन्द्रो वितते यज्ञे सोमं पीत्वा मदोत्कटः ।
असुराणां सहस्राणि बहूनि च सुरेश्वरः ॥ ५२॥
अजयद्बाहुवीर्येण मघवाँल्लोकपूजितः ॥ ५३
यस्सहस्रं सहस्राणां कन्या हेमविभूषिताः ।
ईजानो वितते यज्ञे दक्षिणा अत्यकालयत् ॥ ५४
सर्वा रथगताः कन्या रथास्सर्वे चतुर्युजः ।
रथे रथे शतं नागाः पद्मिनो हेममालिनः ॥ ५५
सहस्रमश्वा एकैकं हस्तिनं पृष्ठतोऽन्वयुः ।
गवां सहस्रमश्वेऽश्वे सहस्रं गव्यजाविकम् ॥ ५६
उपह्वरे निवसतो यस्याङ्के निषसाद ह ।

1. ख—अर्धद्वयं नास्ति

गङ्गा भागीरथी तस्मात् उर्वशी चाभवत् पुरा ॥ ५७

भूरिदक्षिणमैक्ष्वाकं यजमानं भगीरथम् ।
त्रिलोकपथगा गङ्गा दुहितृत्वमुपेयुषी ॥ ५८

[1]स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ॥ ५९

दिलीपं च महाप्राज्ञ मृतं सृञ्जय शुश्रुम ।
यस्य कर्माणि भूरीणि कथयन्ति मनीषिणः ॥ ६०

य इमां वसुसम्पूर्णां वसुधां वसुधाधिपः ।
ईजानो वितते यज्ञे ब्राह्मणेभ्यस्त्वमन्यत ॥ ६१

यस्य वै यजमानस्य यज्ञे यज्ञे पुरोहितः ।
सहस्रं वारणान् हैमान् दक्षिणा अत्यकालयत् ॥ ६२

यस्य यज्ञे महानासीद् यूपश्श्रीमान् हिरण्मयः ।
तं देवाः कर्म कुर्वाणाश् [2]शक्रज्येष्ठा उपासत ॥ ६३

चषाले यस्य सौवर्णे तस्मिन् यूपे हिरण्मये ।
ननृतुर्देवगन्धर्वाप् षट्सहस्राणि सप्तधा ॥ ६४

अवादयत् तत्र वीणां मध्ये विश्वावसुस्स्वयम् ।
सर्वभूतान्यमन्यन्त मम वादयतीत्ययम् ॥ ६५

1. ख—अर्धद्वयं नास्ति
2. क-ख-ब—शक्रश्रेष्ठा उपासते

एतद्राज्ञो दिलीपस्य राजानो नानुचक्रिरे ।
यद्योषा हेमसञ्छन्नाः क्षीबाः पथिषु शेरते ॥ ६६

राजानं चित्रधन्वानं दिलीपमपराजितम् ।
येऽपश्यन् सुमहात्मानं तेऽपि स्वर्गजितो नराः ॥ ६७

त्रयश्शब्दा न जीर्यन्ते दिलीपस्य निवेशने ।
स्वाध्यायशब्दो ज्याशब्दश् शब्दो वै दीयतामिति ॥ ६८

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ॥ ६९

मान्धातारं यौवनाश्वं मृतं सृञ्जय शुश्रुम ।
यं देवावश्विनौ गर्भं पितुः पार्श्वान्निरूहतुः ॥ ७०

संवृद्धो युवनाश्वस्य जठरे यो महात्मनः ।
पृषदाज्योद्भवश्श्रीमांस् त्रिलोकविजयी नृपः ॥ ७१

यं दृष्ट्वा पितुरुत्सङ्गे शयानं देवरूपिणम् ।
अन्योन्यमब्रुवन् देवाः [1]कमयं धास्यतीति वै ॥ ७२

मामेवायं धास्यतीति तमिन्द्रो ह्यभ्युपपद्यत ।
मांधातेति ततस्तस्य नाम चक्रे शचीपतिः ॥ ७३

ततस्तु पयसो धाराः पुष्टिहेतोर्महात्मनः ।
तस्यास्ये यौवनाश्वस्य पाणिरिन्द्रस्य चास्रवत् ॥ ७४

---

1. क-ख-घ—किमयं

तं पिबन् पाणिमिन्द्रस्य समामह्ना व्यवर्धत ।
स आसीद्द्वादशसमो द्वादशाहेन वीर्यवान् ॥ ७५

तमियं पृथिवी सर्वा एकाह्ना समपद्यत ।
धर्मात्मानं महात्मानं शूरमिन्द्रसमं युधि ॥ ७६

योऽनरण्यं च नृपतिं मरुत्तमसितं गयम् ।
अङ्गं बृहद्रथं चैव मान्धाता समरेऽजयत् ॥ ७७

यौवनाश्वो यदा चापं समरे प्रत्यपद्यत ।
विष्फारैर्धनुषो देवा द्यौरभेदीति मेनिरे ॥ ७८

यतस्सूर्य उदेति स्म यत्र च प्रतितिष्ठति ।
सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥ ७९

अश्वमेधशतेनेष्ट्वा राजसूयशतेन च ।
अददद्रोहितान् मत्स्यान् ब्राह्मणेभ्यो विशां पते ॥ ८०

हैरण्यान् योजनोत्सेधान् आयतान् दशयोजनम् ।
अतिरिक्तान् द्विजातिभ्यो व्यभजन्नितरे जनाः ॥ ८१

स चेन्ममार सृञ्जय [1]चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ॥ ८२

ययातिं नाहुषं चैव मृतं सृञ्जय शुश्रुम ॥ ८२॥

[2]य इमां पृथिवीं सर्वां विजित्य सहसागराम् ।

1. ख—अयं पादोऽनन्तरश्च न स्तः 2. ख—षट्श्लोकाः न सन्ति

शम्यापातेनाभ्यगच्छद् वेदीभिश्चित्रयन्महीम् ॥　　८३॥
ईजानः क्रतुभिः पुण्यैः पर्यगच्छद्वसुन्धराम् ॥　　८४

इष्ट्वा क्रतुसहस्रेण राजसूयशतेन च ।
तर्पयामास विप्रेन्द्रांस् त्रिभिः काञ्चनपर्वतैः ॥　　८५

व्यूढे दैवासुरे युद्धे हत्वा दैतेयदानवान् ।
व्यभजत् पृथिवीं कृत्स्नां ययातिर्नहुषात्मजः ॥　　८६

अन्त्येषु पुत्रान् निक्षिप्य यदुद्रुह्युपुरोगमान् ।
पूरुं राज्येऽभिषिच्य स्वे सदारः प्राविशद्वनम् ॥　　८७

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ॥　　८८

अम्बरीषं च नाभागं मृतं सृञ्जय शुश्रुम ।
यं प्रजा वव्रिरे पुण्यं गोप्तारं नृपसत्तमम् ॥　　८९

यस्सहस्रं सहस्राणां राज्ञामयुतयाजिनाम् ।
ईजानो वितते यज्ञे ब्राह्मणेभ्यस्त्वमन्यत ॥　　९०

नैतत्तु पूर्वजाश्चक्रुर् न करिष्यन्ति चापरे ।
इत्यम्बरीषे नाभागे अन्वमोदन्त दक्षिणाः ॥　　९१

शतं राजसहस्राणि शतं राजशतानि च ।
सर्वेऽश्वमेधैरीजानास् तेऽ[1]न्वयुर्दक्षिणायनम् ॥　　९२

---

1. क-ख-ब—ययु

स चेन्ममार सृञ्जय [1]चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ॥ ९३

शशबिन्दुं चैत्ररथं मृतं सृञ्जय शुश्रुम ।
यस्य भार्यासहस्राणां शतमासीन्महात्मनः ॥ ९४

सहस्रं तु सहस्राणां यस्यासन् शाशबिन्दवाः ।
हिरण्यकवचास्सर्वे सर्वे चोत्तमधन्विनः ॥ ९५

शतं कन्या राजपुत्रम् एकैकं पृष्ठतोऽन्वयुः ।
कन्यां कन्यां शतं नागा नागं नागं शतं रथाः ॥ ९६

रथं रथं शतं चाश्वा देशजा हेममालिनः ।
अश्वमश्वं शतं गावो गां गां तद्वदजाविकम् ॥ ९७

एतद्धनमपर्यन्तम् अश्वमेधे महामखे ।
शशबिन्दुर्महाराज ब्राह्मणेभ्यो ह्यमंसत ॥ ९८

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ॥ ९९

गयं चाधूर्तरजसं मृतं सृञ्जय शुश्रुम ।
यस्य वर्षशतं राजा हुतशिष्टाशनोऽभवत् ॥ १००
यस्मै वह्निर्वरान् प्रादात् ततो वव्रे वरान् गयः ॥ १००॥

गयः—

ददतो मे क्षयो मा भूद् धर्मे श्रद्धा च वर्धताम् ।

1. ख—अयं पादोऽनन्तरश्च न स्तः

मनो मे रमतां सत्ये त्वत्प्रसादाद्धुताशन ॥ १०१॥

नारदः—

लेभे च कामान् सर्वांस्तान् पावकादिति नश्श्रुतम् ॥ १०२

दर्शेन पूर्णमासेन चातुर्मास्यैः पुनः पुनः ।
अयजत् स महातेजास् सहस्रं परिवत्सरान् ॥ १०३

शतं गवां सहस्राणि शतमश्वशतानि च ।
उत्थायोत्थाय वै प्रादात् सहस्रं परिवत्सरान् ॥ १०४

तर्पयामास सोमेन देवान् वित्तैर्द्विजानपि ।
पितॄन् स्वधाभिः कामैश्च स्त्रियस्स्वाः पुरुषर्षभ ॥ १०५

सौवर्णां पृथिवीं कृत्वा दशव्यामां द्विरायताम् ।
दक्षिणामददद्राजा वाजिमेधे महामखे ॥ १०६

यावत्यस्सिकता राजन् गङ्गायां भरतर्षभ ।
तावतीरेव गाः प्रादाद् आधूर्तरजसो गयः ॥ १०७

स चेन्ममार सृञ्जय [1]चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ॥ १०८

रन्तिदेवं च साङ्कृत्यं मृतं सृञ्जय शुश्रुम ।
सम्यगाराध्य यश्शक्रं वराँल्लेभे महायशाः ॥ १०९

रन्तिदेवः—

अन्नं च नो बहु भवेद् अतिथींश्च लभेमहि ।

---

1. ख—अयं पादोऽनन्तरश्च न स्तः

श्रद्धा च नो मा व्यपगान्मा च याचिष्म कञ्चन ॥ ११०

नारदः—

उपातिष्ठन्त पशवस् स्वयं तं संशितव्रतम् ।
ग्राम्यारण्या महात्मानं रन्तिदेवं यशस्विनम् ॥ १११

महानदी चर्मराशेर् उत्क्लेदात् सुस्रुवे यतः ।
ततश्चर्मण्वतीत्येवं विख्याता सा महानदी ॥ ११२

ब्राह्मणेभ्योऽददान्निष्कान् सदसि प्रयतो नृपः ।
तुभ्यं तुभ्यं निष्कमिति यदा क्रोशन्ति वै द्विजाः ॥ ११३

सहस्रं तुभ्यमित्युक्त्वा ब्राह्मणान् प्रतिपद्य ते ॥ ११३॥
अन्वाहार्योपकरणं द्रव्योपकरणं च यत् ।
घटाः पात्र्यः कटाहानि स्थाल्यश्च पिठराणि च ॥ ११४॥
नासीत् किञ्चिदसौवर्णं रन्तिदेवस्य धीमतः ॥ ११५

साङ्कृते रन्तिदेवस्य यां रात्रिमवसन्गृहे ।
आलभ्यन्त तदा गावस् सहस्राण्येकविंशतिः ॥ ११६

तत्र स्म सूदाः क्रोशन्ति सुमृष्टमणिकुण्डलाः ।
सूपं भूयिष्ठमश्नीत नाद्य मांसं यथापुरम् ॥ ११७

स चेन्ममार सृञ्जय [1]चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ ११८

1. ख—अयं पादोऽनन्तरश्च न स्तः

सगरं च महात्मानं मृतं सृञ्जय शुश्रुम ।
ऐक्ष्वाकं पुरुषव्याघ्रम् अतिमानुषविग्रहम् ॥ ११९
षष्टिः पुत्रसहस्राणि यं यान्तं पर्यवारयन् ।
नक्षत्रराजं वर्षान्ते व्यभ्रं ज्योतिर्गणा इव ॥ १२०

एकच्छत्रा मही यस्य [1]प्रतापादभवत् पुरा ।
[2]योऽश्वमेधसहस्रेण तर्पयामास वै सुरान् ॥ १२१

यः प्रादात् कनकस्तम्भं प्रासादं सर्वकाञ्चनम् ।
पूर्णं पद्मदलाकीर्णं स्त्रीणां शयनसङ्कुलम् ॥ १२२
द्विजातिभ्योऽभिरूपेभ्यः कामांश्च विविधान् बहून् ।
यस्यादेशेन यद्वित्तं व्यभजन्त द्विजातयः ॥ १२३

खानयामास यः क्रोधात् पृथिवीं सागराङ्किताम् ।
यस्य नाम्ना समुद्रश्च सागरत्वमुपागतः ॥ १२४

स चेन्ममार सृञ्जय [3]चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ १२५

राजानं च पृथुं वैन्यं मृतं सृञ्जय शुश्रुम ।
यमभ्यषिञ्चन् सम्भूय महारण्ये महर्षयः ॥ १२६

प्रथयिष्यति वै लोकान् पृथुरित्येव शब्दितः ।

---

1. क-घ—प्रसादाद　　ख—प्रभावाद
2. क-ख-घ—सो
3. ख—अयं पादोऽनन्तरश्च न स्तः

क्षताच्च नस् [1]त्रायतीति ततो हि क्षत्रियस्स्मृतः ॥ १२७

पृथुं वैन्यं प्रजा दृष्ट्वा रक्षस्वेति यदब्रुवन् ।
ततो राजेति नामास्य अनुरागादजायत ॥ १२८

अकृष्टपच्या पृथिवी पुटके पुटके मधु ।
सर्वा द्रोणदुघा गावो वैन्यस्यासन् प्रशासतः ॥ १२९

अरोगास्सर्वसिद्धार्था मनुष्या अकुतोभयाः ।
तथा निकाममवसन् क्षेत्रेषु च गृहेषु च ॥ १३०

आपस्तस्तम्भिरे चास्य समुद्रमभियास्यतः ।
शैलाश्चापाव्यदीर्यन्त ध्वजभङ्गश्च नाभवत् ॥ १३१

हैरण्यांस्त्रिनरोत्सेधान् पर्वतानेकविंशतीन् ।
ब्राह्मणेभ्यो ददौ राजा योऽश्वमेधे महामखे ॥ १३२

स चेन्ममार सृञ्जय [2]चतुर्भद्रतरस्त्वया ।
पुत्रात् पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ १३३

किं वै राजन् ध्यायसे सृञ्जय त्वं
न वै तूष्णीं वाचमिमां शृणोषि ।
न चेन्मोघं विप्र[3]लप्तं मयेदं
पथ्यं मुमूर्षोरिव सम्यगुक्तम् ॥ १३४

1. क-ख-ब—त्रास्यतीति
2. अयं पादोऽनन्तरश्च न स्तः
3. क-ब—लब्धं ख—लुब्धं

सृञ्जयः—

श्रृणोमि ते नारद वाचमेतां
विचित्रार्थां स्रजमिव पुण्यगन्धाम् ।
राजर्षीणां पुण्यकृतां महात्मनां
कीर्त्या युक्तानां शोकनिर्णाशनार्थाम् ॥ १३५

न चेन्मोघं विप्रलप्तं महर्षे
दृष्ट्वैव त्वां नारद वीतशोकः ।
शुश्रूषे ते वचनं ब्रह्मवादिन्
न ते तृप्याम्यमृतस्येव पानात् ॥ १३६

अमोघदर्शिन् मम चेत् प्रसादं
सुताय दग्धस्य विभो प्रकुर्याः ।
सुतस्य सञ्जीवनमद्य मे स्यात्
तव प्रसादात् सुतसङ्गमाप्नुयाम् ॥ १३७

नारदः—

यस्ते पुत्रश्शयितोऽयं विशोकस्
स्वर्णष्ठीवी यमदात् पर्वतस्ते ।
पुनस्तं ते पुत्रमहं ददामि
हिरण्यनाभं वर्षसहस्रिणं च ॥ १३८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
[ अस्मिन्नध्याये १३८ श्लोकाः ]

## ॥ अष्टाविंशोऽध्यायः ॥



कृष्णेन युधिष्ठिरं प्रति नारदपर्वतोपाख्यानकथनम् ॥

युधिष्ठिरः—

स कथं काञ्चनष्ठीवी सृञ्जयस्य सुतोऽभवत् ।
पर्वतेन किमर्थं च दत्तकेन ममार च ॥ १

यदा वर्षसहस्रायुस् तदा भवति मानवः ।
कथमप्राप्तकौमारस् सृञ्जयस्य सुतो मृतः ॥ २

उताहो नाममात्रं च सुवर्णष्ठीविनोऽभवत् ।
तथ्यं वा काञ्चनष्ठीवीत्येतदिच्छामि वेदितुम् ॥ ३

श्रीभगवान्—

अत्र ते कथयिष्यामि यथावृत्तं नरेश्वर ।
नारदः पर्वतश्चैव द्वावृषी लोकविश्रुतौ ॥ ४

मातुलो भागिनेयश्च देवलोकादिहागतौ ।
विहर्तुकामौ सम्प्रीत्या मानुषेषु पुनः प्रभू ॥ ५

हविःपवित्रभोज्येन देवभोज्येन चैव हि ।
नारदो मातुलस्तत्र भागिनेयस्तु पर्वतः ॥ ६

तावुभौ तपसोपेताववनीतलचारिणौ ।
भुञ्जानौ मानुषान् भोगान् यथावत् पर्यधावताम् ॥ ७

प्रीतिमन्तौ मुदा युक्तौ समयं चैव चक्रतुः ॥ ७॥

यो भवेद्धृदि सङ्कल्पश् शुभो वा यदि वाऽशुभः ।
अन्योन्यस्य स आख्येयो मृषा शापोऽन्यथा भवेत् ॥ ८॥

तौ तथेति प्रतिज्ञाय देवर्षी लोकपूजितौ ।
सृञ्जयं [1]श्वैत्यमभ्येत्य राजानमिदमूचतुः ॥ ९॥

नारदपर्वतौ—

आवां भवति वत्स्यावः कञ्चित् कालं हिताय ते ।
यथावत् पृथिवीपाल आवयोः प्रगुणीभव ॥ १०॥

श्रीभगवान्—

तथेति कृत्वा राजा तौ सत्कृत्योपचचार ह ॥ ११

ततः कदाचित्तौ राजा महात्मानौ तथा गतौ ।
अब्रवीत् परमप्रीतस् सुतेयं देवरूपिणी ॥ १२

एकैव मम कन्यैषा युवां परिचरिष्यति ।
दर्शनीयाऽनवद्याङ्गी शीलवृत्तसमन्विता ॥ १३

सुकुमारी कुमारी च पद्मकिञ्जल्क[2]सुप्रभा ।
परं सौम्येयमित्युक्त्वा ताभ्यां राजा शशास ताम् ॥ १४

सृञ्जयः—

कन्ये विप्रावुपचर देववत् पितृवच्च ह ॥ १४॥

---

1. अ-क-व—चैद्य　　2. क-ख-व—सन्निभा

श्रीभगवान्—

सा तु कन्या तथेत्युक्त्वा पितरं धर्मचारिणी ।
यथानिदेशं राज्ञस्तौ सत्कृत्योपचचार ह ॥ १५॥

तस्यास्तेनोपचारेण रूपेणाप्रतिमेन च ।
[1]नारदं हृच्छयस्तूर्णं सहसैवान्वपद्यत ॥ १६॥

ववृधे हि सदा तस्य हृदि कामो महात्मनः ।
यथा शुक्लस्य पक्षस्य प्रवृत्तावुडुराट् छनैः ॥ १७॥

न च तं भागिनेयाय पर्वताय महात्मने ।
शशंस मन्मथं तीव्रं व्रीडमानस्स धर्मवित् ॥ १८॥

तपसा चेङ्गितैश्चैव पर्वतोऽथ बुबोध ह ।
कामार्तं नारदं क्रुद्धश् शशापैनमथो भृशम् ॥ १९॥

पर्वतः—

कृत्वा समयमव्यग्रो भवान् वै सहितो मया ।
यो भवेद्धृदि सङ्कल्पश् शुभो वा यदि वाऽशुभः ॥ २०॥

अन्योन्यस्य तदाख्येयम् इति तद्वै मृषा कृतम् ।
भवतो वचनं ब्रह्मंस् तस्मादेष ब्रजाम्यहम् ॥ २१॥

न हि कामं प्रवर्तन्तं भवानाचष्ट मे पुरा ।
सुकुमार्यां कुमार्यां ते तस्मान्नैष क्षमाम्यहम् ॥ २२॥

---

1. क—नारदः

ब्रह्मचारी गुरुर्यस्मात् तपस्वी ब्राह्मणश्च सन् ।
अकार्षीस्समयभ्रंशम् आवाभ्यां यः कृतो मिथः ॥ २३॥

तस्माच्छप्स्यामि सङ्क्रुद्धो भवन्तं तं निबोध मे ।
सुकुमारी तु ते भार्या भवितेयं न संशयः ॥ २४॥

वानरत्वं च ते कन्याविवाहात्प्रभृति प्रभो ।
द्रक्ष्यन्ते [1]वानराश्चान्ये स्वरूपेण विनाकृतम् ॥ २५॥

श्रीभगवान्—

स तद्वाक्यं तु विज्ञाय पर्वतं नारदस्तदा ।
शशाप तमभिक्रुद्धो भागिनेयं स मातुलः ॥ २६॥

नारदः—

तपसा ब्रह्मचर्येण सत्येन च दमेन च ।
युक्तोऽपि धर्मनित्यश्च स्वर्गे नो वासमाप्स्यसि ॥ २७॥

श्रीभगवान्—

तौ तु शप्तौ भृशं क्रुद्धौ परस्परममर्षणौ ।
[2]प्रतिजग्मतुरन्योन्यं क्रुद्धाविव गजोत्तमौ ॥ २८॥

पर्वतः पृथिवीं कृत्स्नां विचचार महामुनिः ॥
पूज्यमानो यथान्यायं तेजसा स्वेन भारत ॥ २९॥

अथ तामलभत् कन्यां नारदस्सृञ्जयात्मजाम् ।
धर्मेण विप्रप्रवरस् सुकुमारीमनिन्दिताम् ॥ ३०॥

---

1. क-ब—मानवाश्चान्ये	2. अ-क-ब—नास्तीदमर्धम्

सा तु कन्या यथाशापं नारदं तं ददर्श ह ।
पाणिग्रहणमन्त्राणां प्रयोगादेव वानरम् ॥ ३१॥

सुकुमारी च देवर्षिं वानरप्रतिमाननम् ।
नैवावमन्यत तदा प्रीतिमत्येव चाभवत् ॥ ३२॥

उपतस्थे च भर्तारं न चान्यं मनसाऽगमत् ।
देवं मुनिं वा यक्षं वा पतित्वे पतिवत्सला ॥ ३३॥

ततः कदाचिद्भगवान् पर्वतोऽनुचचार ह ॥ ३४

[1]वनं विरहितं किञ्चित् तत्रापश्यत् स नारदम् ।
ततोऽभिवाद्य प्रोवाच पर्वतो नारदं तदा ॥ ३५

पर्वतः—

भवान् प्रसादं कुरुतात् स्वर्गवासाय मे प्रभो ॥ ३५॥

श्रीभगवान्—

तमुवाच ततो दृष्ट्वा नारदः पर्वतं तदा ।
कृताञ्जलिमुपासीनं दीनं दीनतरस्वरम् ॥ ३६॥

नारदः—

त्वयाऽहं प्रथमं शप्तो वानरस्त्वं भविष्यसि ।
इत्युक्तेन मया पश्चाच् छप्तस्त्वमपि मत्सरात् ॥ ३७॥

अद्यप्रभृति नो वासं स्वर्गे नावाप्स्यसीति ह ।
तव नैतद्धि सदृशं पुत्रस्थानो हि मे भवान् ॥ ३८॥

1. ञ-क-घ—अर्धद्वयं नास्ति

श्रीभगवान्—

निवर्तयेतां तं शापम् अन्योन्यस्य तदा मुनी ॥ ३९

श्रीसमृद्धं तदा दृष्ट्वा नारदं देवरूपिणम् ।
सुकुमारी न सम्प्राप परपुंसि विशङ्कया ॥ ४०

तां पर्वतस्ततो दृष्ट्वा प्रद्रवन्तीमनिन्दिताम् ।
अब्रवीत् तव भर्तैष नात्र कार्या विचारणा ॥ ४१

ऋषिः परमधर्मज्ञो नारदो भगवान् प्रभुः ।
तवैवाभेद्यहृदयो मा भूत्ते संशयोऽत्र वै ॥ ४२

साऽनुनीता बहुविधं पर्वतेन महात्मना ।
शापदोषं च तं भर्तुश् श्रुत्वा सा प्रकृतिं गता ॥ ४३

पर्वतोऽथ ययौ स्वर्गं नारदोऽप्यगमद्गृहान् ॥ ४३॥

प्रत्यक्षकर्म सर्वस्य नारदोऽयं महानृषिः ।
एष वक्ष्यति ते पृष्टो यथावृत्तं नरेश्वर ॥ ४४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
[अस्मिन्नध्याये ४४॥ श्लोकाः]

---

## ॥ एकोनत्रिंशोऽध्यायः ॥



नारदेन युधिष्ठिरं प्रति सुवर्णष्ठीविचरितवर्णनम् ॥

वैशम्पायनः—

ततो धर्मसुतो राजा नारदं प्रत्यभाषत ॥ ॥

युधिष्ठिरः—

भगवञ् श्रोतुमिच्छामि सुवर्णष्ठीविसम्भवम् ॥ १

वैशम्पायनः—

एवमुक्तस्तु देवर्षिर् धर्मराजेन नारदः ।
आचचक्षे यथावृत्तं सुवर्णष्ठीविनं प्रति ॥ २

नारदः—

एवमेतन्महाराज यथाऽयं केशवोऽब्रवीत् ।
तस्याः कथाया यच्छेषं तत्ते वक्ष्यामि पृच्छतः ॥ ३

अहं च पर्वतश्चैव स्वस्रीयो मे महामुनिः ।
वस्तुकामावभिगतौ सृञ्जयं जयतां वरम् ॥ ४

तत्र सम्पूजितौ तेन विधिदृष्टेन कर्मणा ।
सर्वकामैस्सुविहितौ निवसावोऽस्य वेश्मनि ॥ ५

व्यतिक्रान्तासु वर्षासु समये गमनस्य च ।
पर्वतो मामुवाचेदं काले वचनमर्थवत् ॥ ६

पर्वतः—

आवामस्य नरेन्द्रस्य गृहे परमपूजितौ ।

उषितौ समयं ब्रह्मंश् चिन्त्यतामस्य साम्प्रतम् ॥ ७

नारदः—

ततोऽहमब्रुवं राजन् पर्वतं शुभदर्शनम् ॥ ७॥

सर्वमेतत्त्वयि विभो भागिनेयोपपद्यते ।

वरेण च्छन्द्यतां राजा लभतां यद्यदिच्छति ॥ ८॥

आवयोस्तपसा सिद्धिं प्राप्नोतु यदि मन्यसे ॥ ९

तत आहूय राजानं सृञ्जयं जयतां वरम् ।

पर्वतोऽनुमतं वाक्यम् उवाच कुरुनन्दन ॥ १०

पर्वतः—

प्रीतौ स्वो नृप सत्कारैर् भवता भूप सम्भृतैः ।

आवाभ्यामभ्यनुज्ञातो वरं नृवर चिन्तय ॥ ११

देवानामविहिंसायां यद् भवेन्मानुषे क्षमम् ।

तद्गृहाण महाराज पूजार्हो नौ मतो भवान् ॥ १२

सृञ्जयः—

प्रीतौ भवन्तौ यदि हि कृतमेतावता मम ।

एष एव परो लाभो निर्वृत्तो मे महाफलः ॥ १३

नारदः—

तमेवंवादिनं भूयः पर्वतः प्रत्यभाषत ॥ १३॥

पर्वतः—

शृणु राजन् सुसङ्कल्पं यत्ते हृदि चिरं स्थितम् ॥ १४

अभीप्ससि सुतं वीरं वीर्यवन्तं दृढव्रतम् ।
आयुष्मन्तं महाभागं देवराजसमद्युतिम् ॥ १५

भविष्यत्येव ते कामो न त्वायुष्मान् भविष्यति ।
देव[1]राजाभिभूत्यर्थं सङ्कल्पो ह्येष ते हृदि ॥ १६

सुवर्णष्ठीवनाच्चैव स्वर्णष्ठीवी भविष्यति ।
रक्ष्यश्च देवराजाद्धि देवराजसमद्युतिः ॥ १७

नारदः—

तच्छ्रुत्वा सृञ्जयो वाक्यं पर्वतस्य महात्मनः ।
प्रसादयामास तदा नैतदेवं भवेदिति ॥ १८

सृञ्जयः—

आयुष्मान् मे भवेत् पुत्रो भवतोस्तपसा मुने ॥ १८॥

नारदः—

न च तं पर्वतः किञ्चिद् उवाचेन्द्रव्यपेक्षया ॥ १९

तमहं नृपतिं दीनम् अब्रवं पुनरेव च ।
स्मर्तव्यो हि महाराज दर्शयिष्यामि ते स्मृतः ॥ २०

अहं ते दयितं पुत्रं प्रेतराजवशं गतम् ।

---

1. ख-ब—राजविभूत्यर्थं

पुनर्दास्यामि तद्रूपं मा शुचः पृथिवीपते ॥ २१

एवमुक्त्वा तु नृपतिं प्रयातौ स्वो यथेप्सितम् ॥ २१॥

[1]सृञ्जयस्य च राजर्षेः कस्मिंश्चित् कालपर्यये ।
जज्ञे पुत्रो महावीर्यस् तेजसा प्रज्वलन्निव ॥ २२॥

ववृधे च यथा काले सरसीव महोत्पलम् ।
बभूव काञ्चनष्ठीवी यथार्थं नाम तस्य तत् ॥ २३॥

तदद्भुततमं लोके प्रथितं कुरुपुङ्गव ।
बुबुधे तस्य देवेन्द्रो वरदानं मनीषिणोः ॥ २४॥

ततस्त्वभिभवाद्भीतो बृहस्पतिमते स्थितः ।
कुमारस्यान्तरप्रेक्षी [2]नित्यमेवाभ्यवर्तत ॥ २५॥

स वज्रं चोदयामास दिव्यास्त्रं मूर्तिमत् स्थितम् ।
व्याघ्रो भूत्वा जहीमं त्वं राजपुत्रमिति प्रभो ॥ २६॥

विवृद्धः किल वीर्येण मामेषोऽभिभविष्यति ।
सृञ्जयस्य सुतो वज्र यथेमं पर्वतो ददौ ॥ २७ ॥

एवमुक्तस्तु शक्रेण वज्रः परपुरञ्जयः ।
कुमारस्यान्तरप्रेक्षी नित्यमेवाभ्यवर्तत ॥ २८ ॥

सृञ्जयोऽपि सुतं प्राप्य देवराजसमद्युतिम् ।

---

1. ख—सृञ्जयश्च यथाकामं प्रविवेश स्वकं गृहम् ।　[अधिकः पाठः]
2. क-ख-घ—बभूव बलवृत्रहा

हृष्टस्सान्तःपुरो राजा वननित्योऽभवत्तदा ॥ २९॥
ततो भागीरथीतीरे कदाचिद्वननिर्झरे ।
धात्रीद्वितीयो बालस्स क्रीडार्थं पर्यधावत ॥ ३०॥
पञ्चवर्षकदेशीयो बालो नागेन्द्रविक्रमः ।
सहसोत्पतितं व्याघ्रम् आससाद महाबलः ॥ ३१॥
स बालस्तेन निष्पिष्टो वेपमानो नृपात्मजः ।
व्यसुः पपात मेदिन्यां ततो धात्री विचुक्रुशे ॥ ३२॥
हत्वा च राजपुत्रं स तत्रैवान्तरधीयत ।
शार्दूलो देवराजस्य माययाऽन्तर्हितस्तदा ॥ ३३॥
धात्र्यास्तु निनदं श्रुत्वा रुदन्त्याः परमार्तवत् ।
अभ्यधावत तं देशं स्वयमेव महीपतिः ॥ ३४॥
स ददर्श शयानं तं गतासुं पीतशोणितम् ।
कुमारं विगतानन्दं निशाकरमिव च्युतम् ॥ ३५॥
स तमुत्सङ्गमारोप्य परिपीडितवक्षसम् ।
पुत्रं रुधिरसंसिक्तं पर्यदेवयदातुरः ॥ ३६॥
ततस्ता मातरस्तस्य रुदन्त्यश्शोककर्शिताः ।
अभ्यधावन्त तं देशं यत्र राजा स सृञ्जयः ॥ ३७॥
ततस्स राजा सस्मार मामन्तर्गतमानसः ।
तस्याहं चिन्तितं ज्ञात्वा गतवांस्तस्य दर्शनम् ॥ ३८॥

समये तानि वाक्यानि श्रावितश्शोकलालसः ।
यानि ते यदुवीरेण श्रावितानि महीपते ॥ ३९॥
सञ्जीवितश्चापि मया वासवानुमते पुनः ।
भवितव्यं तथा तद्धन्न तच्छक्यमतोऽन्यथा ॥ ४०॥
तत ऊर्ध्वं कुमारश्च स्वर्णष्ठीवी महायशाः ।
चित्तं प्रसादयामास पितुर्मातुश्च वीर्यवान् ॥ ४१॥
कारयामास राज्यं च पितरि स्वर्गते भुवि ।
वर्षाणामेकशतवत् सहस्रं भीमविक्रमः ॥ ४२॥
तत इष्ट्वा महायज्ञैर् बहुभिर्भूरिदक्षिणैः ।
तर्पयामास देवांश्च पितृंश्चैव महाद्युतिः ॥ ४३॥
उत्पाद्य च बहून् पुत्रान् कुलसन्तानकारिणः ।
कालेन महता राजन् कालधर्ममुपेयिवान् ॥ ४४॥
एवं राजेन्द्र सञ्जातं शोकमेव निवर्तय ।
यथा त्वां केशवः प्राह व्यासश्च सुमहातपाः ॥ ४५॥
पितृपैतामहं राज्यम् आस्थाय धुरमुद्वह ।
इष्ट्वा पुण्यैर्महायज्ञैर् इष्टाँल्लोकानवाप्स्यसि ॥ ४६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥
[अस्मिन्नध्याये ४६॥ श्लोकाः]

## ॥ त्रिंशोऽध्यायः ॥

व्यासयुधिष्ठिरसंवादः ॥ १ ॥ युद्धे राज्ञां हननेन पापशङ्कया विपीदन्तं युधिष्ठिरं प्रति व्यासेन तत्त्वकथनपूर्वकं क्षत्रधर्मविधानम् ॥ २ ॥

वैशम्पायनः—

तूष्णीम्भूतं तु राजानं कुन्तीपुत्रं युधिष्ठिरम् ।
तपस्वी सर्वतत्त्वज्ञः कृष्णद्वैपायनोऽब्रवीत् ॥ १

व्यासः—

प्रजानां पालनं धर्मो राज्ञां राजीवलोचन ।
धर्मः प्रमाणं लोकस्य नित्यं धर्मोऽनुवर्त्यताम् ॥ २

अनुतिष्ठस्व तद्राजन् पितृपैतामहं पदम् ।
ब्राह्मणेषु तु यो धर्मस् स नित्यो वेदनिश्चितः ॥ ३

तत् प्रमाणं प्रमाणानां शाश्वतं भरतर्षभ ।
तस्य धर्मस्य कृत्स्नस्य क्षत्रियः परिरक्षिता ॥ ४

तथा यः प्रतिहन्त्यस्य शासनं विषये नरः ।
स बाहुभ्यां विनिग्राह्यो लोकयात्राविघातकः ॥ ५

प्रमाणमप्रमाणं यः कुर्यान्मोहवशं गतः ।
भृत्यो वाऽप्यथ वा पुत्रस् तपस्वी वाऽपि कश्चन ॥ ६

पापान् सर्वैरुपायैस्तान् नियच्छेत् पातयेत वा ।

अतोऽन्यथा वर्तमानो राजा प्राप्नोति किल्बिषम् ॥ ७

धर्मं विनश्यमानं हि यो न रक्षेत् स धर्महा ।
ते त्वया धर्महर्तारो निहतास्सपदानुगाः ॥ ८

स्वधर्मे वर्तमानस्त्वं किं नु शोचसि पाण्डव ।
राजा निहन्याद्दद्याच्च प्रजा रक्षेच्च धर्मतः ॥ ९

युधिष्ठिरः—

न तेऽतिशङ्के वचनं यद्ब्रवीषि तपोधन ।
अपरोक्षो हि ते धर्मस् सर्वधर्मभृतां वर ॥ १०

मया त्ववध्या बहवो घातिता राज्यकारणात् ।
तानि कर्माणि मामद्य पचन्ति च दहन्ति च ॥ ११

व्यासः—

ईश्वरो वा भवेत् कर्ता पुरुषो वाऽपि भारत ।
नापरो वर्तते लोके कर्मजं वा फलं नृषु ॥ १२

ईश्वरेण नियुक्ता हि साध्वसाधु च [1]भारत ।
कुर्वन्ति पुरुषाः कर्म फलमीश्वरगामि तत् ॥ १३

यथा हि पुरुषश्छिन्द्याद् वृक्षं परशुना वने ।
छेत्तुरेव भवेत् पापं परशोर्न कथञ्चन ॥ १४

अथवा तदुपादानात् प्राप्नुयात् कर्मणः फलम् ।

1. क-घ—पार्थिव　ख—पाण्डव

शास्त्रकर्मकृतं पापं पुरुषे तन्न विद्यते ॥ १५
न चैतदिष्टं कौन्तेय यदन्येन कृतं फलम् ।
प्राप्नुयादिति तस्माच्च ईश्वरे तन्निवेशय ॥ १६
यथाऽत्र पुरुषः कर्ता कर्मणोश्शुभपापयोः ।
नापरो विद्यते तस्माद् एवमप्यशुभं कुतः ॥ १७
नेह कश्चित् क्वचिद्राजन् दिष्टात् प्रतिनिवर्तते ।
दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते ॥ १८
यदि वा मन्यसे राजन् हरौ सर्वं प्रतिष्ठितम् ।
एवमप्यशुभं कर्म न भूतं न भविष्यति ॥ १९
अथोपपत्तिर्लोकस्य कर्तव्या शुभपापयोः ।
अभिपन्नतमं लोके राज्यमुद्यतदण्डनम् ॥ २०
तथाऽपि लोके कर्माणि समावर्तन्त भारत ।
शुभाशुभफलं चेमे प्राप्नुवन्तीति मे मतम् ॥ २१
एवं पश्य शुभादेशं कर्मणस्तत्फलं ध्रुवम् ।
त्यज तद् राजशार्दूल मैवं शोके मनः कृथाः ॥ २२
स्वधर्मे वर्तमानस्य सापवादेऽपि भारत ।
[1]एवमात्मपरित्यागस् तव राजन्न शोभनम् ॥ २३
विहितानीह कौन्तेय प्रायश्चित्तानि कर्मणाम् ।

1. अ—शुभाशुभफलं चेमे प्राप्नुवन्तीति मे मतम् । [ अधिकः पाठः ]

शरीरवांस्तानि कुर्याद् अशरीरः पराभवेत् ॥ २४

तद्राजञ्जीवमानस्त्वं प्रायश्चित्तं करिष्यसि ।
प्रायश्चित्तमकृत्वा वै प्रेत्य तप्तासि भारत ॥ २५

युधिष्ठिरः—

हताः पुत्राश्च पौत्राश्च भ्रातरः पितरस्तथा ।
श्वशुरा गुरवश्चैव मातुलास्सपितामहाः ॥ २६

क्षत्रियाश्च महाभागास् सम्बन्धिसुहृदस्तथा ।
वयस्या भागिनेयाश्च ज्ञातयश्च पितामह ॥ २७

वहवश्च मनुष्येन्द्रा नानादेशसमागताः ।
घातिता राज्यलुब्धेन मयोग्रेण पितामह ॥ २८

तांस्तादृशानहं हत्वा धर्मनित्यान् महीक्षितः ।
असकृत् सोमपान् वीरान् किं प्राप्स्यामि तपोधन ॥ २९

दह्याम्यनिशमद्याहं चिन्तयानः पुनः पुनः ।
हीनां पार्थिवसिंहैस्तैश् श्रीमद्भिः पृथिवीमिमाम् ॥ ३०

दृष्ट्वा ज्ञातिवधं घोरं हतांश्च शतशः परान् ।
कोटिशश्च नरानद्य परितप्स्ये पितामह ॥ ३१

का नु तासां वरस्त्रीणाम् अवस्था हि भविष्यति ।
विहीनानां तु तनयैः पतिभिर्भ्रातृभिस्तथा ॥ ३२

अस्मानन्तकरान् घोरान् पाण्डवान् वृष्णिसंहितान् ।

आक्रोशन्त्यः कृशा दीना निपतन्त्यश्च भूतले ॥ ३३

अपश्यन्त्यः पितॄन् भ्रातॄन् पतीन् पुत्रांश्च योषितः ।
त्यक्त्वा प्राणान् प्रियान् सर्वान् गमिष्यन्ति यमक्षयम् ॥ ३४

वत्सलत्वाद्द्विजश्रेष्ठ तत्र मे नास्ति संशयः ।
व्यक्तं सौक्ष्म्याच्च धर्मस्य प्राप्स्यामस्त्रीवधं वयम् ॥ ३५

ते वयं सुहृदो हत्वा कृत्वा पापमनन्तकम् ।
नरके प्रपतिष्यामो ह्यधश्शिरस एव हि ॥ ३६

शरीराणि त्यजिष्यामस् तपसोग्रेण सत्तम ।
आश्रमाणां विशेषांस्त्वं ममाचक्ष्व पितामह ॥* ३७

वैशम्पायनः—

युधिष्ठिरस्य तद्वाक्यं श्रुत्वा द्वैपायनस्तदा ।
परीक्ष्य निपुणं बुद्ध्या ऋषिः प्रोवाच पाण्डवम् ॥ ३८

व्यासः—

मा विषादं कृथा राजन् क्षत्रधर्ममनुस्मरन् ।
स्वधर्मेण हता ह्येते क्षत्रियाः क्षत्रियर्षभ ॥ ३९

काङ्क्षमाणाश्श्रियं कृत्स्नां पृथिव्यां च महद्यशः ।
कृतान्तविधिसंयुक्ताः कालेन मरणं गताः ॥ ४०

न त्वं हन्ता न भीमोऽयं नार्जुनो न यमावपि ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते ॥

कालः पर्यायधर्मेण प्राणानादत्त देहिनाम् ॥ ४१
न यस्य मातापितरौ नानुग्राह्यो [1]हि कश्चन ।
कर्मसाक्षी प्रजानां यस् तेन कालेन संहृताः ॥ ४२
हेतुमात्रमिदं तस्य कालस्य मनुजर्षभ ।
युञ्जन्ति भूतैर्भूतानि तदस्य परमेश्वरम् ॥ ४३
कर्म मूर्त्यात्मकं विद्धि साक्षिणं शुभपापयोः ।
सुखदुःखफलोदर्कः काले काले फलप्रदः ॥ ४४
तेषामपि महाबाहो कर्माणि परिचिन्तय ।
विनाशहेतुकानि त्वं यैस्ते कालवशं गताः ॥ ४५
आत्मनश्च विजानीहि नियमव्रतशीलताम् ।
यदा त्वमीदृशं कर्म विधिनाऽऽक्रम्य कारितः ॥ ४६
त्वष्ट्रेव विहितं यन्त्रं यथा चेष्टयितुर्वशे ।
कर्मणा कालयुक्तेन तथेदं भ्राम्यते जगत् ॥ ४७
पुरुषस्य हि दृष्ट्वेमाम् उत्पत्तिमनिमित्ततः ।
यदृच्छया विनाशं च शोकहर्षावनर्थकौ ॥ ४८
व्यलीकं चापि यत्तत्र चित्तवैतंसिकं तव ।
तदर्थमिष्यते राजन् प्रायश्चित्तं तदाचर ॥ ४९
इदं तु श्रूयते पार्थ युद्धे देवासुरे पुरा ।

1. क-ख-ग—ऽस्ति

असुरा भ्रातरो ज्येष्ठा यवीयांसस्तथा सुराः ॥ ५०

तेषामपि श्रीनिमित्तं महानासीत् समुच्छ्रयः ।
युद्धं वर्षसहस्राणि द्वात्रिंशदभवत् किल ॥ ५१

एकार्णवां महीं कृत्वा रुधिरेण परिप्लुताम् ।
जघ्नुर्दैत्यांस्तथा देवास् त्रिदिवं चापि लेभिरे ॥ ५२

तथैव पृथिवीं लब्ध्वा ब्राह्मणा वेदपारगाः ।
संश्रिता दानवानां च साह्यार्थे दर्पमोहिताः ॥ ५३

सालावृका इति ख्यातास् त्रिषु लोकेषु भारत ।
अष्टाशीतिसहस्राणि ते चापि विबुधैर्हताः ॥ ५४

धर्मव्युच्छित्तिमिच्छन्तो येऽधर्मस्य प्रवर्तकाः ।
हन्तव्यास्ते दुरात्मानो देवैर्दैत्या इवोद्धताः ॥ ५५

एकं हत्वा यदि कुलं शिष्टानां स्यादनामयम् ।
कुले वा यदि वा राज्ये न तद्वृत्तोपघातकम् ॥ ५६

अधर्मरूपो धर्मो हि कश्चिदस्ति नराधिप ।
धर्मरूपो ह्यधर्मश्च तच्च ज्ञेयं विपश्चिता ॥ ५७

तस्मात् संस्तम्भयात्मानं श्रुतवानसि पाण्डव ।
देवैः पूर्वकृतं मार्गम् अनुयातोऽसि पाण्डव ॥ ५८

न हीदृशा गमिष्यन्ति नरकं पार्थिवर्षभ ।

[1]तस्मात् संस्तम्भयात्मानं श्रुतवानसि पार्थिव ॥ ५९
भ्रातॄनाश्वासयैतांस्त्वं सुहृदश्च परन्तप ॥ ५९॥

यो हि पापसमारम्भे कार्ये तद्भावभावितः ।
कुर्वन्नपि तथैव स्यात् कृत्वा च निरपत्रपः ॥ ६०॥

तस्मिंस्तत् किल्बिषं कर्म समस्तमिति शब्दितम् ।
प्रायश्चित्तं न तस्यास्ति ह्रासो वा पापकर्मणः ॥ ६१॥

त्वं तु शुक्लाभिजातीयः परदोषेण कारितः ।
अनिच्छमानः कर्मेदं कृत्वा च परितप्यसे ॥ ६२॥

अश्वमेधो महायज्ञः प्रायश्चित्तमुदाहृतम् ।
तमाहर महाराज विपाप्मैवं भविष्यसि ॥ ६३॥

मरुद्भिस्सह जित्वाऽरीन् मघवान् पाकशासनः ।
एकैकं क्रतुमाहृत्य शतकृत्वश्शतक्रतुः ॥ ६४॥

धूतपाप्मा जितस्वर्गो लोकान् प्राप्य सुखोदयान् ।
मरुद्गणवृतश्शक्रश्शुशुभे शोभयन् दिशः ॥ ६५॥

स्वर्गे लोके महीयन्तम् अप्सरोभिश्शचीपतिम् ।
ऋषयः पर्युपासन्त देवाश्च विबुधेश्वरम् ॥ ६६॥

सेयं त्वामनुसम्प्राप्ता विक्रमेण वसुन्धरा ।
निर्जिताश्च महीपाला विक्रमेण त्वयाऽनघ ॥ ६७॥

1. ख—नास्तीदमर्धम्

तेषां पुराणि राष्ट्राणि दत्वा राजन् सुहृद्वृतः ।
भ्रातॄन् पुत्रांश्च पौत्रांश्च स्वे स्वे राज्येऽभिषेचय ॥ ६८॥
बालानपि च गर्भस्थान् सान्त्वानि समुदाचरन् ।
रञ्जयन् प्रकृतीस्सर्वाः परिपाहि वसुन्धराम् ॥ ६९॥
कुमारो नास्ति येषां च कन्यास्तत्राभिषेचय ।
कामाशयो हि स्त्रीवर्गश् शोकमेवं प्रहास्यति ॥ ७०॥
एवमाश्वासनं कृत्वा सर्वराष्ट्रेषु भारत ।
यजस्व वाजिमेधेन यथेन्द्रो विजये पुरा ॥ ७१॥
न शोच्यास्ते महात्मानः क्षत्रियाः क्षत्रियर्षभ ।
स्वकर्मभिर्गता नाशं कृतान्तबलमोहिताः ॥ ७२॥
अवाप्तः क्षत्रधर्मस्ते प्राप्तं राज्यमकण्टकम् ।
चर स्वधर्मं कौन्तेय श्रेष्ठो यः प्रेत्यभाविकः ॥ ७३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
[अस्मिन्नध्याये ७३॥ श्लोकाः]

## ॥ एकत्रिंशोऽध्यायः ॥

व्यासेन युधिष्ठिरं प्रति प्रायश्चित्तप्रयोजकपापकर्मणां प्रायश्चित्तानां च कथनम् ॥ १ ॥ व्यासेन युधिष्ठिरं प्रति पापानां प्रायश्चित्तादिकथनम् ॥

युधिष्ठिरः—

कानि कर्माणि कृत्वेह प्रायश्चित्तीयते नरः ।
किं कृत्वा चैव मुच्येत तन्मे ब्रूहि पितामह ॥ १

व्यासः—

अकुर्वन् विहितं कर्म प्रतिषिद्धानि चाचरन् ।
प्रायश्चित्तीयते ह्येवं नरो मिथ्या च वर्तयन् ॥ २

सूर्येणाभ्युदितो यश्च ब्रह्मचारी भवत्युत ।
तथा सूर्याभिनिर्मुक्तः कुनखी श्यावदन्नपि ॥ ३

परिवित्तिः परिवेत्ता ब्रह्मोज्यायाश्च दूषकः ।
दिधिपूपतिस्तथा यस्स्याद् अग्रेदिधिषुरेव च ॥ ४

अवकीर्णी तथा यश्च द्विजातिवधकारकः ।
अतीर्थे ब्राह्मणे त्यागी तीर्थे चाप्रतिपादकः ॥ ५

ग्रामयाजी च कौन्तेय राज्ञो वा परिविक्रयी ।
[1]यश्चाग्नीनपविध्येत तथैव ब्रह्मविक्रयी ॥ ६

1. ख—नास्तीदमर्धम्

[1]एतान्येनांसि सर्वाणि व्युत्क्रान्तसमयश्च सः ॥ ६॥
अकार्याणि तु वक्ष्यामि यानि तानि निबोध मे ।
लोकवेदविरुद्धानि तान्येकाग्रमनाश्शृणु ॥ ७॥
स्वधर्मस्य परित्यागः परधर्मस्य च क्रिया ।
अयाज्ययाजनं चैव अभक्ष्यस्य च भक्षणम् ॥ ८॥
शरणागतसन्त्यागो भृत्यस्याभरणं तथा ।
रसानां विक्रयश्चापि तिर्यग्योनिवधस्तथा ॥ ९॥
आधानादीनि कर्माणि शक्तिमान् न करोति यः ।
अप्रयच्छंश्च सर्वाणि नित्यदेयानि भारत ॥ १०॥
दक्षिणानामदानं च ब्राह्मणस्वाभिमर्शनम् ।
सर्वाण्येतान्यकार्याणि प्राहुर्धर्मविदस्तथा ॥ ११॥
पित्रा विभजते पुत्रो यश्च स्याद्गुरुतल्पगः ।
अप्रजोऽयं नरव्याघ्र भवत्यधार्मिको नरः ॥ १२॥
उक्तान्येतानि कर्माणि विस्तरेणेतरेण च ।
यानि कुर्वंश्च पापानि प्रायश्चित्तीयते नरः ॥ १३॥
एतान्येव तु कर्माणि क्रियमाणानि मानवैः ।

---

1. ख—स्त्रीशूद्रवधको यश्च पूर्वापूर्वस्तु गर्हितः ।
वृथा पशुसमालम्भी वनदाहस्य कारकः ।
अनृतेनोपवक्ता च प्रतिपेद्धा गुरोस्तथा ।
यश्चाग्नीनपविध्येत तथैव ब्रह्मविक्रयी ॥ [अधिकः पाठः]

येषु येषु निमित्तेषु न [1]लिप्यन्तेऽथ ताञ् शृणु ॥ १४॥
प्रगृह्य शस्त्रमायान्तम् अपि वेदान्तगं रणे ।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥ १५॥
अपि चाप्यत्र कौन्तेय मन्त्रो वेदेषु पठ्यते ।
वेदप्रमाणविहितं धर्मं हि प्रब्रवीमि ते ॥ १६॥
अपेतं ब्राह्मणं वृत्ताद् यो हन्यादाततायिनम् ।
न तेन ब्रह्महा स स्यान्मन्युस्तन्मन्युमृच्छति ॥ १७॥
प्राणात्यये तथा ज्ञानाद् आचम्य मदिरामपि ।
अचोदितो धर्मपरः पुनस्संस्कारमर्हति ॥ १८॥
एतत् ते सर्वमाख्यातं कौन्तेयाभक्ष्यभक्षणम् ।
प्रायश्चित्तविधानेन सर्वमेतेन शुद्ध्यति ॥ १९॥
गुरुतल्पं हि गुर्वर्थे न दूषयति मानवम् ।
उद्दालकश्श्वेतकेतुं जनयामास शिष्यतः ॥ २०॥
स्तेयं कुर्वन् हि गुर्वर्थम् आपत्स्वपि न पातकी ॥ २१
बहुशः कामचारेण न चेद्यस्सम्प्रवर्तते ।
अन्यत्र ब्राह्मणस्वेभ्य आददानो न दुष्यति ॥ २२
स्वयंप्रकाशिता यश्च न स पापेन लिप्यते ॥ २२॥
प्राणत्राणेऽनृतं वाच्यम् आत्मनो वा परस्य वा ।

---

1. क-ख-घ—लुम्पन्त्यथ

गुर्वर्थे स्त्रीषु चैव स्याद् विवाहकरणे नृप ॥ २३॥

नावर्तते व्रतं स्वप्ने शुक्रमोक्षे कथञ्चन ।
आज्यहोमस्समिद्धेऽग्नौ प्रायश्चित्तं विधीयते ॥ २४॥

पारिवित्त्यं तु पतिते नास्ति प्रव्रजितेऽपि वा ।
भिक्षुके पारदार्ये च न तद्धर्मस्य दूषकम् ॥ २५॥

वृथा पशुसमालम्भं नैव कुर्यान्न कारयेत् ।
अनुग्रहः पशूनां हि संस्कारो विधिचोदितः ॥ २६॥

अनर्हे ब्राह्मणे दत्तम् अज्ञानात्तन्न दूषकम् ।
सकारणं तथा तीर्थे नित्यं वा प्रतिपादनम् ॥ २७॥

स्त्रियास्तथाऽभिचारिण्या निष्कृतिस्स्याददूषिका ।
अपि सा [1]पूयते तेन न तु भर्ता प्रदुष्यते ॥ २८॥

तत्त्वं ज्ञात्वा तु सोमस्य विक्रयस्स्याददोषवान् ।
असमर्थस्य भृत्यस्य विसर्गस्स्याददोषवान् ॥ २९॥

वनदाहो गवामर्थे क्रियमाणो न दूषकः ।
उक्तान्येतानि कर्माणि यानि कुर्वन्न दुष्यते ॥ ३०॥

प्रायश्चित्तानि वक्ष्यामि विस्तरेण च भारत ।
यानि कृत्वा नरः पूतो भविष्यति नराधिप ॥* ३१॥

1. क—सूयते ख-ब—दूयते
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

तपसा कर्मभिश्चैव प्रदानेन च भारत ।
पुनाति पापं पुरुषः पूतश्चेन्न प्रवर्तते ॥ ३२॥

एककालं तु भुञ्जानश् चरन् भैक्षं स्वकर्मकृत् ।
कपालपाणिः खट्वाङ्गी ब्रह्मचारी सदोत्थितः ॥ ३३॥

अनसूयुरधश्शायी कर्म लोके प्रकाशयन् ।
पूर्णैर्द्वादशभिर्वर्षैर् ब्रह्महा विप्रमुच्यते ॥ ३४॥

षड्भिर्वर्षैः कृच्छ्रभोजी ब्रह्महा पूयते नरः ।
मासे मासे प्रलम्बस्तु त्रिभिर्वर्षैर्विमुच्यते ॥ ३५॥

संवत्सरेण मासाशी पूयते नात्र संशयः ।
[1]तथैवोपरमन् राजन् स्वल्पेनापि प्रमुच्यते ॥ ३६॥

क्रतुनाऽप्यश्वमेधेन पूयते नात्र संशयः ॥ ३७
ये चास्यावभृथे स्नान्ति केचिदेवंविधा नराः ।

ते सर्वे धूतपाप्मानो भवन्तीति परा श्रुतिः ॥ ३८
ब्राह्मणार्थे हतो युद्धे मुच्यते ब्रह्महत्यया ॥ ३८॥
गवां शतसहस्रं तु पात्रेभ्यः प्रतिपादयन् ।
मुच्यते ब्रह्महत्यायास् सर्वपापेभ्य एव च ॥ ३९॥
कपिलानां सहस्राणि यो दद्यात् पञ्चविंशतिम् ।

---

1. ख—अर्धद्वयं नास्ति

दोग्ध्रीणां स च पापेभ्यस् सर्वेभ्योऽपि प्रमुच्यते ॥ ४०॥

गोसहस्रं सवत्सानां दोग्ध्रीणां प्राणसंशये ।
साधुभ्यो वै दरिद्रेभ्यो दत्त्वा मुच्येत किल्बिषात् ॥ ४१॥

शतं वै यस्तु काम्भोजान् ब्राह्मणेभ्यः प्रयच्छति ।
नियतेभ्यो महाराज स च पापात् प्रमुच्यते ॥ ४२॥

मनोरथं तु यो दद्याद् एकस्मै पुरुषर्षभ ।
न कीर्तयेच्च तद् दत्त्वा स च पापात् प्रमुच्यते ॥ ४३॥

सुरापानं तु यः कुर्याद् वह्निवर्णां पिबेन्नरः ।
स पावयत्यथात्मानम् इह लोके परत्र च ॥ ४४॥

मरुप्रपातं प्रपतञ् ज्वलनं वा समाविशन् ।
महाप्रस्थानमातिष्ठन् मुच्यते सर्वकिल्बिषात् ॥ ४५॥

बृहस्पतिसवेनेष्ट्वा सुरापो ब्राह्मणः पुनः ।
समितिं ब्राह्मणैर्गच्छेद् इतीयं ब्राह्मणी श्रुतिः ॥ ४६॥

उदपानं शिवं कुर्यात् सुरां पीत्वा विमत्सरः ।
पुनर्न च पिबेद्राजन् संस्कृतस्स च शुध्यते ॥ ४७॥

गुरुतल्पी शिलां तप्ताम् आयसीमभिसंविशेत् ।
पाणावाधाय वा शेफं प्रव्रजेदूर्ध्वदर्शनः ॥ ४८॥

शरीरस्य विमोक्षेण मुच्यते कर्मणोऽशुभात् ।

[1]अनृतेनोपवक्ता च प्रतिरोद्धा गुरोस्तथा ॥ ४९॥
उपहृत्य प्रियं तस्मै मनसः प्रीतिकारकम् ।
अवकीर्णनिमित्तं च ब्रह्महत्याव्रतं चरेत् ॥ ५०॥
खरचर्मवासाःषण्मासांस् ततो मुच्येत किल्बिषात् ॥ ५१
[2]स्तेनस्तस्याप्यपहरेत् तस्मै दद्यात् समं वसु ।
विविधेनाभ्युपायेन स्तेनो मुच्येत किल्बिषात् ॥ ५२
कृच्छ्राद्द्वादशरात्रेण स्वभ्यस्तेन दशापरम् ।
परिवित्ती भवेत् पूतः परिवेत्ता च भारत ॥ ५३
निवेश्यं तु पुनस्तेन भवेत्तारयता पितॄन् ।
न तु स्त्रिया भवेद्दोषो न तु सा तेन लिप्यते ॥ ५४
भाजनं पूतिनाऽशुद्धं चातुर्मास्यं विधीयते ।
स्त्रियस्तेन विशुध्यन्ति इति धर्मविदो विदुः ॥ ५५
स्त्रियस्त्वाशङ्किताः पापे नोपगम्या विजानता ।
रजसा ता विशुध्यन्ति भस्मना भाजनं यथा ॥ ५६
चतुष्पात् सकलो धर्मो ब्राह्मणानां विधीयते ।

---

1. ख—कर्मभ्यो विप्रमुच्यन्ते यतास्संवत्सरं स्त्रियः ।
महाव्रतं चरेद्यस्तु दद्यात् सर्वस्वमेव वा ॥
गुर्वर्थोवा हतो युद्धे स मुच्येत् कर्मणोऽशुभात् ॥ [ अधिकः पाठः ]

2. ख—परदारोपसेवी च परस्यापहरेद्वसु ।
संवत्सरव्रतं तीर्त्वा तथा मुच्येत किल्बिषात् ॥ [ अधिकः पाठः ]

पादोन इष्टो राजन्ये तथा धर्मो विधीयते ॥ ५७
तथा वैश्ये च शूद्रे च पादः पादो विधीयते ।
विद्यादेवंविधे तेषां गुरुलाघवनिर्णयम् ॥ ५८
तिर्यग्योनिवधं कृत्वा द्रुमांश्छित्त्वोत्तरान् बहून् ।
त्रिरात्रं वायुभक्षस्स्यात् कर्म च प्रथयन्नरः ॥ ५९
अगम्यागमने राजन् प्रायश्चित्तं विधीयते ।
आर्द्रवस्त्रेण षण्मासान् विभाव्यं भस्मशायिना ॥ ६०
एवमेव तु सर्वेषाम् अकार्याणां विधिर्भवेत् ।
ब्रह्मणोक्तेन विधिना दृष्टान्तागमहेतुना ॥ ६१
सावित्रीमप्यधीयानश् शुचौ देशे मिताशनः ।
अहिंस्रो मन्दकं जल्पन् मुच्यते सर्वकिल्विषात् ॥ ६२
अहस्सु सततं तिष्ठन्नभ्याकाशं निशास्स्वपन् ।
त्रिरह्नस्त्रिर्निशायां च सवासा जलमाविशेत् ॥ ६३
स्त्रीशूद्रपतितांश्चापि नाभिभाषेत वाग्यतः ।
पापान्यज्ञानतः कृत्वा मुच्येदेवंव्रतो द्विजः ॥ ६४
एवं शुभाशुभं प्रेत्य लभते भूतसाक्षिकम् ।
अतिरिच्येत्तयोर्यत्तु तत् कर्ता लभते फलम् ॥ ६५
तस्माद्दानेन तपसा कर्मणा वा फलं शुभम् ।
वर्धयेदशुभं कृत्वा यथा स्यादतिरेकवान् ॥ ६६

कुर्याच्छुभानि कर्माणि निमित्ते पापकर्मणाम् ।
दद्याच्च नित्यं वित्तानि तथा मुच्येत किल्बिषात् ॥ ६७

अनुरूपं हि पापस्य प्रायश्चित्तमुदाहृतम् ।
महापातकवर्जं तु प्रायाश्चित्तं विधीयते ॥ ६८

भक्ष्याभक्ष्येषु सर्वेषु वाच्यावाच्ये तथैव च ।
अज्ञानज्ञानयो राजन् विहितान्यविजानतः ॥ ६९

जानता तु कृतं पापं गुरु सर्वं भवत्युत ।
अज्ञानात् स्खलिते दोषे प्रायश्चित्तं विधीयते ॥ ७०

शक्यते विधिना पापं यथोक्तेन व्यपोहितुम् ।
आस्तिके श्रद्दधाने च विधिरेष विधीयते ॥ ७१

नास्तिकाश्रद्दधानेषु पुरुषेषु कदाचन ।
दम्भदोषप्रधानेषु विधिरेष न शिष्यते ॥ ७२

शिष्टाचारश्च दिष्टश्च धर्मो धर्मविदां वर ।
सेवितव्यो नरव्याघ्र प्रेत्य चेह हितेप्सुना ॥ ७३

स राजन् मोक्ष्यते पापात् तेन पूर्वेण हेतुना ।
त्राणार्थं वा वधे तेषाम् अथवा नृपकर्मणा ॥ ७४

अथवा ते घृणा काचित् प्रायश्चित्तं चरिष्यसि ।
मा चैवानार्यजुष्टेन मृत्युना निधनं गमः ॥ ७५

वैशम्पायनः—

एवमुक्तो भगवता धर्मराजो युधिष्ठिरः ।
चिन्तयित्वा मुहूर्तं तु प्रत्युवाच तपोधनम् ॥ ७६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
[ अस्मिन्नध्याये ७६ श्लोकाः ]

## ॥ द्वात्रिंशोऽध्यायः ॥

व्यासेन युधिष्ठिरं प्रति भक्ष्याभक्ष्यपात्रापात्रविवेचनम् ॥

युधिष्ठिरः—

किं भक्ष्यं किमभक्ष्यं च किञ्च देयं प्रशस्यते ।
किञ्च पात्रमपात्रं वा तन्मे ब्रूहि पितामह ॥ १

व्यासः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
सिद्धानां चैव संवादं मनोश्चैव प्रजापतेः ॥ २

महर्षयो व्रतपरास् समागम्य पुरा प्रभुम् ।
धर्मं पप्रच्छुरासीनम् आदिकाले प्रजापतिम् ॥ ३

महर्षयः—

कथमन्नं कथं दानं गम्यागम्याः कथं स्त्रियः ।

कार्याकार्यं च नस्सर्वं शंस वै त्वं प्रजापते ॥ ४

व्यासः—

तैरेवमुक्तो भगवान् मनुस्स्वायम्भुवोऽब्रवीत् ॥ ४॥

मनुः—

शुश्रूषध्वं यथावृत्तं धर्मं व्याससमासतः ॥ ५

अदत्तस्यानुपादानं दानमध्ययनं तपः ।
अहिंसा सत्यमक्रोधः क्षमा धर्मस्य लक्षणम् ॥ ६

स चैव धर्मस्सोऽधर्मो देशकाले प्रतिष्ठितः ।
[1]आदानमनृतं हिंसा धर्मो ह्यात्यन्तिकस्स्मृतः ॥ ७

द्विविधावप्युभावेतौ धर्माधर्मौ विजानताम् ।
अप्रवृत्तिः प्रवृत्तिश्च द्वैविध्यं लोकवेदयोः ॥ ८

अप्रवृत्तेरमर्त्यत्वं मर्त्यत्वं कर्मणः फलम् ॥ ८॥
अशुभस्याशुभं विद्याच्छुभस्य शुभमेव च ।
एतयोश्चोभयोस्स्यातां शुभाशुभतया तथा ॥ ९॥

दैवं च दैवयुक्तं च प्राणश्च प्रलयश्च ह ।
अप्रेक्षापूर्वकारणाद् अशुभानां शुभं फलम् ॥ १०॥

ऊर्ध्वं भवति सन्देहाद् इहारिष्टार्थमेव वा ।
अप्रेक्षापूर्वकरणात् प्रायश्चित्तं विधीयते ॥ ११॥

---

1. क-ख-ब—अदानं

क्रोधमोहकृते चैव दृष्टान्तागमहेतुभिः ।
शरीराणामुपक्लेशो मनसश्च प्रियाप्रिये ॥ १२॥

तदौषधैश्च मन्त्रैश्च प्रायश्चित्तैश्च शाम्यति ॥ १३

[1]जातिश्रेण्यधिवासानां कुलधर्मांश्च शाश्वतान् ।
वर्जयेन्न हि ते धर्मा एषां धर्मो न विद्यते ॥ १४

दश वा वेदशास्त्रज्ञास् त्रयो वा धर्मपाठकाः ।
यद्ब्रूयुः कार्य उत्पन्ने स धर्मो धर्मसंशये ॥ १५

अनुष्णा मृत्तिका चैव तथा चैव पिपीलिकाः ।
श्लेष्मातकस्तथा विप्रैर् अभक्ष्यं विषमेव च ॥ १६

अभक्ष्या ब्राह्मणैर्मत्स्याश् शकलैर्ये विवर्जिताः ।
चतुष्पात् कच्छपादन्यो मण्डूका जलजाश्च ये ॥ १७

भासा हंसास्सुपर्णाश्च चक्रवाकाः [2]प्लवा वृकाः ।
मद्गवश्चैव गृध्राश्च काकोलूकास्तथैव च ॥ १८

क्रव्यादा दंष्ट्रिणस्सर्वे चतुष्पात् पक्षिणश्च ये ।

---

1. अ—उपवासेनैकरात्रं दण्डोत्सर्गे नराधिपः ।
विशुध्येदात्मशुद्ध्यर्थं त्रिरात्रं तु पुरोहितः ॥
क्षयं शोकं प्रकुर्वाणो न म्रियेत यदा नरः ।
शस्त्रादिभिरुपाविष्टस् त्रिरात्रं तत्र निर्दिशेत् ॥ [अधिकः पाठः]

2. क-ब—बका वृकाः ख—चाकान्धका वृकाः

येषां चोभयतो दन्ताश् चतुर्दंष्ट्राश्च सर्वशः ॥ १९

[1]एडकानां मृगोष्ट्राणां सूकराणां गवामपि ।
मानुषीणां खरीणां च न पिवेद्ब्राह्मणः पयः ॥ २०

प्रेतान्नं सूतकान्नं च यच्च किञ्चिदनिर्दशम् ।
अभोज्यं चाप्यपेयं च धेनोर्दुग्धमनिर्दशम् ॥ २१

तक्ष्णश्चर्मावकर्तुश्च पुंश्चल्या रजकस्य च ।
चिकित्सकस्य यच्चान्नम् अभोज्यं रक्षिणस्तथा ॥ २२

गणग्रामाभिशस्तानां रङ्गस्त्रीजीविनश्च ये ।
परिवित्तीनामपुंसां च पुंसि द्यूतविदां तथा ॥ २३

वाद्यमानाहृतं चान्नं [2]शुक्तं पर्युषितं च यत् ।
सुरानुगतमुच्छिष्टम् अभोज्यं शोषितं च यत् ॥ २४

पिष्टमांसेक्षुशाकानाम् आविकापयसस्तथा ।
सक्तु धानाः करम्भाश्च नोपभोज्याश्चिरं स्थिताः ॥ २५

पायसं कृसरं मांसम् अपूपं च वृथा कृतम् ।
अभोज्यं चाप्यभक्ष्यं च ब्राह्मणैर्गृहमेधिभिः ॥ २६

देवानृषीन् मनुष्यांश्च पितॄन् [3]भृत्यांश्च देवताः ।

---

1. क-घ—एणकाश्च  ख—एडकाश्च
2. क—शूक्तं  ख-घ—भुक्तं
3. ख—भ्रातॄंश्च  घ—पुत्रांश्च

पूजयित्वा ततः पश्चाद् गृहस्थो भोक्तुमर्हति ॥ २७
यथा प्रव्राजितो भिक्षुस् तथैव स्वे गृहे वसेत् ।
एवंवृत्तः प्रियैर्दारैस् संवसन् धर्ममाप्नुयात् ॥ २८

न दद्याद्यशसे दानं न भयान्नोपकारिणे ।
न नृत्यगीतशीलेषु हासकेषु च धर्मतः ॥ २९

न मत्ते चैव नोन्मत्ते न स्तेने न नपुंसके ।
न वाग्घीने विवर्णे वा नाङ्गहीने न वामने ॥ ३०

न दुर्जने दौष्कुले वा व्रतैर्वा ये न संस्कृताः ।
अश्रोत्रिये च यद्दानं ब्राह्मणे ब्रह्मवर्जिते ॥ ३१

असम्यक् चैव यद्दानम् असम्यक् च प्रतिग्रहः ।
उभयोस्स्यादनर्थाय दातुरादातुरेव च ॥ ३२

यथा खदिरमालम्ब्य शिलां वाऽप्यर्णवं तरन् ।
मज्जेत मज्जतां तद्वद् दाता यश्च प्रतीच्छति ॥ ३३
काष्ठैरार्द्रैर्यथा वह्निर् अवदीर्णो न दीप्यते ।
तपस्स्वाध्यायचारित्रैर् एवं हीनः प्रतिग्रही ॥ ३४
कपाले यद्वदापस्स्युश् श्वदृतौ वा यथा पयः ।
आश्रयस्थानदोषेण वृत्तहीने तथा श्रुतम् ॥ ३५
निर्मन्त्रो निर्व्रतो यस्स्याद् अशास्त्रज्ञोऽनसूयकः ।

अनुक्रोशात् प्रदातव्यं हीनेष्वेवं नरेषु च ॥ ३६

न वा देयमनुक्रोशाद् दीनायापगुणाय तु ।
आप्ताचरित इत्येव धर्म इत्येव वा पुनः ॥ ३७

निष्कारणं स्मृतं दत्तं ब्राह्मणे ब्रह्मवर्जिते ।
न फलेत् पात्रदोषेण न मेऽत्रास्ति विचारणा ॥ ३८

यथा दारुमयो हस्ती यथा चर्ममयो मृगः ।
ब्राह्मणश्चानधीयानस् त्रयस्ते नामधारकाः ॥ ३९

यथा षण्ढोऽफलस्त्रीषु यथा गौर्गवि चाफला ।
शकुनिर्वाऽप्यपक्षस्स्यान्निर्मन्त्रो ब्राह्मणस्तथा ॥ ४०

ग्रामस्थानं यथा शून्यं यथा कूपश्च निर्जलः ।
यथा हुतमनग्नौ च तथैव स्यान्निराकृतौ ॥ ४१

देवतानां पितॄणां च हव्यकव्यविनाशनः ।
सर्वथाऽर्थहरो मूर्खो न लोकान् प्राप्तुमर्हति ॥ ४२

एतत्ते कथितं सर्वं यथावृत्तं युधिष्ठिर ।
समासेन महच्चैतच् छ्रोतव्यं भरतर्षभ ॥ ४३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
[ अस्मिन्नध्याये ४३ श्लोकाः ]

---



## ॥ त्रयस्त्रिंशोऽध्यायः ॥

व्यासेन भीष्ममुखाद्राजधर्मादिश्रवणे आदिष्टस्य युधिष्ठिरस्य कृष्णाद्याज्ञया धृतराष्ट्रादिभिस्सह कुरुनगरप्रवेशः ॥



युधिष्ठिरः—

श्रोतुमिच्छामि भगवन् विस्तरेण महामुने ।
राजधर्मान् द्विजश्रेष्ठ चातुर्वर्ण्यस्य चाखिलान् ॥ १

आपत्सु च यथा नीतिः प्रणेतव्या द्विजोत्तम ।
धर्म्यमालम्ब्य पन्थानं विजयेयं कथं महीम् ॥ २

प्रायश्चित्तकथा ह्येषा भक्ष्याभक्ष्यसमन्विता ।
कौतूहलानुप्रवणा हर्षं जनयतीव मे ॥ ३

धर्मचर्या च राज्यं च नित्यमेव विरुध्यते ।
येन मुह्यति मे चेतश्चिन्तयानस्य नित्यशः ॥ ४

वैशम्पायनः—

तमुवाच महातेजा व्यासो वेदविदां वरः ।
नारदं समभिप्रेक्ष्य सर्वं जानन् पुरातनम् ॥ ५

व्यासः—

श्रोतुमिच्छाऽस्ति चेद्धर्मं निखिलेन नराधिप ।
प्रेहि भीष्मं महाबाहो कुरुवृद्धं पितामहम् ॥ ६

स ते सर्वरहस्येषु संशयान् मनसि स्थितान् ।
छेत्ता भागीरथीपुत्रस् सर्वज्ञस्सर्व[1]धर्मवित् ॥ ७

जनयामास यं देवी दिव्या त्रिपथगा नदी ।
साक्षाद्ददर्श यो देवान् सर्वाञ् शक्रपुरोगमान् ॥ ८

बृहस्पतिपुरोगांश्च देवर्षीनसकृत् प्रभुः ।
तोषयित्वोपचारेण राजनीतिमधीतवान् ॥ ९

उशना वेद यच्छास्त्रं देवासुरगुरुर्द्विजः ।
स च धर्मं सवैयाग्रं प्राप्तवान् कुरुसत्तमः ॥ १०

भार्गवाच्च्यवनाच्चापि वेदानङ्गोपबृंहितान् ।
प्रतिपेदे महाबुद्धिर् वसिष्ठाच्चरितव्रतः ॥ ११

पितामहसुतं ज्येष्ठं कुमारं दीप्ततेजसम् ।
अध्यात्मगतितत्त्वज्ञम् उपाशिक्षत यः पुरा ॥ १२

मार्कण्डेयमुखात् कृत्स्नं यतिधर्ममवाप्तवान् ।
रामादस्त्राणि शक्राच्च प्राप्तवान् पुरुषर्षभः ॥ १३

मृत्युरात्मेच्छया यस्य जातस्य मनुजेष्वपि ।
तथाऽनपत्यस्य सतः पुण्यलोका दिवि श्रुताः ॥ १४
यस्य ब्रह्मर्षयः पुण्या नित्यमासन् सभासदः ॥ १४॥

1. क-ख-घ—तत्त्ववित्

यस्य नाविदितं किञ्चिज् ज्ञेयं ज्ञेयेषु दृश्यते ॥ १५

स ते वक्ष्यति धर्मज्ञो धर्मसूक्ष्मार्थतत्त्ववित् ।
तमभ्येहि पुरा प्राणान् स विमुञ्चति धर्मवित् ॥ १६

वैशम्पायनः—

एवमुक्तस्तु कौन्तेयो दीर्घप्रज्ञो महामतिः ।
उवाच वदतां श्रेष्ठं व्यासं सत्यवतीसुतम् ॥ १७

युधिष्ठिरः—

वैशसं सुमहत् कृत्वा ज्ञातीनां रोमहर्षणम् ।
आगस्कृत् सर्वलोकस्य पृथिवीनाशकारकः ॥ १८

घातयित्वा छलेनाजौ तमेवाजिह्मयोधिनम् ।
उपसम्प्रष्टुमर्हामि तमहं केन हेतुना ॥ १९

वैशम्पायनः—

ततस्तं नृपतिश्रेष्ठं चातुर्वर्ण्यहितेप्सया ।
पुनरेव महाबाहुर् यदुश्रेष्ठोऽब्रवीद्वचः ॥ २०

श्रीभगवान्—

नेदानीमतिनिर्बन्धं शोके त्वं कर्तुमर्हसि ।
यदाह भगवान् व्यासस् तत् कुरुष्व नृपोत्तम ॥ २१

ब्राह्मणास्त्वां महाबाहो भ्रातरश्च महौजसः ।
पर्जन्यमिव घर्मान्ते नाथमाना उपासते ॥ २२

हतशिष्टाश्च राजानः कृत्स्नं चैतत् समागतम् ।
चातुर्वर्ण्यं महाराज राष्ट्रं ते कुरुजाङ्गलम् ॥ २३

प्रियार्थमपि चैतेषां ब्राह्मणानां महात्मनाम् ।
नियोगादस्य च गुरोर् व्यासस्यामिततेजसः ॥ २४

[1]सुहृदामस्मदादीनां द्रौपद्याश्च परन्तप ।
कुरु प्रियममित्रघ्न लोकस्य च हितं कुरु ॥ २५

वैशम्पायनः—

एवमुक्तस्स कृष्णेन राजा राजीवलोचनः ।
हितार्थं सर्वलोकस्य समुत्तस्थौ महामनाः ॥ २६

सोऽनुनीतो भगवता विष्टरश्रवसा स्वयम् ।
द्वैपायनेन च तथा देवस्थानेन जिष्णुना ॥ २७

एतैश्चान्यैश्च बहुभिर् अनुनीतो युधिष्ठिरः ।
व्यजहान्मानसं दुःखं सन्तापं च महायशाः ॥ २८

श्रुतवाक्यश्श्रुतनिधिश् श्रुतश्राव्यविशारदः ।
व्यासस्य मनसा शान्तिम् अगमत् पाण्डुनन्दनः ॥ २९

स तैः परिवृतो राजा नक्षत्रैरिव चन्द्रमाः ।
धृतराष्ट्रं पुरस्कृत्य पुरं स्म प्रविवेश ह ॥ ३०

प्रविविक्षुस्स धर्मज्ञः कुन्तीपुत्रो युधिष्ठिरः ।

---

1. क-ख-घ—सुहृदां चास्मदीयानां

अर्चयामास देवांश्च ब्राह्मणांश्च सहस्रशः ॥ ३१

ततो नवं रथं शुभ्रं कम्बलाजिनसंवृतम् ।
युक्तं षोडशभिस्त्वश्वैः पाण्डुरैश्शुभलक्षणैः ॥ ३२

मन्त्रैरभ्यर्चितं पुण्यैस् स्तूयमानश्च वन्दिभिः ।
आरुरोह यथा देवस् सोमोऽमृतमयं रथम् ॥ ३३

जग्राह रश्मीन् कौन्तेयो भीमो भीमपराक्रमः ।
अर्जुनः पाण्डुरं छत्रं धारयामास भानुमत् ॥ ३४

ध्रियमाणं तु तच्छत्रं पाण्डुरं राजमूर्धनि ।
शुशुभे तारके राजन् सितमभ्रमिवाम्बरे ॥ ३५

चामरव्यजने तस्य वीरौ जगृहतुस्तदा ।
चन्द्ररश्मिप्रभे दिव्ये माद्रीपुत्रावलङ्कृते ॥ ३६

ते पञ्च रथमास्थाय भ्रातरस्समलङ्कृताः ।
भूतानीव समस्तानि राजन् ददृशिरे तदा ॥ ३७

आस्थाय तु रथं शुभ्रं युक्तमश्वैर्मनोजवैः ।
अन्वगात् पृष्ठतो राजन् युयुत्सुः पाण्डवाग्रजम् ॥ ३८

रथं हेममयं शुभ्रं सैन्यसुग्रीवयोजितम् ।
सह सात्यकिना कृष्णस् समास्थायान्वयात् कुरून् ॥ ३९

नरयानेन तु ज्येष्ठः पिता पार्थस्य भारत ।

अग्रतो धर्मराजस्य गान्धारीसहितो ययौ ॥ ४०

कुरुस्त्रियश्च तास्सर्वाः कुन्ती कृष्णा च माधवी ।
यानैरुच्चावचैर्जग्मुर् विदुरेण पुरस्कृताः ॥ ४१

ततो रथाश्च बहुला नागाश्च समलङ्कृताः ।
पादाताश्च हयाश्चान्ये पृष्ठतस्समनुव्रजन् ॥ ४२

ततो वैतालिकैस्सूतैर् मागधैश्च सुभाषितैः ।
स्तूयमानो ययौ राजा नगरं नागसाह्वयम् ॥ ४३

तत् प्रयाणं महाराज बभूवाप्रतिमं भुवि ।
आकुलाकुलमुत्सृष्टं हृष्टपुष्टजनायुतम् ॥ ४४

[1]पाण्डुरेण च माल्येन पताकाभिश्च वेदिभिः ।
[2]नगरं राजमार्गश्च यथावत् समलङ्कृतम् ॥ ४५

अभियाने तु पार्थस्य नरैर्नगरवासिभिः ।
संवृतो राजमार्गोऽभूद् धूपनैश्च प्रधूपितः ॥ ४६

अथ पूर्णैश्च गन्धानां नागपुष्पैः प्रियङ्गुभिः ।
माल्यदामभिरालम्बै राजवेश्माभिसंवृतम् ॥ ४७

कुम्भाश्च नगरद्वारि वारिपूर्णा नवा दृढाः ।

---

1. ख—अभियाने तु पार्थस्य नरैर्नगरवासिभिः ।
नगरं राजमार्गश्च यथावत्समलङ्कृतम् ॥
2. ख—संवृतो राजमार्गोऽभूद् धूपनैश्च प्रधूपितः ॥ अर्धद्वयमिदं मूलपाठाद् व्यत्यासेन पतितम्

अन्यास्सुमनसश्चापि स्थापितास्तत्र तत्र ह ॥ ४८

तथा ह्यलङ्कृतं द्वारं नगरं पाण्डुनन्दनः ।
स्तूयमानश्शुभैर्वाक्यैः प्रविवेश सुहृद्वृतः ॥ ४९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
[ अस्मिन्नध्याये ४९ श्लोकाः ]

## ॥ चतुस्त्रिंशोऽध्यायः ॥



राजमार्गे नागरैः स्तूयमानस्य युधिष्ठिरस्य राजगृहमेत्य सभाप्रवेशः ॥ १ ॥ तत्र युधिष्ठिरं निन्दतश्चार्वाकराक्षसस्य ब्राह्मणैर्हुंकारेण भस्मीकरणम् ॥ २ ॥ कृष्णेन युधिष्ठिरं प्रति चार्वाकराक्षसस्य पूर्ववृत्तकथनम् ॥ ३ ॥

( चार्वाकनिग्रहपर्व )

वैशम्पायनः—

प्रवेशनं तु पार्थानां जनानां पुरवासिनाम् ।
दिदृक्षूणां सहस्राणि समाजग्मुर्बहून्यपि ॥ १

स राजमार्गश्शुशुभे समलङ्कृतचत्वरः ।
यथा चन्द्रोदये राजन् वर्धमानो महोदधिः ॥ २

गृहाणि राजमार्गेषु रत्नवन्ति बहून्यपि ।
प्राकम्पन्निव भारेण स्त्रीणां पूर्णानि सर्वशः ॥ ३

ताश्शनैरिव सव्रीडं प्रशशंसुर्युधिष्ठिरम् ।
भीमसेनार्जुनौ चैव माद्रीपुत्रौ च पाण्डवौ ॥ ४

स्त्रियः—

धन्या त्वमसि पाञ्चालि या त्वं पुरुषसत्तमान् ।
उपतिष्ठसि कल्याणि महर्षीनिव गौतमी ॥ ५

तव कर्माण्यमोघानि व्रतचर्या च भामिनि ॥ ५॥

वैशम्पायनः—

इति कृष्णां महाराज प्रशशंसुस्तदा स्त्रियः ॥ ६

प्रशंसावचनैस्तासां मिथश्शब्दैश्च भारत ।
प्रीतिजैश्च तदा शब्दैः पुरमासीत् समाकुलम् ॥ ७

तमतीत्य यथायुक्तं राजमार्गं युधिष्ठिरः ।
अलङ्कृतं शोभमानम् उपायाद्राजवेश्म ह ॥ ८

ततः प्रकृतयस्सर्वाः पौरा जानपदास्तथा ।
ऊचुश्श्रोत्रसुखा वाचस् समुपेत्य ततस्ततः ॥ ९

जनाः—

दिष्ट्या जयसि राजेन्द्र शत्रूञ् छत्रुनिपूदन ।
दिष्ट्या राज्यं पुनः प्राप्तं धर्मेण च बलेन च ॥ १०

भव नस्त्वं महाराज राज्याय शरदां शतम् ।
प्रजाः पालय धर्मेण यथेन्द्रस्त्रिदिवं नृप ॥ ११

वैशम्पायनः—

एवं राजकुलद्वारि मङ्गलैरभिपूजितः ।
आशीर्वादान् द्विजैरुक्तान् प्रतिगृह्य समन्ततः ॥ १२

प्रविश्य भवनं राजा देवराजगृहोपमम् ।
श्रुत्वा विजयसंयुक्तं रथात् पश्चादवातरत् ॥ १३

प्रविश्याभ्यन्तरं राजा दैवतान्यभिगम्य च ।
पूजयामास गन्धैश्च माल्यै रत्नैश्च सर्वशः ॥ १४

निश्चक्राम ततश्श्रीमान् पुनरेव महायशाः ।
ददर्श ब्राह्मणांश्चैव सोऽभिरूपानवस्थितान् ॥ १५

स संवृतस्तदा विप्रैर् आशीर्वादविवक्षुभिः ।
शुशुभे विमलश्चन्द्रस् तारागणवृतो यथा ॥ १६

तान् सुसम्पूजयामास कौन्तेयो विधिवद्द्विजान् ॥ १६॥

धौम्यं गुरुं पुरस्कृत्य ज्येष्ठं पितरमेव च ।
प्रविवेश सभां राजा सुधर्मां वासवो यथा ॥ १७॥

सुमनोमोदकै रत्नैर् हिरण्येन च भूरिणा ।
गोभिर्वस्त्रैश्च राजेन्द्र विविधैश्च किमिच्छकैः ॥ १८॥

ततः पुण्याहघोषोऽभूद् दिवं स्तब्ध्वेव भारत ।
सुहृदां हर्षजननः पुण्यश्श्रुतिसुखावहः ॥ १९॥

हंसवन्नेदुषां राजन् द्विजानां तत्र भारत ।
शुश्रुवे वेदविदुषां पुष्कलार्थपदाक्षरः ॥ २०॥

ततो दुन्दुभिनिर्घोषश् शङ्खानां च रवो महान् ।
जयं प्रवदतां तत्र स्वनः प्रादुरभून्नृप ॥ २१॥

निश्शब्दे च स्थिते तत्र ततो विप्रजने पुनः ।
राजानं ब्राह्मणच्छद्मा चार्वाको राक्षसोऽब्रवीत् ॥ २२॥

तत्र दुर्योधनसखो भिक्षुरूपेण संवृतः ।
साङ्ख्यश्शिखी त्रिदण्डी च धृष्टो विगतसाध्वसः ॥ २३॥

वृतस्सर्वैस्तथा विप्रैर् आशीर्वादविवक्षुभिः ।
परस्सहस्रै राजेन्द्र तपोनियमसंस्थितैः ॥ २४॥

सुदुष्टः पापमाशंसुः पाण्डवानां महात्मनाम् ।
अनामन्त्र्यैव तान् विप्रान् इत्युवाच महीपतिम् ॥ २५॥

चार्वाकः—

इमे प्राहुर्द्विजास्सर्वे समारोप्य वचो मयि ॥ २६

धिग्भवन्तं कुरुपतिं ज्ञातिघातिनमाहवे ।
किं ते राज्येन कौन्तेय कृत्वेमं ज्ञातिसङ्क्षयम् ॥ २७

घातयित्वा गुरूंश्चैव मृतं श्रेयो न जीवितम् ॥ २७॥

वैशम्पायनः—

इति ते तद् द्विजाश्श्रुत्वा तस्य दुष्टस्य रक्षसः ।

विव्यथुश्चुक्रुशुश्चैव तस्य वाक्यप्रधर्षिताः ॥ २८॥

ततस्ते ब्राह्मणास्सर्वे स च राजा युधिष्ठिरः ।
व्रीडिताः परमोद्विग्नास् तूष्णीमासन् विशां पते ॥ २९॥

युधिष्ठिरः—

प्रसीदन्तु भवन्तो मे प्रणतस्याभियाचतः ।
प्रत्यापन्नव्यसनिनं न मां बाधितुमर्हथ ॥ ३०॥

वैशम्पायनः—

ततो राजन् ब्राह्मणास्ते सर्व एव विशां पते ।
ऊचुर्नैष द्विजोऽस्माकम् अन्यस्तु तव पार्थिव ॥ ३१॥

जज्ञुश्चैवं महात्मानस् ततस्तं ज्ञानचक्षुषा ।
ब्राह्मणा वेदविद्वांसस् तपसा विमलीकृताः ॥ ३२॥

ब्राह्मणाः—

एष दुर्योधनसखो विश्रुतो ब्रह्मराक्षसः ।
परिव्राजकरूपेण हितं तस्य चिकीर्षति ॥ ३३॥

न वयं ब्रूम धर्मात्मन् व्येतु ते भयमीदृशम् ।
उपतिष्ठतु कल्याणं भवन्तं भ्रातृभिस्सह ॥ ३४॥

वैशम्पायनः—

ततस्ते ब्राह्मणास्सर्वे हुङ्कारैः क्रोधमूर्च्छिताः ।
निर्भर्त्सयन्तश्शुचयो निजघ्नुः पापराक्षसम् ॥ ३५॥

स पपात विनिर्दग्धस् तेजसा ब्रह्मवादिनाम् ।
महेन्द्राशनिनिर्दग्धः पादपोऽङ्कुरवानिव ॥ ३६॥

पूजिताश्च ययुर्विप्रा राजानमभिनन्द्य तम् ।
राजा च हर्षमापेदे पाण्डवस्ससुहृज्जनः* ॥ ३७॥

ततस्तत्र तु राजानं तिष्ठन्तं भ्रातृभिस्सह ।
उवाच देवकीपुत्रस् सर्वदर्शी जनार्दनः ॥ ३८॥

श्रीभगवान्—

ब्राह्मणस्तात लोकेऽस्मिन् अर्चनीयतमास्सदा ।
एते भूमिचरा देवा वाग्विषास्सुप्रसादकाः ॥ ३९॥

पुरा कृतयुगे तात चार्वाको नाम राक्षसः ।
तपस्तेपे महाबाहो बदर्यां बहुवार्षिकम् ॥ ४०॥

वरेण च्छन्द्यमानश्च ब्रह्मणा च पुनः पुनः ।
अभयं सर्वभूतेभ्यो वरयामास भारत ॥ ४१॥

द्विजावमानादन्यत्र प्रादाद्वरमनुत्तमम् ।
अभयं सर्वभूतेभ्यस् ततस्तस्मै जगत्प्रभुः ॥ ४२॥

स तु लब्धवरः पापो देवानमितविक्रमः ।
राक्षसस्तापयामास तीव्रकर्मा महाबलः ॥ ४३॥

ततो देवास्समेत्याथ ब्रह्माणमिदमब्रुवन् ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

वधाय रक्षसस्तस्य बलविप्रकृतास्तदा ॥ ४४॥

तानुवाचाव्ययो देवान् विहितं तत्र वै मया ।
यथाऽस्य भविता मृत्युर् अचिरेण दिवौकसः ॥ ४५॥

राजा दुर्योधनो नाम सखाऽस्य भविता नृपः ।
तत्स्नेहेनावबद्धोऽसौ ब्राह्मणानवमंस्यते ॥ ४६॥

तत्रैनं रुषिता विप्रा विप्रकारप्रधर्षिताः ।
धक्ष्यन्ति वाग्बलाः पापं ततो नाशं गमिष्यति ॥ ४७॥

स एष निहतश्शेते ब्रह्मदण्डेन राक्षसः ।
चार्वाको नृपतिश्रेष्ठ मा शुचो भरतर्षभ ॥ ४८॥

हतास्ते क्षत्रधर्मेण ज्ञातयस्तव पार्थिव ।
स्वर्गताश्च महात्मानो वीराः क्षत्रियपुङ्गवाः ॥ ४९॥

स त्वमातिष्ठ कार्याणि मा ते भूद्बुद्धिरन्यथा ।
शत्रूञ् जहि प्रजा रक्ष द्विजांश्च परिपूजय ॥ ५०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
॥ ८४ ॥ चार्वाकनिग्रहपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये ५०॥ श्लोकाः]
[चार्वाकनिग्रहपर्व समाप्तम्]

## ॥ पञ्चत्रिंशोऽध्यायः ॥



कृष्णादिभिर्युधिष्ठिरस्य राज्येऽभिषेचनम् ॥

( आभिषेचनिकपर्वशेषः )

वैशम्पायनः—

ततः कुन्तीसुतो राजा गतमन्युर्गतज्वरः ।
काञ्चने प्राङ्मुखो मृष्टे न्यषीदत् परमासने ॥ १

तमेवाभिमुखौ पीठं प्रमृष्टं काञ्चनं शुभम् ।
सात्यकिर्वासुदेवश्च निषीदतुररिन्दमौ ॥ २

मध्ये कृत्वा तु राजानं भीमसेनार्जुनावुभौ ।
निषीदतुर्महात्मानौ श्लक्ष्णयोर्मणिपीठयोः ॥ ३

दान्ते शय्यासने शुभ्रे जाम्बूनदविभूषिते ।
पृथाऽपि सहदेवेन सहास्ते नकुलेन च ॥ ४

विदुरस्सहधौम्यश्च धृतराष्ट्रश्च कौरवः ।
निषेदुर्ज्वलनाकारेष्वासनेषु पृथक् पृथक् ॥ ५

युयुत्सुस्सञ्जयश्चैव गान्धारी च यशस्विनी ।
धृतराष्ट्रो यतो राजा ततस्सर्वे उपाविशन् ॥ ६

तत्रोपविष्टो धर्मात्मा श्वेतास्सुमनसस्स्पृशन् ।
स्वस्तिकानक्षतान् भूमिं सुवर्णं रजतं मणीन् ॥ ७

तत: प्रकृतयस्सर्वाः पुरस्कृत्य पुरोधसम् ।
ददृशुर्धर्मराजानम् आदाय बहुमङ्गलम् ॥ ८
पृथिवीं च सुवर्णं च रत्नानि विविधानि च ।
आभिषेचनिकं भाण्डं सर्वसम्भारसम्भृतम् ॥ ९
काञ्चनौदुम्बरास्तत्र राजताः पृथिवीमयाः ।
पूर्णकुम्भास्सुमनसो लाजा बर्हींषि गोरसाः ॥ १०
[1]शमीपिप्पलपालाशसमिधो मधुसर्पिषी ।
स्रुव औदुम्बरश्शङ्खस् तथा हेमविभूषितः ॥ ११
दाशार्हेणाभ्यनुज्ञातस् तत्र धौम्यः पुरोहितः ।
प्रागुदक्प्रवणे वेदीं लक्षणेनोपलिप्य च ॥ १२
व्याघ्रचर्मोत्तरे श्लक्ष्णे सर्वतोभद्र आसने ।
दृढपादप्रतिष्ठाने हुताशनसमत्विषि ॥ १३
उपवेश्य महात्मानं कृष्णां च द्रुपदात्मजाम् ।
जुहाव पावकं धीमान् विधिमन्त्रपुरस्कृतम् ॥ १४
तत उत्थाय दाशार्हश् शङ्खमादाय पूरितम् ।
अभ्यषिञ्चत् पतिं पृथ्व्याः कुन्तीपुत्रं युधिष्ठिरम् ॥ १५
धृतराष्ट्रश्च राजर्षिस् सर्वाः प्रकृतयस्तथा ॥ १५॥
ततोऽनुवादयामासुः पटहानकदुन्दुभीन् ॥ १६

---

1. ख—शमीपलाशसमिधः पृथक् च मधुसर्पिषो ।
ब—शमीपलाशपालाशसमिधो मधुसर्पिषी ॥

धर्मराजोऽपि तत् सर्वं प्रतिजग्राह धर्मतः ।
पूजयामास तांश्चापि विधिवद्भूरिदक्षिणः ॥ १७

ततो निष्कसहस्रेण ब्राह्मणान् स्वस्त्यवाचयत् ।
वेदाध्ययनसम्पन्नाञ् शीलवृत्तसमन्वितान् ॥ १८

ते प्रीता ब्राह्मणा राज्ञस् स्वस्त्यूचूर्जनमेजय ।
हंसा इव च नर्दन्तः प्रशशंसुर्युधिष्ठिरम् ॥ १९

ब्राह्मणाः—

युधिष्ठिर महाबाहो दिष्ट्या जयसि पार्थिव ।
दिष्ट्या स्वधर्मं प्राप्तोऽसि विक्रमेण महाद्युते ॥ २०

दिष्ट्या गाण्डीवधन्वा च भीमसेनश्च पाण्डवः ।
त्वं चापि कुशली राजन् माद्रीपुत्रौ च पाण्डवौ ॥ २१

मुक्ता वीरक्षयात् तस्मात् सङ्ग्रामान्निहतद्विषः ।
क्षिप्रमुत्तरकार्याणि कुरु कार्याणि पाण्डव ॥ २२

वैशम्पायनः—

ततः प्रतर्पितस्सद्भिर् धर्मराजो युधिष्ठिरः ।
प्रतिपेदे महाराज्यं सुहृद्भिस्सह भारत ॥ २३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
[ अस्मिन्नध्याये २३ श्लोकाः ]

---

## ॥ षट्त्रिंशोऽध्यायः ॥

युधिष्ठिरेण भीमार्जुनादीनां तत्तद्योग्ययौवराज्याद्यधिकारेषु नियोजनम् ॥

वैशम्पायनः—

प्रकृतीनां तु तद्वाक्यं देशकालोपबृंहितम् ।
श्रुत्वा युधिष्ठिरो राजा उत्तरं प्रत्यभाषत ॥ १

युधिष्ठिरः—

धन्याः पाण्डुसुता नूनं येषां ब्राह्मणपुङ्गवाः ।
तथ्यान् वा यदि वाऽतथ्यान् गुणानाहुस्समागताः ॥ २

अनुग्राह्या वयं नूनं भवतामिति मे मतिः ।
यत्रैवं गुणसम्पन्नान् अस्मान् ब्रूथ विमत्सराः ॥ ३

धृतराष्ट्रो महाराजः पिता नो दैवतं परम् ।
शासनेऽस्य प्रिये चैव स्थेयं मत्प्रियकाङ्क्षिभिः ॥ ४

एतदर्थं हि जीवामि कृत्वा ज्ञातिवधं महत् ।
अस्य शुश्रूषणं कार्यं मया नित्यमतन्द्रिणा ॥ ५

यदि वाऽहमनुग्राह्यो भवतां सुहृदां ततः ॥
धृतराष्ट्रे यथापूर्वं वृत्तिं वर्तितुमर्हथ ॥ ६

एष नाथो हि जगतो भवतां च मया सह ।

अस्य प्रसादे पृथिवी पाण्डवास्सर्वे एव ह ॥ ७
एतन्मनसि कर्तव्यं भवद्भिर्वचनं मम ॥ ७॥

वैशम्पायनः—

अनुज्ञाप्य च राजानं यथेष्टं गम्यतामिति ।
पौरजानपदान् सर्वान् विसृज्य कुरुनन्दनः ॥ ८॥
यौवराज्येन कौरव्यं भीमसेनमयोजयत् ॥ ९
मन्त्रे च निश्चये तस्मिन् [1]षाड्गुण्यस्य विचिन्तने ।
विदुरं बुद्धिसम्पन्नं प्रीतिमान् स समादिशत् ॥ १०
कृताकृतपरिज्ञाने तथाऽऽयव्ययचिन्तने ।
सञ्जयं योजयामास दृढं वृद्धैर्गुणैर्युतम् ॥ ११
बलस्य परिमाणे च भक्तवेतनयोस्तथा ।
नकुलं प्रादिशद्राजा कर्मणां चान्ववेक्षणे ॥ १२
परचक्रोपरोधे च दृप्तानामवमर्दने ।
युधिष्ठिरो महाराज फल्गुनं व्यादिदेश ह ॥ १३
द्विजानां देवकार्येषु कार्येष्वन्येषु चैव ह ।
धौम्यं पुरोधसां श्रेष्ठं व्यादिदेश परन्तपः ॥ १४
सहदेवं समीपस्थं नित्यमेव समादिशत् ।
तेन गोप्यो हि नृपतिस् सर्वावस्थो विशां पते ॥ १५
यान् यानमात्यान् योग्यांश्च येषु येष्वथ कर्मसु ।

1. क-ख—षड्गुणस्य

तांस्तांश्च तेषु युयुजे प्रीयमाणो महीपतिः ॥ १६

विदुरं सञ्जयं चैव युयुत्सुं च महीपतिः ।
अब्रवीत् परमप्रीतो धर्मात्मा धर्मवत्सलः ॥ १७

युधिष्ठिरः—

उत्थायोत्थाय यत् कार्यम् अस्य राज्ञः पितुर्मम ।
सर्वं भवद्भिः कर्तव्यम् अप्रमत्तैर्यथा मम ॥ १८

पौरजानपदानां च यानि कार्याणि नित्यशः ।
राजानं समनुप्राप्य तानि कार्याणि धर्मतः ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
[अस्मिन्नध्याये १९ श्लोकाः]

---

## ॥ सप्तत्रिंशोऽध्यायः ॥



युधिष्ठिरेण ज्ञातिप्रभृतीनामौर्ध्वदेहिककरणपूर्वकं तदीयादीनां परिपालनम् ॥

वैशम्पायनः—

ततो युधिष्ठिरो राजा ज्ञातीनां ये हता मृधे ।
श्राद्धानि कारयामास तेषां पृथगुदारधीः ॥ १

धृतराष्ट्रो ददौ राजा पुत्राणामौर्ध्वदेहिकम् ।

सर्वकामगुणोपेतम् अन्नं गाश्च धनानि च ॥ २
रत्नानि च विचित्राणि महार्हाणि महायशाः ॥ २॥

युधिष्ठिरस्तु द्रोणस्य कर्णस्य च महात्मनः ।
द्रौपदेयाभिमन्यूनां हैडिम्बस्य च रक्षसः ॥ ३॥

विराटप्रभृतीनां च सुहृदामुपकारिणाम् ।
द्रुपदद्रौपदेयानां द्रौपद्या सहितो ददौ ॥ ४॥

ब्राह्मणानां सहस्राणि पृथगेकैकमुद्दिशन् ।
धनै रत्नैश्च गोभिश्च वस्त्रैश्च समतर्पयत् ॥ ५॥

ये चान्ये पृथिवीपाला येषां नास्ति सुहृज्जनः ।
उद्दिश्योद्दिश्य तेषां च चक्रे राजौर्ध्वदैहिकम् ॥ ६॥

सभाः प्रपाश्च विविधास् तटाकानि च पाण्डवः ।
सुहृदां कारयामास सर्वेषामौर्ध्वदैहिकम् ॥ ७॥

स तेषामनृणो भूत्वा गत्वा लोकेष्ववाच्यताम् ।
कृतकृत्योऽभवद्राजा [1]प्रजा धर्मेण पालयन् ॥ ८॥

धृतराष्ट्रं यथापूर्वं गान्धारीं विदुरं तथा ।
सर्वांश्च कौरवामात्यान् भृत्यांश्च समपूजयत् ॥ ९॥

याश्च तत्र स्त्रियः काश्चिद्धतवीरा हतात्मजाः ।
सर्वास्ताः कौरवो राजा सम्पूज्यापालयत् प्रजाः ॥ १०॥

---

1. ब—इतष्षट् पादा न सन्ति

दीनान्धकृपणानां च गृहाच्छादनभोजनैः ।
आनृशंस्यपरो राजा चकारानुग्रहं प्रभुः ॥ ११॥

स विजित्य महीं कृत्स्नाम् आनृण्यं प्राप्य वै नृपु ।
निस्सपत्नस्सुखी राजा विजहार युधिष्ठिरः ॥ १२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥
॥ अस्मिन्नध्याये १२॥ श्लोकाः ॥

---

## ॥ अष्टात्रिंशोऽध्यायः ॥

युधिष्ठिरेण नामशतकेन श्रीकृष्णस्तवनम् ॥

---

वैशम्पायनः—

अभिषिक्तो महाप्राज्ञो राज्यं प्राप्य युधिष्ठिरः ।
दाशार्हं पुण्डरीकाक्षम् उवाच प्राञ्जलिश्शुचिः ॥ १

युधिष्ठिरः—

तव कृष्ण प्रसादेन बलेन च नयेन च ।
बुद्ध्या च यदुशार्दूल तथा विक्रमणेन च ॥ २
पुनः प्राप्तमिदं राज्यं पितृपैतामहं मया ॥ २॥
नमस्ते पुण्डरीकाक्ष पुनःपुनररिन्दम ॥ ३
त्वामेकमाहुः पुरुषं त्वामाहुस्सर्वतो गतिम् ।

नामभिस्त्वां बहुविधैस् स्तुवन्ति प्रयता द्विजाः ॥ ४

विश्वकर्मन् नमस्तेऽस्तु विश्वात्मन् विश्वसम्भव ।
विष्णो जिष्णो हरे शर्व वैकुण्ठ पुरुषोत्तम ॥ ५

अदित्यास्सप्तरात्रं त्वं पुराणो गर्भतां गतः ।
पृश्निगर्भस्त्वमेवैकस् त्रियुगं त्वां वदन्त्यपि ॥ ६

शुचिश्रवा हृषीकेशो घृतार्चिर्हंस उच्यते ।
नृचक्षुरशम्भुरेकस्त्वं मृदुर्दामोदरोऽपि च ॥ ७

वरुणोऽग्निर्बृहद्भानुर् वृषणस्तार्क्ष्यलक्षणः ।
अनीकसाहः पुरुषश् शिपिविष्ट उरुक्रमः ॥ ८

वाचीष्ट उग्रसेनानीस् सत्यो वाजसनिर्गुहः ।
अच्युतश्च्यवनोऽरीणां सङ्कृतिः प्रकृतिर्विभुः ॥ ९

ऊर्ध्वात्मा त्वं त्वमेवादिर् वृषपर्वा वृषाकपिः ।
सिन्धुर्विधूर्मिस्त्रिककुप् त्रिधामा त्रिवृदच्युतः ॥ १०

सम्राड् विराट् स्वराट् चैव स्वराड्भूतमयो भवः ।
विभूर्भूरभिभूः कृष्णः कृष्णवर्त्मा त्वमेव च ॥ ११

स्विष्टकृद्भिषगावर्तः कपिलस्त्वं च वामनः ।
यज्ञो ध्रुवः पतङ्गश्च जयत्सेनस्त्वमुच्यसे ॥ १२

शिखण्डी महिषो बभ्रुर् दिविस्पृक् त्वं पुनर्वसुः ।

सुबभ्रु रूक्षायुग्मस्त्वं सुषेणो दुन्दुभिस्तथा ॥ १३
गभस्तिनेमिश्श्रीवत्सः पुष्करश्शुष्मधारणः ।
ऋभुर्विभुस्सर्वसूक्ष्मस् त्वं धरित्री च पठ्यसे ॥ १४
तपोनिधिस्त्वं ब्रह्मा त्वं पवित्रं धाम धन्व च ।
हिरण्यगर्भः पुरुषस् स्वधा स्वाहा च केशवः ॥ १५

योनिस्त्वमस्य प्रलयश्च कृष्ण
त्वमेवेदं सृजसि विश्वमग्रे ।
विश्वं चेदं त्वद्वशे विश्वयोने
नमोऽस्तु ते शार्ङ्गचक्रासिपाणे ॥ १६

वैशम्पायनः—

एवं स्तुतो धर्मराजेन कृष्णस्
सभामध्ये प्रीतिमान् पुष्कराक्षः ।
तमभ्यनन्दद्भारतं पुष्कलाभिर्
वाग्भिर्ज्येष्ठं पाण्डवं यादवाग्र्यः ॥ १७

एतन्नामशतं विष्णोर् धर्मराजेन कीर्तितम् ।
यः पठेच्छृणुयाद्वाऽपि सर्वपापैः प्रमुच्यते ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥
॥ ८३ ॥ आभिषेचनिकपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
[अस्मिन्नध्याये १८ श्लोकाः]
[आभिषेचनिकपर्व समाप्तम्]

## ॥ एकोनचत्वारिंशोऽध्यायः ॥

युधिष्ठिराज्ञया भीमादिभिश्चतुर्भिर्दुर्योधनादिगृहपरिग्रहः ॥

( गृहप्रविभागपर्व )

वैशम्पायनः—

ततो विसर्जयामास सर्वास्ताः प्रकृतीर्नृपः ।
विविशुश्चाभ्यनुज्ञाता यथास्वानि गृहाणि ते ॥ १

ततो युधिष्ठिरो राजा भीमं भीमपराक्रमम् ।
सान्त्वयन्नब्रवी[1]च्छ्रीमान् अर्जुनं यमजौ तथा ॥ २

युधिष्ठिरः—

शत्रुभिर्विविधैश्शस्त्रैः क्षतदेहा महारणे ।
श्रान्ता भवन्तस्सुभृशं तापिताश्शोकमन्युभिः ॥ ३

अरण्ये दुःखवसतिर् मत्कृते पुरुषोत्तमाः ।
भवद्भिरनुभूता च यथा कापुरुषैस्तथा ॥ ४

यथासुखं यथाजोषं जयोऽयमनुभूयताम् ।
विश्रान्ताँल्लब्धविश्वासाञ् श्वस्समेतास्मि वः पुनः ॥ ५

वैशम्पायनः—

ततो दुर्योधनगृहं प्रासादैरुपशोभितम् ।

1. क-ख-घ—द्धीमान्

बहुरत्नसमाकीर्णं दासीदाससमाकुलम् ॥ ६

धृतराष्ट्राभ्यनुज्ञातो भ्रात्रा दत्तं वृकोदरः ।
प्रतिपेदे महाबाहुर् मन्दरं मघवानिव ॥ ७

यथा दुर्योधनगृहं तथा दुश्शासनस्य तु ।
प्रासादमालासंयुक्तं हेमतोरणसंयुतम् ॥ ८

दासीदाससुसम्पूर्णं प्रभूतधनधान्यवत् ।
प्रतिपेदे महाबाहुर् अर्जुनो राजशासनात् ॥ ९

दुर्मर्षणस्य भवनं दुश्शासनगृहाद्वरम् ।
कुबेरभवनप्रख्यं मणिहेमविभूषितम् ॥ १०

नकुलाय महार्हाय कर्शिताय महाहवे ।
ददौ प्रीत्या महाबाहुर् धर्मसूनुर्युधिष्ठिरः ॥ ११

दुर्मुखस्य तु वेश्माग्र्यं श्रीमत् कनकभूषितम् ।
पूर्णपद्मदलाक्षीणां स्त्रीणां शयनसङ्कुलम् ॥ १२

प्रददौ सहदेवाय सन्ततं प्रियकारिणे ॥ १२॥
मुमुदे तच्च लब्ध्वा स कैलासं धनदो यथा ॥ १३

युयुत्सुर्विदुरश्चैव सञ्जयश्च महामतिः ।
सुधर्मा चैव धौम्यश्च यथा स्वान् जग्मुरालयान् ॥ १४

सह सात्यकिना शौरिर् अर्जुनस्य निवेशनम् ।
विवेश पुरुषव्याघ्रो व्याघ्रो गिरिगुहामिव ॥ १५

तत्र भक्ष्यान्नपानैस्ते समुपेतास्सुखोषिताः ।
सुखप्रबुद्धा राजानम् उपतस्थुर्युधिष्ठिरम् ॥ १६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
॥ ८५ ॥ गृहप्रविभागपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[ अस्मिन्नध्याये १६ श्लोकाः ]
[ गृहप्रविभागपर्व समाप्तम् ]

---

## ॥ चत्वारिंशोऽध्यायः ॥

युधिष्ठिरेण कृष्णमेत्य सुखशयनादिप्रश्नपूर्वकं तत्स्तुतिः ॥

---

(राजधर्मपर्व)

जनमेजयः—

राज्यं प्राप्य महातेजा धर्मराजो युधिष्ठिरः ।
यदन्यदकरोद्विप्र तन्मे वक्तुमिहार्हसि ॥ १

भगवान् वा हृषीकेशस् त्रैलोक्यस्य परो गुरुः ।
ऋषे यदकरोद्वीरस् तच्च व्याख्यातुमर्हसि ॥ २

वैशम्पायनः—

शृणु राजेन्द्र तत्त्वेन कीर्त्यमानं मयाऽनघ ।
वासुदेवं पुरस्कृत्य यदकुर्वत पाण्डवाः ॥ ३

प्राप्य राज्यं महातेजाः कुन्तीपुत्रो युधिष्ठिरः ।

वर्णान् संस्थापयामास नयेन विनयेन च ॥ ४

ब्राह्मणानां सहस्रं च स्नातकानां महात्मनाम् ।
सहस्रनिष्कैरेकैकं तर्पयामास पाण्डवः ॥ ५

तथाऽनुजीविनो भृत्यान् संश्रितानतिथीनपि ।
कामैस्सन्तर्पयामास कृपणांस्तार्किकानपि ॥ ६

पुरोहिताय धौम्याय प्रादादयुतशस्स गाः ।
धनं सुवर्णं रजतं वासांसि विविधानि च ॥ ७

कृपाय च महाराज पितृवत् तमतर्पयत् ।
विदुराय महातेजाः पूजां चक्रे यतव्रतः ॥ ८

भक्ष्यान्नपानैर्विविधैर् वासोभिश्शयनासनैः ।
सर्वान् सन्तोषयामास संश्रितान् ददतां वरः ॥ ९

लब्धप्रशमनं कृत्वा स राजा राजसत्तम ।
युयुत्सोर्धार्तराष्ट्रस्य पूजां चक्रे महायशाः ॥ १०

धृतराष्ट्राय तद्राज्यं गान्धार्यै विदुराय च ।
निवेश्य स्वस्थवद्राजन्नास्ते राजा युधिष्ठिरः ॥ ११

तथा सर्वं स नगरं प्रसाद्य जनमेजय ।
वासुदेवं महात्मानम् अभ्यगच्छत् कृताञ्जलिः ॥ १२

ततो महति पर्यङ्के मणिकाञ्चनभूषिते ।
ददर्श कृष्णमासीनं नीलं मेराविवाम्बुदम् ॥ १३

जाज्वल्यमानं वपुषा दिव्याभरणभूषितम् ।
पीतकौशेयसंवीतं हैमेनोपहितं मणिम् ॥ १४

कौस्तुभेनाप्युरस्स्थेन मणिनाऽभिविराजितम् ।
उद्यतेवोदयं शैलं सूर्येणाप्तं किरीटिनम् ॥ १५
नौपम्यं विद्यते तस्य त्रिषु लोकेषु किञ्चन ॥ १५॥

सोऽभिगम्य महात्मानं विष्णुं पुरुषसत्तमम् ।
उवाच मधुरं राजा स्मितपूर्वमिदं तदा ॥ १६॥

युधिष्ठिरः—

सुखेन ते निशा कच्चिद् व्युष्टा बुद्धिमतां वर ।
कच्चिज्ज्ञानानि सर्वाणि प्रसन्नानि तवाच्युत ॥ १७॥

तव ह्याश्रित्य तां देवीं बुद्धिं बुद्धिमतां वर ।
वयं राज्यमनुप्राप्ताः पृथिवी च वशे स्थिता ॥ १८॥

भवत्प्रसादाद्भगवंस् त्रिलोकातिगविक्रम ।
जयं प्राप्ता यशश्चाग्र्यं न धर्मात् प्रच्युता वयम् ॥ १९॥

वैशम्पायनः—

तं तथा भाषमाणं तु धर्मराजं युधिष्ठिरम् ।
नोवाच भगवान् किञ्चिद् ध्यानमेवान्वपद्यत ॥ २०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥
॥ ८६ ॥ राजधर्मपर्वणि प्रथमोऽध्यायः ॥ १ ॥
[अस्मिन्नध्याये २०॥ श्लोकाः]

---

## ।। एकचत्वारिंशोऽध्यायः ।।

कृष्णेन युधिष्ठिरं प्रति धर्मश्रवणाय भीष्मसमीपगमनचोदना ॥ १ ॥ तथा युधिष्ठिरप्रार्थनया स्वस्यापि तत्र गमनाय दारुकेण रथसंयोजनम् ॥

युधिष्ठिरः—

किमिदं परमाश्चर्यं ध्यायस्यमितविक्रम ।
कच्चिल्लोकत्रयस्यास्य स्वस्ति लोकपरायण ॥ १

इन्द्रियाणि मनश्चैव बुद्धौ संवेशितानि ते ।
चतुर्थं ध्यानमार्गं त्वम् आलम्ब्य पुरुषर्षभ ॥ २

अपक्रान्तो यतो जीवस् तेन मे विस्मितं मनः ॥ २॥

निगृहीतो हि वायुस्ते पञ्चकर्मा शरीरगः ।
इन्द्रियाणि च सर्वाणि मनसि स्थापितानि ते ॥ ३॥

सर्वे चैव गुणा देव क्षेत्रज्ञे ते निवेशिताः ॥ ४

नेङ्गन्ति चैव रोमाणि यथा बुद्धिस्तथा मनः ।
कुड्यकाष्ठशिलाभूतो निरीहश्चासि माधव ॥ ५

यथा दीपो निवातस्थो निरिङ्गो ज्वलतेऽच्युत ।
तथाऽसि भगवन् देव निश्चलो योगनिश्चयात् ॥ ६

यदि श्रोतुमिहार्हामि न रहस्यं च मे हृदि ।
छिन्धि मे संशयं देव प्रपन्नायाभियाचते ॥ ७

त्वं हि कर्ता विकर्ता च त्वं क्षरश्चाक्षरश्च ह ।
अनादिनिधनो ह्याद्यस् त्वमेकः पुरुषोत्तम ॥ ८

त्वं प्रपन्नाय भक्ताय शिरसा प्रणताय च ।
ध्यानस्यास्य यथातत्त्वं ब्रूहि धर्मभृतां वर ॥ ९

वैशम्पायनः—

ततस्स्वगोचरे न्यस्य [1]मनोबुद्धीन्द्रियाणि च ।
स्मितपूर्वमुवाचेदं भगवान् वासवानुजः ॥ १०

श्रीभगवान्—

शरतल्पगतो भीष्मश् शाम्यन्निव हुताशनः ।
मां ध्याति पुरुषव्याघ्रस् ततो मे तद्गतं मनः ॥ ११

यस्य ज्यातलनिर्घोषं विष्फूर्जितमिवाशनेः ।
न सहेद्देवराजोऽपि तमस्मि मनसा गतः ॥ १२

येनाभिद्रुत्य तरसा समस्तं राजमण्डलम् ।
ऊढास्तिस्रः पुरा कन्यास् तमस्मि मनसा गतः ॥ १३

[2]त्रयोविंशतिरात्रं यो योधयामास भार्गवम् ।
न च रामेण निस्तीर्णस् तमस्मि मनसा गतः ॥ १४

यं गङ्गा गर्भविधिना धारयामास भारतम् ।
वसिष्ठशिष्यं तं तात गतोऽस्मि मनसा नृप ॥ १५

---

1. ख—इतष्षट्पादा न सन्ति
2. ख—एकीकृतेन्द्रियग्रामं त्रयोविंशतिरात्रयः ।		[पाठान्तरम्]

दिव्यास्त्राणि महातेजा यो धारयति बुद्धिमान् ।
साङ्गांश्च चतुरो वेदांस् तमस्मि मनसा गतः ॥ १६

रामस्य दयितं शिष्यं जामदग्न्यस्य पाण्डव ।
आधारं सर्वविद्यानां तमस्मि मनसा गतः ॥ १७

एकीकृत्येन्द्रियग्रामं मनस्संयम्य मेधया ।
शरणं मामुपागच्छत् ततो मे तद्गतं मनः ॥ १८

स हि भूतं च भव्यं च भवच्च पुरुषर्षभः ।
वेत्ति धर्मविदां श्रेष्ठस् ततो मे तद्गतं मनः ॥ १९

तस्मिन् हि पुरुषव्याघ्रे शान्ते भीष्मे महात्मनि ।
भविष्यति मही पार्थ नष्टचन्द्रेव शर्वरी ॥ २०

तद्युधिष्ठिर गाङ्गेयं भीष्मं भीमपराक्रमम् ।
अभिगम्योपसङ्गृह्य पृच्छ यत्ते मनोगतम् ॥ २१

चातुर्विद्यं चातुर्होत्रं चातुराश्रम्यमेव च ।
चातुर्वर्ण्यं च धर्म्यं च पृच्छ त्वं पृथिवीपते ॥ २२

तस्मिन्नस्तमिते भीष्मे कौरवाणां धुरन्धरे ।
ज्ञानान्यल्पीभविष्यन्ति तस्मात्त्वां चोदयाम्यहम् ॥ २३

वैशम्पायनः—

तच्छ्रुत्वा वासुदेवस्य तथ्यं वचनमुत्तमम् ।
साश्रुकण्ठस्स धर्मज्ञो जनार्दनमुवाच ह ॥ २४

युधिष्ठिरः—

यद्ब्रवानाह भीष्मस्य प्रभावं प्रति माधव ।
तथैव नात्र सन्देहो विद्यते मम माधव ॥ २५

महाभाग्यं च भीष्मस्य प्रभावश्च महात्मनः ।
श्रुतं मया कथयतां ब्राह्मणानां महात्मनाम् ॥ २६

भवांश्च कर्ता लोकानां यद्ब्रवीत्यरिसूदन ।
तथा तदवबुध्येयं वाक्यं यादवनन्दन ॥ २७

यदि त्वनुग्रहकृता बुद्धिस्ते मयि माधव ।
त्वामग्रतः पुरस्कृत्य भीष्मं पश्यामहे वयम् ॥ २८

आवृत्ते भगवत्यर्के स हि लोकान् गमिष्यति ।
त्वद्दर्शनं महाबाहो तस्मादर्हति कौरवः ॥ २९

तव ह्याद्यस्य देवस्य क्षरस्यैवाक्षरस्य च ।
दर्शनं तस्य लाभस्स्यात् त्वं हि ब्रह्ममयो निधिः ॥ ३०

वैशम्पायनः—

श्रुत्वैवं धर्मराजस्य वचनं मधुसूदनः ।
पार्श्वस्थं सात्यकिं प्राह रथो मे युज्यतामिति ॥ ३१

सात्यकिस्तु परिक्रम्य केशवस्य समीपतः ।
दारुकं प्राह कृष्णस्य युज्यतां रथ इत्युत ॥ ३२

स सात्यकेराशु वचो निशम्य
रथोत्तमं काञ्चनभूषिताङ्गम् ।
समागमत् स्वर्णमयैर्विहङ्गैर्
विभूषितं हेमपिनद्धचक्रम् ॥ ३३

दिवाकरांशुप्रभमाशुगामिनं
विचित्रनानामणिरत्नभूषितम् ।
नवोदितं सूर्यमिव प्रभासितं
विचित्रतार्क्ष्यध्वजिनं पताकिनम् ॥ ३४

सुग्रीवसैन्यप्रमुखैर्वराश्वैर्
मनोजवैः काञ्चनभूषिताङ्गैः ।
संयुक्तमावेदयदच्युताय
कृताञ्जलिर्दारुको राजसिंह ॥ ३५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
॥ ८६ ॥ राजधर्मपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
[ अस्मिन्नध्याये ३५ श्लोकाः ]

## ॥ द्विचत्वारिंशोऽध्यायः ॥



वैशम्पायनेन जनमेजयं प्रति भीष्मकृतकृष्णस्तवराजानुवादपूर्वकं भीष्मस्य शरीरत्यागप्रकारकथनम् ॥

जनमेजयः—

शरतल्पे शयानस्तु भारतानां पितामहः ।
कथमुत्सृष्टवान् देहं कं च योगमधारयत् ॥ १

वैशम्पायनः—

शृणुष्वावहितो राजञ् शुचिर्भूत्वा समाहितः ।
भीष्मस्य कुरुशार्दूल देहोत्सर्गं महात्मनः ॥ २

प्रवृत्तमात्रे त्वयनम् उत्तरेण दिवाकरे ।
शुक्लपक्षस्य चाष्टम्यां माघमासस्य पार्थिव ॥ ३

प्राजापत्ये च नक्षत्रे मध्यं प्राप्ते दिवाकरे ।
समावेशयदात्मानम् आत्मन्येव समाहितः ॥ ४

विकीर्णांशुरिवादित्यो भीष्मश्शरशतैश्चितः ।
शिश्ये परमया लक्ष्म्या वृतो ब्राह्मणसत्तमैः ॥ ५

व्यासेन देवश्रवसा नारदेन सुरर्षिणा ।
तथा जैमिनिना चापि पैलेन च महात्मना ॥ ६

शाण्डिल्यगौतमाभ्यां च भारद्वाजेन धीमता ।

देवस्थानेन वात्स्येन तथाऽश्मेन सुमन्तुना ॥ ७

एतैश्चान्यैर्मुनिगणैर् महाभागैर्महात्मभिः ।
श्रद्धादमपुरस्कारैर् वृतश्चन्द्र इव ग्रहैः ॥ ८

भीष्मस्तु पुरुषव्याघ्रः कर्मणा मनसा गिरा ।
शरतल्पगतः कृष्णं प्रदध्यौ प्राञ्जलिश्शुचिः ॥ ९

स्वरेणाथ सुपुष्टेन तुष्टाव मधुसूदनम् ।
योगेश्वरं पद्मनाभं विष्णुं जिष्णुं जगत्पतिम् ॥ १०

अनादिनिधनं जिष्णुम् आत्मयोनिं सनातनम् ।
कृताञ्जलिश्शुचिर्भूत्वा वाग्विदां प्रवरः प्रभुः ॥ ११
भीष्मः परमधर्मात्मा वासुदेवमथास्तुवत् ॥ ११॥

भीष्मः—

आरिराधयिषुः कृष्णं वाचं जिगदिषामि याम् ।
तया व्याससमासिन्या प्रीयतां पुरुषोत्तमः ॥ १२॥

शुचिं शुचिषदं हंसं तत्परं परमेष्ठिनम् ।
युक्त्वा सर्वात्मनाऽऽत्मानं तं प्रपद्ये प्रजापतिम् ॥ १३॥

अनाद्यन्तं परं ब्रह्म न देवा नर्षयो विदुः ।
एकस्तद्वेद भगवान् धाता नारायणो हरिः ॥ १४॥

नारायणादृषिगणास् तथा सिद्धमहोरगाः ।
देवा देवर्षयश्चैव यं विदुर्दुःखभेषजम् ॥ १५॥

देवदानवगन्धर्वा यक्षरक्षोमहोरगाः ।
यं न जानन्ति को ह्येष कुतो वा भगवानिति ॥ १६॥

यमाहुर्जगतः कोशं यस्मिंश्च निहिताः प्रजाः ।
यस्मिँल्लोकास्स्फुरन्त्येते जाले शकुनयो यथा ॥ १७॥

यस्मिन् विश्वानि भूतानि तिष्ठन्ति प्रविशन्त्यपि ।
गुणभूतानि भूतेशे सूत्रे मणिगणा इव ॥ १८॥

यं च विश्वस्य कर्तारं जगतस्तस्थुषः पतिम् ।
वदन्ति जगतोऽध्यक्षम् अध्यात्मपरिचिन्तकाः ॥ १९॥

यस्मिन् नित्ये तते तन्तौ सर्वं स्रगिव तिष्ठति ।
सदसद्ग्रथितं विश्वं विश्वाङ्गे विश्वकर्मणि ॥ २०॥

हरिं सहस्रशिरसं सहस्रचरणेक्षणम् ।
सहस्रबाहुमकुटं सहस्रवदनोज्ज्वलम् ॥ २१॥

प्राहुर्नारायणं देवं यं विश्वस्य परायणम् ।
अणीयसामणीयांसं स्थविष्ठं च स्थवीयसाम् ॥ २२॥

गरीयसां गरिष्ठं च श्रेष्ठं च श्रेयसामपि ।
यं [1]वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ॥ २३॥

[2]गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु ।
चतुर्भिश्चतुरात्मानं सत्त्वस्थास्सात्वतां पतिम् । २४॥

1. क-घ—वा यज्ञाख्यमन्त्रेषु
2. क-घ—गृह्णन्ति सत्यधर्माणं ख—गृणन्ति सत्यधर्माणं

यं दिव्यैः परमर्चन्ति गुह्यैः परमनामभिः ।
यं देवं देवकी देवी वसुदेवादजीजनत् ॥ २५॥
[1]गोप्तारं ब्रह्मणो ह्यस्य दीप्तमग्निमिवारणिः ॥ २६

यमनन्यो व्यपेताशीर् आत्मानं वीतकल्मषम् ।
दृष्ट्वाऽनन्त्याय गोविन्दं पश्यत्यात्मानमात्मनि ॥ २७

पुराणे पुरुषं प्रोक्तं ब्रह्म प्रोक्तं युगादिषु ।
क्षये सङ्कर्षणं प्रोक्तं तमुपास्यमुपास्महे ॥ २८

यमेकं बहुधाऽऽत्मानं प्रादुर्भूतमधोक्षजम् ।
तं ये शक्ताः क्रियावन्तो यजन्ते सर्वकामदम् ॥ २९

ऋतमेकाक्षरं ब्रह्म यत्तत् सदसतः परम् ।
अनादिमध्यपर्यन्तं न देवा नर्षयो विदुः ॥ ३०

यं सुरासुरगन्धर्वास् ससिद्धर्षिमहोरगाः ।
प्रयता नित्यमर्चन्ति परमं दुःखभेषजम् ॥ ३१

अनादिनिधनं देवम् आत्मयोनिं सनातनम् ।
अप्रतर्क्यमविज्ञेयं हरिं नारायणं विभुम् ॥ ३२

॥ अथ भीष्मस्तवराजः ॥

अतिवाय्विन्द्रकर्माणम् अतिसूर्याग्नितेजसम् ।
अतिबुद्धीन्द्रियात्मानं तं प्रपद्ये प्रजापतिम् ॥ ३३

1. ब—भौमस्य ब्रह्मणो गुप्त्यै

यं वै विश्वस्य कर्तारं जगतस्तस्थुषां पतिम् ।
वदन्ति जगतोऽध्यक्षम् अक्षरं परमं पदम् ॥ ३४

हिरण्य[1]वर्णं यं गर्भम् अदितिर्दैत्यनाशनम् ।
एकं द्वादशधा जज्ञे तस्मै सूर्यात्मने नमः ॥ ३५

शुक्ले देवान् पितॄन् कृष्णे तर्पयत्यमृतेन यः ।
यश्च राजा द्विजातीनां तस्मै सोमात्मने नमः ॥ ३६

हुताशनमुखैर्देवैर् धार्यते सकलं जगत् ।
हविःप्रथमभोक्ता यस् तस्मै [2]होत्रात्मने नमः ॥ ३७

महतस्तमसः पारे पुरुषं ह्यतितेजसम् ।
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः ॥ ३८

यं बृहन्तं महत्युक्थे यमग्नौ यं महाध्वरे ।
यं विप्रसङ्घा गायन्ति तस्मै [3]गेयात्मने नमः ॥ ३९

पादाङ्गं सन्धिपर्वाणं स्वरव्यञ्जनभूषणम् ।
यमाहुरक्षरं विप्रास् तस्मै वागात्मने नमः ॥ ४०

ऋग्यजुस्सामधामानं दशार्धहविराकृतिम् ।
यस्सप्ततन्तुं तन्वन्ति तस्मै यज्ञात्मने नमः ॥ ४१

यस्सुपर्णो यजुर्नाम च्छन्दोगात्रस्त्रिवृच्छिराः ।

---

1. क-ग—गर्भं		2. ग—भोक्त्रात्मने
3. क-ग—वेदा (गेया)		ख—देवा

रथन्तरबृहत्पक्षस् तस्मै स्तोत्रात्मने नमः ॥ ४२

यस्सहस्रसवे सत्रे जज्ञे विश्वसृजामृषिः ।
हिरण्यपक्षश्शकुनिस् तस्मै तार्क्ष्यात्मने नमः ॥ ४३

यश्चिनोति सतां सेतुम् ऋतेनामृतयोनिना ।
धर्मार्थव्यवहाराङ्गैस् तस्मै सत्यात्मने नमः ॥ ४४

यं पृथग्धर्मचरणाः पृथग्धर्मफलैषिणः ।
पृथग्धर्मैस्समर्चन्ति तस्मै धर्मात्मने नमः ॥ ४५

यं तं व्यक्तस्थमव्यक्तं विचिन्वन्ति महर्षयः ।
क्षेत्रे क्षेत्रज्ञमासीनं तस्मै क्षेत्रात्मने नमः ॥ ४६

यं दृगात्मानमात्मस्थं वृतं षोडशभिर्गुणैः ।
प्राहुस्सप्तदशं साङ्ख्यास् तस्मै साङ्ख्यात्मने नमः ॥ ४७

यं विनिद्रा जितश्वासास् सन्तुष्टास्संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास् तस्मै योगात्मने नमः ॥ ४८

अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः ।
शान्तास्संन्यासिनो यान्ति तस्मै मोक्षात्मने नमः ॥ ४९

यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः ।
सूर्यश्चक्षुर्दिशश्श्रोत्रं तस्मै लोकात्मने नमः ॥ ५०

युगेष्वावर्तते योंशैर् मासर्त्वयनहायनैः ।
सर्गप्रलययोः कर्ता तस्मै कालात्मने नमः ॥ ५१

योऽसौ युगसहस्रान्ते प्रदीप्तार्चिर्विभावसुः ।
सम्भक्षयति भूतानि तस्मै घोरात्मने नमः ॥ ५२
सम्भक्ष्य सर्वभूतानि कृत्वा चैकार्णवं जगत् ।
बालस्स्वपिति यश्चैकस् तस्मै मायात्मने नमः ॥ ५३
सहस्रशिरसे तस्मै पुरुषायामितात्मने ।
चतुस्समुद्रपयसि योगनिद्रात्मने नमः ॥ ५४
अजस्य नाभावध्येकं यस्मिन् विश्वं प्रतिष्ठितम् ।
पुष्करं पुष्कराक्षस्य तस्मै पद्मात्मने नमः ॥ ५५
यस्य केशेषु जीमूता नद्यस्सर्वाङ्गसन्धिषु ।
कुक्षौ समुद्राश्चत्वारस् तस्मै तोयात्मने नमः ॥ ५६
यस्मात् सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः ।
यस्मिंश्चैव प्रलीयन्ते तस्मै हेत्वात्मने नमः ॥ ५७
अकार्यस्सर्वकार्येषु धर्मकार्यार्थमुद्यतम् ।
वैकुण्ठस्य हि तद्रूपं तस्मै कार्यात्मने नमः ॥ ५८
ब्रह्म वक्त्रं भुजौ क्षत्रं कृत्स्नमूरूदरं विशः ।
पादौ यस्याश्रिताश्शूद्रास् तस्मै वर्णात्मने नमः ॥ ५९
अन्नपानेन्धनमयो रसप्राणविवर्धनः ।
यो धारयति भूतानि तस्मै प्राणात्मने नमः ॥ ६०
विषये वर्तमानानां यं तं वैषयिकैर्गुणैः ।

प्राहुर्विपयगोप्तारं तस्मै गोप्त्रात्मने नमः ॥ ६१
अप्रमेयशरीराय सर्वतो बुद्धिचक्षुषे ।
अपारपरिमाणाय तस्मै दिव्यात्मने नमः ॥ ६२
परः कालात् परो यज्ञात् परस्सदसतश्च यः ।
अनादिरादिर्विश्वस्य तस्मै विश्वात्मने नमः ॥ ६३
वैद्युतो जाठरश्चैव पावकश्शुचिरेव च ।
दहनस्सर्वभक्षाणां तस्मै वह्न्यात्मने नमः ॥ ६४
रसातलगतश्श्रीमान् अनन्तो भगवान् प्रभुः ।
जगद्धारयते योऽसौ तस्मै शेषात्मने नमः ॥ ६५
ज्वलनार्केन्दुताराणां ज्योतिषां दिव्यमूर्तिनाम् ।
यस्तेजयति तेजांसि तस्मै तेजात्मने नमः ॥ ६६
आत्मज्ञानमिदं सर्वं ज्ञात्वा पञ्चस्ववस्थितम् ।
यं ज्ञानेनाधिगच्छन्ति तस्मै ज्ञानात्मने नमः ॥ ६७
साङ्ख्यैर्योगैर्विनिश्चित्य साध्यैश्च परमर्षिभिः ।
यस्य तु ज्ञायते तत्त्वं तस्मै गुह्यात्मने नमः ॥ ६८
[1]जटिने दण्डिने नित्यं लम्बोदरशरीरिणे ।
कमण्डलुनिषङ्गाय तस्मै ब्रह्मात्मने नमः ॥ ६९
यो जातो वसुदेवेन देवक्यां यदुनन्दनः ।
शङ्खचक्रगदापाणिर् वासुदेवात्मने नमः ॥ ७०

1. अ—नास्तीदमर्धचतुष्टयम्

[1]शिरःकपालमालाय व्याघ्रचर्मनिवासिने ।
भस्मदिग्धशरीराय तस्मै रुद्रात्मने नमः ॥ ७१
यो मोहयति भूतानि स्नेहपाशानुबन्धनैः ।
[2]सर्गस्य रक्षणार्थाय तस्मै मोहात्मने नमः ॥ ७२
चैतन्यं सर्वतो नित्यं सर्वप्राणिहृदिस्थितम् ।
सर्वातीततरं सूक्ष्मं तस्मै सूक्ष्मात्मने नमः ॥ ७३
पञ्चभूतात्मभूताय भूतादिनिधनाय च ।
अक्रोधद्रोहमोहाय तस्मै शान्तात्मने नमः ॥ ७४
[3]यस्मिन् सर्वं यतस्सर्वं यस्सर्वं सर्वतश्च यः ।
यश्च सर्वमयो देवस् तस्मै सर्वात्मने नमः ॥ ७५
यश्शेते क्षीरपर्यङ्के दिव्यनागविभूषिते ।
फणासहस्ररचिते तस्मै निद्रात्मने नमः ॥ ७६
विश्वे च मरुतश्चैव रुद्रादित्याश्विनावपि ।
वसवस्सिद्धसाध्याश्च तस्मै देवात्मने नमः ॥ ७७
अव्यक्तबुद्ध्यहङ्कारमनोबुद्धीन्द्रियाणि च ।
तन्मात्राणि विशेषाश्च तस्मै तत्वात्मने नमः ॥ ७८
भूतं भव्यं भविष्यच्च भूतादिप्रभवाप्ययः ।
योऽग्रजस्सर्वभूतानां तस्मै भूतात्मने नमः ॥ ७९
यं हि सूक्ष्मं विचिन्वन्ति परं सूक्ष्मविदो जनाः ।

1. अ-क-ख—अर्धद्वयंनास्ति
2. ख—सर्वस्य
3. अ-क-ख—अर्धद्वयंनास्ति

सूक्ष्मात् सूक्ष्मं च यद्ब्रह्म तस्मै सूक्ष्मात्मने नमः ॥ ८०
मत्स्यो भूत्वा विरिञ्चाय येन वेदास्समाहृताः ।
रसातलगतश्शीघ्रं तस्मै मत्स्यात्मने नमः ॥ ८१
मन्दराद्रिर्धृतो येन प्राप्ते ह्यमृतमन्थने ।
अतिकर्कशदेहाय तस्मै कूर्मात्मने नमः ॥ ८२
वाराहं रूपमास्थाय महीं सवनपर्वताम् ।
उद्धरत्येकदंष्ट्रेण तस्मै क्रोडात्मने नमः ॥ ८३
नारसिंहवपुः कृत्वा सर्वलोकभयङ्करम् ।
हिरण्यकशिपुं जघ्ने तस्मै सिंहात्मने नमः ॥ ८४
पिङ्गेक्षणसटं यस्य रूपं दंष्ट्रानखैर्युतम् ।
दानवेन्द्रान्तकरणं तस्मै दृप्तात्मने नमः ॥ ८५
वामनं रूपमास्थाय बलिं संयम्य मायया ।
त्रैलोक्यं क्रान्तवान् यस्तु तस्मै क्रान्तात्मने नमः ॥ ८६
[1]जमदग्निसुतो भूत्वा रामश्शस्त्रभृतां वरः ।
महीं निःक्षत्रियां चक्रे तस्मै रामात्मने नमः ॥ ८७
त्रिस्सप्तकृत्वो यश्चैको धर्मे व्युत्क्रान्तिगौरवात् ।
जघान क्षत्रियान् सङ्ख्ये तस्मै क्रोधात्मने नमः ॥ ८८
रामो दाशरथिर्भूत्वा पुलस्त्यकुलनन्दनम् ।
जघान रावणं सङ्ख्ये तस्मै क्षत्रात्मने नमः ॥ ८९

1. अ-क-ख—अर्धद्वयं नास्ति

यो हली मुसली श्रीमान् नीलाम्बरधरस्स्थितः ।
रामाय रौहिणेयाय तस्मै भोगात्मने नमः ॥ १०
शङ्खिने चक्रिणे नित्यं शार्ङ्गिणे पीतवाससे ।
वनमालाधरायैव तस्मै कृष्णात्मने नमः ॥ ११
वसुदेवसुतश्श्रीमान् क्रीडितो नन्दगोकुले ।
कंसस्य निधनार्थाय तस्मै क्रीडात्मने नमः ॥ १२
[1]वासुदेवत्वमागम्य यदोर्वंशसमुद्भवः ।
भूभारहरणं चक्रे तस्मै कृष्णात्मने नमः ॥ १३
सारथ्यमर्जुनस्याजौ कुर्वन् गीतामृतं ददौ ।
लोकत्रयोपकाराय तस्मै ब्रह्मात्मने नमः ॥ १४
दानवांस्तु वशे कृत्वा पुनर्बुद्धत्वमागतः ।
सर्गस्य रक्षणार्थाय तस्मै बुद्धात्मने नमः ॥ १५
हनिष्यति कलौ प्राप्ते [2]म्लेच्छान् यस्तुरगाननः ।
धर्मसंस्थापको यस्तु तस्मै कल्क्यात्मने नमः ॥ १६
तारामये कालनेमिं हत्वा दानवपुङ्गवम् ।
ददौ राज्यं महेन्द्राय तस्मै [3]साङ्ख्यात्मने नमः ॥ १७
[4]यस्सर्वप्राणिनां देहे साक्षिभूतो ह्यवस्थितः ।
अक्षरः क्षरमाणानां तस्मै साक्ष्यात्मने नमः ॥ १८

---

1. अ-क-घ—अर्धद्वयं नास्ति 2. क-ख-घ—म्लेच्छांस्तुरगवाहनः
3. क—सत्यात्मने घ—सङ्ख्यात्मने
4. अ-क-घ—अर्धद्वयं नास्ति

नमोऽस्तु ते महादेव नमस्ते भक्तवत्सल ।
सुब्रह्मण्य नमस्तेऽस्तु प्रसीद परमेश्वर ॥ ९९
अव्यक्तं व्यक्तरूपेण व्याप्तं सर्वं त्वया विभो ॥ ९९॥
नारायणं सहस्राक्षं सर्वलोकमहेश्वरम् ।
हिरण्यनाभं यज्ञाङ्गम् अमृतं विश्वतोमुखम् ॥ १००॥
[1]प्रपद्ये पुण्डरीकाक्षं [2]प्रपद्ये पुरुषोत्तमम् ॥ १०१
सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।
येषां हृदिस्थो देवेशो मङ्गलायतनं हरिः ॥ १०२
मङ्गलं भगवान् विष्णुर् मङ्गलं मधुसूदनः ।
मङ्गलं पुण्डरीकाक्षो मङ्गलं गरुडध्वजः ॥ १०३
विश्वकर्मन् नमस्तेऽस्तु विश्वात्मन् विश्वसम्भव ।
अपवर्गस्थभूतानां पञ्चानां परमास्थित ॥ १०४
नमस्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु ।
नमस्ते दिक्षु सर्वासु त्वं हि सर्वपरायणम् ॥ १०५
नमस्ते भगवन् विष्णो लोकानां प्रभवाप्यय ।
त्वं हि कर्ता हृषीकेशस् संहर्ता वाऽपराजितः ॥ १०६
तेन पश्यामि ते दिव्यान् भावान् हि त्रिषु वर्त्मसु ॥ १०६॥
तच्च पश्यामि तत्त्वेन यत्ते रूपं सनातनम् ॥ १०७
दिवं ते शिरसा व्याप्तं पद्भ्यां देवी वसुन्धरा । १०७॥

---

1. ख—नास्तीदमर्धम् 2. क—त्वामहं पुरुषोत्तम

विक्रमेण त्रयो लोकाः पुरुषोऽसि सनातनः ॥ १०८

व्यक्ताव्यक्तस्वरूपेण व्याप्तं सर्वं त्वया विभो ।
अव्यक्तं ब्राह्मणं रूपं व्यक्तमेतच्चराचरम् ॥ १०९

अतसीपुष्पसङ्काशं पीतवाससमच्युतम् ।
ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ॥ ११०

नारायणपरं ब्रह्म नारायणपरं तपः ।
नारायणपरं सत्यं नारायणपरं परम् ॥ १११

यथा विष्णुमयं सत्यं यथा विष्णुमयं हविः ।
यथा विष्णुमयं सर्वं पाप्मा मे नश्यतां तथा ॥ ११२

तस्य यज्ञवराहस्य विष्णोरमिततेजसः ।
प्रणामं येऽपि कुर्वन्ति तेषामपि नमो नमः ॥ ११३

त्वां प्रपन्नाय भक्ताय गतिमिष्टां जिगीषते ।
यच्छ्रेयः पुण्डरीकाक्ष तद्ध्यायस्व सुरोत्तम ॥ ११४

इति विद्यातपोयोनिर् अयोनिर्विष्णुरीडितः ।
वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः ॥ ११५

वैशम्पायनः—

एतावदुक्त्वा वचनं भीष्मस्तद्गतमानसः ।
नम इत्येव कृष्णाय प्रणाममकरोत् तदा ॥ ११६

तस्मिन्नुपरते वाक्ये ततस्ते ब्रह्मवादिनः ।

[1]भीष्मं वाग्भिर्बाष्पगलास् तमानर्चुर्महामतिम् ॥ ११७

ते स्तुवन्तश्च विप्रेन्द्राः केशवं पुरुषोत्तमम् ।
भीष्मं च शनकैस्सर्वे प्रशशंसुः पुनः पुनः ॥ ११८

अधिगम्य च योगेन भक्तिं भीष्मस्य माधवः ।
त्रैलोक्यदर्शनं ज्ञानं दिव्यं दत्त्वा ययौ हरिः ॥ ११९

विदित्वा भक्तियोगं तं भीष्मस्य पुरुषोत्तमः ।
सहसोत्थाय तं हृष्टो यानमेवान्वपद्यत ॥ १२०

केशवस्सात्यकिश्चैव रथेनैकेन जग्मतुः ।
अपरेण महात्मानौ युधिष्ठिरधनञ्जयौ ॥ १२१

भीमसेनो यमौ चोभौ रथमेकं समास्थिताः ।
कृपो युयुत्सुस्सूतश्च सञ्जयश्चापरं रथम् ॥ १२२

ते रथैर्नगराकारैः प्रयाताः पुरुषर्षभाः ।
नेमिघोषेण महता कम्पयन्ते वसुन्धराम् ॥ १२३

ततो गिरः पुरुषवरस्तवेरिता
द्विजेरिताः पथिषु मनाक् स शुश्रुवे ।
कृताञ्जलिं प्रणतमथापरं जनं
स केशिहा मुदितमनाभ्यनन्दत ॥ १२४

1. ब—भीष्मवाक्यगलद्बाष्पास्

इति स्मरन् पठति च शार्ङ्गधन्वनश्
शृणोति वा यदुकुलनन्दनस्तवम् ।
स चक्रभृत्प्रतिहतसर्वकिल्बिषो
जनार्दनं प्रविशति देहसङ्क्षये ॥ १२५

यं योगिनः प्राणवियोगकाले
यत्नेन चित्ते विनिवेशयन्ति ।
स तं पुरस्ताद्धरिमीक्षमाणः
प्राणाञ्जहौ प्राप्तफलो हि भीष्मः ॥ १२६

स्तवराजस्समाप्तोऽयं विष्णोरद्भुतकर्मणः ।
गाङ्गेयेन पुरा गीतो महापातकनाशनः ॥ १२७

इमं नरस्स्तवराजं मुमुक्षुः
पठञ् शुचिः कलुषितकल्मषापहम् ।
अतीत्य लोकानमलान् सनातनान्
पदं स गच्छत्यमृतं महात्मनः ॥ १२८

इति श्रीमहाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
॥ ८६ ॥ राजधर्मपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
[अस्मिन्नध्याये १२८ श्लोकाः]

---

## ॥ त्रिचत्वारिंशोऽध्यायः ॥



कृष्णयुधिष्ठिरादीनां कुरुक्षेत्रं प्रति गमनम् ॥ १ ॥ युधिष्ठिरेण कृष्णं प्रति परशुरामचरितकथनप्रार्थना ॥ २ ॥

---

वैशम्पायनः—

ततस्स च हृषीकेशस् स च राजा युधिष्ठिरः ।
कृपादयश्च ते सर्वे चत्वारः पाण्डवाश्च ते ॥ १

रथैस्तैर्नगरप्रख्यैः पताकाध्वजशोभितैः ।
ययुराशु कुरुक्षेत्रं वाजिभिश्शीघ्रगामिभिः ॥ २

तेऽवतीर्य कुरुक्षेत्रे केशमज्जास्थिसङ्कुले ।
देहन्यासः कृतो यत्र क्षत्रियैस्तैर्महारथैः ॥ ३

गजाश्वदेहास्थिचयैः पर्वतैरिव सञ्चितैः ।
नरशीर्षकपालैश्च हंसैरिव च सर्वशः ॥ ४

चितासहस्रैर्निचितं वर्मशस्त्रसमाकुलम् ।
आपानभूमिं कालस्य तदा भुक्तोज्झितामिव ॥ ५

भूतसङ्घानुचरितं रक्षोगणनिषेवितम् ।
पश्यन्तस्ते कुरुक्षेत्रं ययुराशु महारथाः ॥ ६

गच्छन्नेव महाबाहुस् सर्वं यादवनन्दनः ।
युधिष्ठिराय प्रोवाच जामदग्न्यस्य विक्रमम् ॥ ७

श्रीभगवान्—

अमी रामह्रदाः पञ्च दृश्यन्ते पार्थ दूरतः ।
येषु सन्तर्पयामास पूर्वान् क्षत्रियशोणितैः ॥ ८

त्रिस्सप्तकृत्वो वसुधां कृत्वा निःक्षत्रियां प्रभुः ।
इहेदानीं ततो रामः कर्मणो विरराम ह ॥ ९

युधिष्ठिरः—

त्रिस्सप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा ।
रामेणेति यदात्थ त्वम् अत्र मे संशयो महान् ॥ १०

क्षत्रबीजं यथा दग्धं रामेण यदुपुङ्गव ।
कथं भूयस्समुत्पत्तिः क्षत्रस्यामितविक्रम ॥ ११

महात्मना भगवता रामेण यदुनन्दन ।
कथमुत्सादितं क्षत्रं कथमृद्धिगतं पुनः ॥ १२

महाभारतयुद्धे हि कोटिशः क्षत्रिया हताः ।
तथाऽभूच्च मही कीर्णा क्षत्रियैर्वेदतां वर ॥ १३

एतन्मे छिन्धि वार्ष्णेय संशयं तार्क्ष्यकेतन ।
आगमो हि परः कृष्ण त्वत्तो नो वासवानुज ॥ १४

वैशम्पायनः—

ततो व्रजन्नेव गदाग्रजः प्रभुश्
शशंस तस्मै निखिलेन तत्त्वतः ।

युधिष्ठिरायाप्रतिमौजसे तथा
यथाऽभवत् क्षत्रियसङ्कुला मही ॥ १५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
॥ ८६ ॥ राजधर्मपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
[ अस्मिन्नध्याये १५ श्लोकाः ]

---

## ॥ चतुश्चत्वारिंशोऽध्यायः ॥

---

कृष्णेन युधिष्ठिरं प्रति परशुरामचरितकथनम् ॥

---

श्रीभगवान्—

शृणु कौन्तेय रामस्य मया यावत् परिश्रुतम् ।
महर्षीणां कथयतां कारणं तस्य जन्म च ॥ १

यथा च जामदग्न्येन कोटिशः क्षत्रिया हताः ।
सम्भूता राजवंशेषु ये भूयो भारते हताः ॥ २

जह्नोरुजह्नुस् तनयो वल्लभस्तस्य चात्मजः ।
कुशिको नाम धर्मज्ञस् तस्य पुत्रो महीपतिः ॥ ३

उग्रं तपस्समातिष्ठत् सहस्राक्षसमो विभुः ।
पुत्रं लभेयममितं त्रिलोकेश्वरमित्युत ॥ ४

तमुग्रतपसं दृष्ट्वा सहस्राक्षः पुरन्दरः ।

समर्थं पुत्रजनने स्वयमेवैत्य भारत ॥ ५
पुत्रत्वमगमद्राजंस् तस्य लोकेश्वरेश्वरः ।
गाधिर्नामाभवत् पुत्रः कौशिकः पाकशासनः ॥ ६

तस्य कन्याऽभवद्राजन् नाम्ना सत्यवती विभो ।
तां गाधिर्भृगुपुत्राय ऋचीकाय ददौ प्रभुः ॥ ७

ततस्तया हि कौन्तेय भार्गवः कुरुपुङ्गव ।
पुत्रार्थं श्रपयामास चरुं गाधेस्तथैव च ॥ ८
आहूय चाह तां भार्याम् ऋचीको भार्गवस्तदा ॥ ८॥

ऋचीकः—
उपयोज्यश्चरुरयं त्वया मात्रा च भामिनी ॥ ९

तस्या जनिष्यते पुत्रो दीप्तिमान् क्षत्रियर्षभः ।
अजय्यः क्षत्रियैर्लोके क्षत्रियर्षभसूदनः ॥ १०

तवापि पुत्रं कल्याणि श्रुतिमन्तं तपोन्वितम् ।
शमात्मकं द्विजश्रेष्ठं चरुरेष विधास्यति ॥ ११

श्रीभगवान्—
इत्येवमुक्त्वा तां भार्यां ऋचीको भृगुनन्दनः ।
तपस्यभिरतो धीमाञ् जगामारण्यमेव च ॥ १२

एतस्मिन्नेव काले तु तीर्थयात्रापरो नृपः ।
गाधिस्सदारस्सम्प्राप्त ऋचीकस्याश्रमं प्रति ॥ १३
चरुद्वयं गृहीत्वा तु राजन् सत्यवती तदा ।

भर्त्रा दत्तं प्रसन्नेन मात्रे हृष्टा न्यवेदयत् ॥ १४

माता तु तस्याः कौन्तेय दुहित्रे स्वं चरुं ददौ ।
तस्याश्चरुमथाज्ञातम् आत्मसंस्थं चकार ह ॥ १५

अथ सत्यवती गर्भं क्षत्रियान्तकरं तदा ।
धारयामास दीप्तेन वपुषा घोरदर्शनम् ॥ १६

तामृचीकस्तदा दृष्ट्वा ध्यानयोगेन भारत ।
अब्रवीद्भृगुशार्दूलः स्वां भार्यां वरवर्णिनीम् ॥ १७

ऋचीकः—

मात्राऽसि व्यंसिता भद्रे चरुव्यत्यासहेतुना ।
तस्माज्जनिष्यते पुत्रः क्रूरकर्मा महाबलः ॥ १८

जनयिष्यति माता ते ब्रह्मभूतं तपोधनम् ।
विश्वं हि ब्रह्म तपसा मया तत्र समर्पितम् ॥ १९

श्रीभगवान्—

सैवमुक्ता महाभागा भर्त्रा सत्यवती तदा ।
पपात शिरसा तस्मै वेपन्ती चाब्रवीदिदम् ॥ २०

सत्यवती—

नार्होऽसि भगवन्नद्य वक्तुमेवंविधं वचः ।
ब्राह्मणापशदं पुत्रं प्राप्स्यसीति महामुने ॥ २१

ऋचीकः—

नैवं सङ्कल्पितः कामो मया भद्रे तथा त्वयि ।

उग्रकर्मा भवेत् पुत्रश् चरुव्यत्यासकारणात् ॥ २२

सत्यवती—

इच्छँल्लोकानपि मुने सृजेथाः किं पुनर्मम ।
शमात्मकमृजुं पुत्रं लभेयं तपतां वरम् ॥ २३

ऋचीकः—

नोक्तपूर्वं मया भद्रे [1]स्वैरेष्वप्यनृतं वचः ।
किमुताग्निं समाधाय मन्त्रवच्चरुसाधने ॥ २४

सत्यवती—

काममीदृग् भवेत् पौत्रो मा मैवं तनयः प्रभो ।
शमात्मकमृजुं पुत्रं लभेयं जपतां वर ॥ २५

ऋचीकः—

पुत्रे नास्ति विशेषो मे पौत्रे वा वरवर्णिनि ।
यथा त्वयोक्तं तु वचस् तथा भद्रे भविष्यति ॥ २६

श्रीभगवान्—

ततस्सत्यवती पुत्रं जनयामास भार्गवम् ।
तपस्यभिरतं [2]दान्तं जमदग्निं शमात्मकम् ॥ २७

विश्वामित्रं च दायादं गाधिः कुशिकनन्दनः ।
प्राप ब्रह्मर्षिसमितं विश्वेन ब्रह्मणा युतम् ॥ २८

ऋचीको जनयामास जमदग्निं तपोनिधिम् ॥ २८॥
सोऽपि पुत्रं ह्यजनयज् जमदग्निस्सुदारुणम् ।

1. क-ख-घ—स्वप्नेष्वप्यनृतं 2. अ—शान्तं

सर्वविद्यान्तगं श्रेष्ठं धनुर्वेदस्य पारगम् ॥ २९॥
रामं क्षत्रियहन्तारं प्रदीप्तमिव पावकम् ॥ ३०
एतस्मिन्नेव काले तु कृतवीर्यात्मजो बली ।
अर्जुनो नाम तेजस्वी क्षत्रियो हैहयान्वयः ॥ ३१
[1]दत्तात्रेयप्रसादेन राजा बाहुसहस्रवान् ।
अजयत् पृथिवीं सर्वां सप्तद्वीपां सपर्वताम् ॥ ३२
स बाहुसबलेनाजौ धर्मेण परमेण च ।
तृषितेन च कौरव्य भिक्षितश्चित्रभानुना ॥ ३३
सहस्रबाहुर्विक्रान्तः प्रादाद्भिक्षामथाग्नये ।
ग्रामान् पुराणि राष्ट्राणि पट्टणान्यटवीस्तथा ॥ ३४
जज्वाल तस्य बाणेद्धश्चित्रभानुर्दिधक्षया ॥ ३४॥
स तस्य पुरुषेन्द्रस्य प्रभावेण महौजसः ।
ददाह कार्तवीर्यस्य शैलानपि धरामपि ॥ ३५॥
स शून्यमाश्रमारण्यं वरुणस्यात्मजस्य तत् ।
ददाह पवनेनेद्धश् चित्रभानुस्सहैहयः ॥ ३६॥
आपतन्तं ततो रोषाच् छशापार्जुनमच्युत ।
दग्धे श्रमे महाराज कार्तवीर्येण वीर्यवान् ॥ ३७॥

वरुणात्मजः—

त्वया न वर्जितं मोहाद् यस्माद्वनमिदं मम ।

1. क-ख-ग—नास्तीदमर्धम्

दग्धं तस्माद्रणे रामो बाहूंस्ते च्छेत्स्यतेऽर्जुन ॥ ३८॥

श्रीभगवान्—

अर्जुनस्तु महाराज बली नित्यं शमात्मकः ।
ब्रह्मण्यश्च शरण्यश्च दाता शूरश्च भारत ॥ ३९॥

तस्य पुत्रास्सुबलिनश् शापेनासन् पितुर्वधे ।
निमित्तमवलिप्तास्ते नृशंसाश्चैव नित्यदा ॥ ४०॥

जमदग्नेस्तु धेन्वास्ते वत्समानिन्युरच्युत ।
अज्ञातं कार्तवीर्यस्य हेहयेन्द्रस्य धीमतः ॥ ४१॥

ततोऽर्जुनस्य बाहून् स चिच्छेद रुषितोऽनघ ।
प्रत्याजहार तं वत्सं जामदग्न्यस्स्वमाश्रमम् ॥ ४२॥

अर्जुनस्य सुतास्तेऽथ सम्भूयाबुद्धयस्तदा ।
गत्वाऽऽश्रममसम्बुद्धा जमदग्नेर्महात्मनः । ४३॥

[1]अपातयन्त भल्लाग्रैश् शिरः कायान्नराधिप ॥ ४४

समित्कुशार्थं रामस्य निर्गतस्य महात्मनः ।
प्रत्यक्षं राममातुश्च तथैवाश्रमवासिनाम् ॥ ४५

श्रुत्वा रामस्तमर्थं च क्रुद्धः कालानलोपमः ।
धनुर्वेदेऽद्वितीयो हि दिव्यास्त्रैस्समलङ्कृतः ॥ ४६

चन्द्रबिम्बार्धसङ्काशं परशुं गृह्य भार्गवः ।
ततः पितृवधामर्षाद् रामः परममन्युमान् ॥ ४७

---

1. क-ग—नास्त्यर्धंद्वयम्

निःक्षत्रियां प्रतिश्रुत्य महीं शस्त्रमगृह्णत ॥ ४७॥

ततस्स भृगुशार्दूलः कार्तवीर्यस्य वीर्यवान् ।
विक्रम्य निजघानाशु पुत्रान् पौत्रांस्तथैव च ॥ ४८॥

स हैहयसहस्राणि हत्वा परममन्युमान् ।
महीं सागरपर्यन्तां चकार रुधिरोक्षिताम् ॥ ४९॥

स तथा सुमहातेजाः कृत्वा निःक्षत्रियां महीम् ।
कृपया परयाऽऽविष्टो वनमेव जगाम ह ॥ ५०॥

ततो वर्षसहस्रेषु समतीतेषु केषुचित् ।
कोपं सम्प्राप्तवांस्तीव्रं प्रकृत्या कोपनः प्रभुः ॥ ५१॥

विश्वामित्रस्य पौत्रस्तु रैभ्यपुत्रो महातपाः ।
परावसुर्महाराज क्षिप्त्वाऽऽह जनसंसदि ॥ ५२॥

परावसुः—

ये ते ययातिपतने यज्ञे सन्तस्समागताः ।
प्रतर्दनप्रभृतयो राम किं क्षत्रिया न ते ॥ ५३॥

मिथ्याप्रतिज्ञो राम त्वं कत्थसे जनसंसदि ।
भयात् क्षत्रियवीराणां पर्वतं समुपाश्रितः ॥ ५४॥

श्रीभगवान्—

स पुनः क्षत्रियशतैः पृथिवीमनुसन्तताम् ।
परावसोस्तु तच्छ्रुत्वा शस्त्रं जग्राह भार्गवः ॥ ५५॥

ततो ये क्षत्रिया राजञ् शतशस्तेन वर्जिताः ।
ते विवृद्धा महावीर्याः पृथिवीपतयोऽभवन् ॥ ५६॥
स पुनस्ताञ्जघानाशु बालानपि नराधिप ।
गर्भस्थैस्तु मही व्याप्ता पुनरेवाभवत् तदा ॥ ५७॥
जातं जातं स गर्भं तु पुनरेव जघान ह ।
अरक्षंश्च सुतान् कांश्चित् तदा क्षत्रिययोषितः ॥ ५८॥
त्रिस्सप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः ।
दक्षिणामश्वमेधान्ते कश्यपायाददात्ततः ॥ ५९॥
क्षत्रियाणां तु शेषार्थं करेणोद्दिश्य काश्यपः ।
स्रुक्प्रग्रहवता राजञ् छ्रीमान् वाक्यमथाब्रवीत् ॥ ६०॥

काश्यपः—

गच्छ पारं समुद्रस्य दक्षिणस्य महामुने ।
न ते मद्विषये राम वस्तव्यमिह कर्हिचित् ॥ ६१॥
पृथिवी दक्षिणा दत्ता वाजिमेधे मम त्वया ।
पुनरस्याः पृथिव्या हि दत्त्वाऽऽदातुमनीश्वरः ॥ ६२॥

श्रीभगवान्—

ततश्शूर्पाकरोद्देशं सागरस्तस्य निर्ममे ।
सन्त्रासाज्जामदग्न्यस्य सोऽपरान्तमहीतलम् ॥ ६३॥
काश्यपस्तु महाराज प्रतिगृह्य महीमिमाम् ।
कृत्वा ब्राह्मणसंस्थां वै प्रविवेश महावनम् ॥ ६४॥

तत्र शूद्राश्च वैश्याश्च यथा स्वैरप्रचारिणः ।
अवर्तन्त द्विजाग्र्याणां दारेषु भरतर्षभ ॥ ६५॥

अराजके जीवलोके दुर्बला बलवत्तरैः ।
वध्यन्ते न च वित्तेषु प्रभुत्वमिह कस्यचित् ॥ ६६॥

ब्राह्मणा [1]मद्यपाः केचिन्मूर्खाः पण्डितमानिनः ।
ब्राह्मणाः क्षत्रिया वैश्याश् शूद्राश्चोत्पथगामिनः ॥ ६७॥

परस्परं समाश्रित्य घातयन्त्यपथे स्थिताः ॥ ६८

स्वधर्मं ब्राह्मणास्त्यक्त्वा पाषण्डांश्च समाश्रिताः ।
चौरिकानृतमायाश्च सर्वे चैव प्रकुर्वते ॥ ६९

स्वधर्मस्थान् द्विजान् हत्वा तथाऽऽश्रमनिवासिनः ॥ ६९॥

वैश्यास्सत्पथसंस्थाश्च शूद्रा ये चैव धार्मिकाः ।
तान् सर्वान् घातयन्ति स्म दुराचारास्सुनिर्भयाः ॥ ७०॥

यज्ञाध्ययनशीलांश्च आश्रमस्थांस्तपस्विनः ॥ ७१

गोबालवृद्धनारीणां नाशं कुर्वन्ति चापरे ।
आन्वीक्षकी त्रयी वार्ता दण्डनीतिः प्रवर्तते ॥ ७२

व्रात्यतां समनुप्राप्ता बहवो हि द्विजातयः ।
अधरोत्तरापचारेण म्लेच्छभूताश्च सर्वशः ॥ ७३

ततः कालेन पृथिवी प्रविवेश रसातलम् ।

---

1. ब—क्षत्रिया वैश्याः

अरक्ष्यमाणा विधिवत् क्षत्रियैर्धर्मरक्षिभिः ॥ ७४
[1]तां दृष्ट्वा द्रवतीं तत्र सन्त्रासात् स महामनाः ।
ऊरुणा धारयामास काश्यपः पृथिवीं ततः ॥ ७५
निमज्जन्तीं ततो राजंस् तेनोर्वीति मही स्मृता ॥ ७५॥
रक्षणं च समुद्दिश्य प्रायाचत् पृथिवी तदा ।
प्रसाद्य काश्यपं देवी क्षत्रियान् बाहुशालिनः ॥ ७६॥

पृथिवी—

सन्ति ब्रह्मन् मया गुप्ता नृषु क्षत्रियपुङ्गवाः ।
हैहयानां कुले जातास् ते रक्षन्तु महामुने ॥ ७७॥
अस्ति कौरवदायादो विदूरथसुतः प्रभो ।
ऋक्षैस्संवर्धितो विप्र ऋक्षवत्यथ पर्वते ॥ ७८॥
तथाऽनुकम्पमानेन यज्वनाऽनन्यतेजसा ।
पराशरेण दायादस् सौदासस्याभिरक्षितः ॥ ७९॥
सर्वकर्माणि कुरुते तस्यर्षे शूद्रवद्धि सः ।
सर्वकर्मेत्यभिख्यातस् स मां रक्षतु पार्थिवः ॥ ८०॥
शिबिपुत्रो महातेजा गोपतिर्नाम नामतः ।
वने संरक्षितो गोभिस् सोऽभिरक्षतु मां मुने ॥ ८१॥
प्रतर्दनस्य पुत्रस्तु वत्सो नाम महाबलः ।

---

1. क-ब—नास्तीदमर्धम्

वत्सैस्संवर्धितो गोष्ठे स मां रक्षतु पार्थिवः ॥ ८२॥

दधिवाहनपुत्रस्तु पौत्रो दिविरथस्य च ।
अङ्गस्स गौतमेनापि [1]गङ्गाकूलेऽभिरक्षितः ॥ ८३॥

बृहद्रथो महातेजा भूमिर्भूतिपरिष्कृतः ।
गोलाङ्गूलैर्महाराजो गृध्रकूटेऽभिरक्षितः ॥ ८४॥

मरुत्तस्यान्ववाये तु चतुर्वर्षा नृपा स्त्रियः ।
मरुत्पतिसमा वीर्ये समुद्रेणाभिरक्षिताः ॥ ८५॥

एते क्षत्रियदायादास् तत्र तत्र परिश्रुताः ।
सम्यङ्मामभिरक्षन्तु ततस्स्थास्यामि निश्चला ॥ ८६॥

एतेषां पितरश्चैव तथैव च पितामहाः ।
मदर्थं निहता युद्धे रामेणाक्लिष्टकर्मणा ॥ ८७॥

तेषां शोकप्रणाशो वै मया कार्यो न संशयः ।
न ह्यहं कामये नित्यम् अविक्रान्तेन रक्षणम् ॥ ८८॥

श्रीभगवान्—

ततः पृथिव्या निर्दिष्टान् समानीयाथ काश्यपः ।
अभ्यषिञ्चन् महीपालान् क्षत्रियान् वीरसम्मतान् ॥ ८९॥

तेषां पुत्रांश्च पौत्रांश्च येषां वंशाः प्रतिष्ठिताः ॥ ९०

एवमेतत् पुरावृत्तं यन्मां पृच्छसि पाण्डव ॥ ९०॥

---

1. क-ख-घ—गङ्गायामभि

वैशम्पायनः—

एवं ब्रुवन्नेव यदुप्रवीरो
युधिष्ठिरं धर्मभृतां वरिष्ठम् ।
रथेन तेनाभिययौ यथाऽर्को
विशन् प्रभाभिर्भगवांस्त्रिलोकीम् ॥ ९१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥
॥ ८६ ॥ राजधर्मपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
[अस्मिन्नध्याये ९१॥ श्लोकाः]

---

## ॥ पञ्चचत्वारिंशोऽध्यायः ॥

कृष्णेन भीष्मप्रशंसनपूर्वकं तं प्रति युधिष्ठिराय धर्मोपदेशचोदना ॥

---

वैशम्पायनः—

ततो रामस्य तत् कर्म श्रुत्वा राजा युधिष्ठिरः ।
विस्मयं परमं गत्वा प्रत्युवाच जनार्दनम् ॥ १

युधिष्ठिरः—

अहो रामस्य वार्ष्णेय शक्रस्येव महात्मनः ।
विक्रमो येन वसुधा क्रोधान्निःक्षत्रिया कृता ॥ २

गोभिस्समुद्रेण तथा गोलाङ्गूलर्क्षवानरैः ।

गुप्ता रामभयोद्विग्नाः क्षत्रियाणां कुलोद्वहाः ॥ ३

अहो धन्यो नृलोकोऽयं सभाग्याश्च नरा भुवि ।
यत्र कर्मेदृशं सम्यक् द्विजाग्र्यैः कृतमच्युत ॥ ४

वैशम्पायनः—

कथयन्तौ कथां तात तावच्युतयुधिष्ठिरौ ।
जग्मतुर्यत्र गाङ्गेयश् शरतल्पगतः प्रभुः ॥ ५

ततस्ते ददृशुर्भीष्मं शरप्रस्तरशायिनम् ।
सुरश्मिमालासंवीतं सायंसूर्यसमप्रभम् ॥ ६

उपास्यमानं मुनिभिर् देवैरिव शतक्रतुम् ।
देशे परमधर्मिष्ठे नदीमोघवतीमनु ॥ ७

दूरादेव समालोक्य कृष्णो राजा च धर्मजः ।
चत्वारः पाण्डवाश्चैव ते च शारद्वतादयः ॥ ८

अवस्कन्द्य च वाहेभ्यस् संयम्य प्रचलं मनः ।
एकीकृत्येन्द्रियग्रामम् उपतस्थुर्महामुनीन् ॥ ९

अभिवाद्य तु गोविन्दस् सात्यकिस्ते च कौरवाः ।
व्यासादींस्तानृषीन् पश्चाद् गाङ्गेयमुपतस्थिरे ॥ १०

[1]तपोवृद्धिं ततः पृष्ट्वा गाङ्गेयं यदुपुङ्गवः ।
परिवार्य ततस्सर्वे निषेदुः पुरुषर्षभाः ॥ ११

---

1. घ—अर्धचतुष्टयं नास्ति

ततो निशाम्य गाङ्गेयं शाम्यमानमिवानलम् ।
किञ्चिद्दीनमना भीष्मम् इति होवाच केशवः ॥ १२

श्रीभगवान्—

कच्चिज्ज्ञानानि ते भीष्म प्रसन्नानि यथापुरम् ।
कच्चिन्न व्याकुला चैव बुद्धिस्ते वदतां वर ॥ १३

शराभिघातदुःखार्तं कच्चिद्गात्रं न दूयते ।
मानसादपि दुःखाद्धि शारीरं बलवत्तरम् ॥ १४

वरदानात् पितुः कामं छन्दमृत्युरसि प्रभो ।
शन्तनोर्धर्मशीलस्य नन्वेतदिह कारणम् ॥ १५

सुसूक्ष्मोऽपीह देहे वै शल्यो जनयते रुजम् ।
किंपुनश्शरसङ्घातैश्चितस्य तव पार्थिव ॥ १६

कामं नैतत्तवाख्येयं प्राणिनां प्रभवाप्ययौ ।
भवानुपदिशेच्छ्रेयो देवानामपि भारत ॥ १७

यच्च भूतं भविष्यं च भवच्च पुरुषर्षभ ।
सर्वं तज्ज्ञानवृद्धस्य तव पाणाविहाहृतम् ॥ १८

संसारस्येह भूतानां धर्मस्य च फलोदयः ।
विदितस्ते महाप्राज्ञ त्वं हि धर्ममयो निधिः ॥ १९

न हि राज्ये स्थितं कञ्चित् समग्राङ्गमरोगिणम् ।
स्त्रीसहस्रैः परिवृतं पश्यामेहोर्ध्वरेतसम् ॥ २०

ऋते शान्तनवाद्भीष्मात् त्रिषु लोकेषु पार्थिवम् ।
सत्यसन्धान्महावीर्याच्छूराद्धर्मैकतत्परात् ॥ २१

मृत्युमावार्य तपसा शरप्रस्तरशायिनम् ।
त्रिवर्गप्रवणं कञ्चिन्न च तातानुशुश्रुम ॥ २२

सत्ये तपसि दाने च यज्ञाधिकरणे तथा ।
धनुर्वेदे च वेदे च नित्यं चैवान्ववेक्षणे ॥ २३

अनृशंसं शुचिं दान्तं सर्वभूतहिते रतम् ।
महारथं त्वत्सदृशं न कञ्चिदनुशुश्रुमः ॥ २४

त्वं हि देवान् सगन्धर्वान् ससुरासुरमानवान् ।
शक्त एकरथेनैव विजेतुं नात्र संशयः ॥ २५

त्वं हि भीष्म महाबाहो वसूनां वासवोपमः ।
नित्यं विप्रैस्समाख्यातो नवमोऽनुपमो गुणैः ॥ २६

अहं च त्वाऽभिजानामि स्वयं पुरुषसत्तम ।
तपसा हि भवाञ् शक्तस् स्रष्टुं लोकांश्चराचरान् ॥ २७
त्रिदशेष्वभिविख्यातस् त्वं शक्त्या सुमहाबलः ॥ २७॥

मनुष्येषु मनुष्येन्द्र न च दृष्टो न च श्रुतः ।
भवतो हि गुणैस्तुल्यः पृथिव्यां पुरुषः क्वचित् ॥ २८॥
त्वं हि सर्वगुणैर्भीष्म देवानप्यतिरिच्यसे ॥ २९

तदस्य तप्यमानस्य ज्ञातीनां सङ्क्षयेण च ।
ज्येष्ठस्य पाण्डुपुत्रस्य शोकं भीष्म व्यपानुद ॥ ३०

ये च धर्मास्समाख्याताश् चातुर्वर्ण्यस्य भारत ।
[1]चातुराश्रम्यसंसृष्टास् ते सर्वे विदितास्तव ॥ ३१

चातुर्विद्ये च ये प्रोक्ताश् चातुर्होत्राश्च भारत ।
योगे साङ्ख्ये च निरता ये च धर्मास्सनातनाः ॥ ३२

चातुर्वर्ण्येनयैश्चैको न स धर्मो विरुध्यते ।
सेव्यमानस्सदैवान्यो गाङ्गेय विदितस्तव ॥ ३३

[2]प्रतिलोमप्रसूतानां म्लेच्छानां चैव यस्स्मृतः ।
देशजातिकुलानां च जानीषे धर्मलक्षणम् ॥ ३४

वेदोक्तो यश्च शिष्टोक्तस् स चैव विदितस्तव ।
प्रवृत्तश्च निवृत्तश्च स चापि विदितस्तव ॥ ३५

इतिहासपुराणार्थाः कार्त्स्न्येन विदिताः प्रभो ।
धर्मशास्त्रं च सकलं नित्यं मनसि ते स्थितम् ॥ ३६

ये च केचन लोकेऽस्मिन्नर्थास्संशयकारकाः ।
तेषां छेत्ता नास्ति लोके त्वदन्यः पुरुषर्षभ ॥ ३७

---

1. अ-क-घ—अर्धद्वयं नास्ति
2. घ—अर्धत्रयं नास्ति

स पाण्डवेयस्य मनस्समुत्थितं
नरेन्द्र शोकं व्यपकर्ष मेधया ।
भवद्विधा ह्युत्तमबुद्धिविस्तरा
विमुह्यमानस्य जनस्य शान्तये ॥ ३८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
॥ ८६ ॥ राजधर्मपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
[ अस्मिन्नध्याये ३८ श्लोकाः ]

---

## ॥ षट्चत्वारिंशोऽध्यायः ॥

---

भीष्मेण कृष्णं प्रति स्तुतिपूर्वकं श्रेयःप्रार्थना ॥ १ ॥ कृष्णेन भीष्माय श्रेयःप्रदानपूर्वकं तं प्रति धर्मकथनचोदना ॥ २ ॥

---

वैशम्पायनः—

श्रुत्वा तु वचनं भीष्मो वासुदेवस्य धीमतः ।
किञ्चिदुन्नाम्य वदनं प्राञ्जलिर्वाक्यमब्रवीत् ॥ १

भीष्मः—

नमस्ते भगवन् कृष्ण लोकानां प्रभवाप्यय ।
त्वं हि कर्ता हृषीकेश संहर्ता चापराजितः ॥ २
विश्वकर्मन् नमस्तेऽस्तु विश्वात्मन् विश्वसम्भव ।

अपवर्ग[1]स्थ भूतानां पञ्चानां परतस्थित ॥ ३
नमस्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु ।
योगेश्वर नमस्तेऽस्तु त्वं हि सर्वपरायणः ॥ ४
मत्संश्रितं यदात्थ त्वं वचः पुरुषसत्तम ।
तेन पश्यामि ते दिव्यान् भावांस्त्रिषु च वर्त्मसु ॥ ५
तच्च पश्यामि तत्त्वेन यत्ते रूपं सनातनम् ।
सप्त मार्गा निरुद्धास्ते वायोरमिततेजसः ॥ ६
दिवं ते शिरसा व्याप्तं पद्भ्यां देवी वसुन्धरा ।
दिशो भुजा रविश्चक्षुर् वीर्ये शक्रः प्रतिष्ठितः ॥ ७
अतसीपुष्पसङ्काशं पीतवाससमच्युतम् ।
वपुर्ह्यनुमिमीमस्ते मेघस्येव सविद्युतः ॥ ८
त्वां प्रपन्नाय भक्ताय गतिमिष्टां जिगीषवे ।
यच्छ्रेयः पुण्डरीकाक्ष तद्ध्यायस्व सुरोत्तम ॥ ९

श्रीभगवान्—

यतः खलु परा भक्तिर् मयि ते पुरुषर्षभ ।
ततो मया वपुर्दिव्यं तव राजन् विदर्शितम् ॥ १०
न ह्यभक्ताय राजेन्द्र भक्तायानृजवे न च ।
दर्शयाम्यहमात्मानं न चादान्ताय भारत ॥ ११
भवांश्च मम भक्तश्च नित्यं चार्जवमास्थितः ।

---

1. घ—श्च

दमे तपसि सत्ये च दाने च निरतश्शुचिः ॥ १२

अर्हस्त्वं भीष्म मां द्रष्टुं तपसा स्वेन पार्थिव ।
तव ह्युपस्थिता लोका येभ्यो नावर्तसे पुनः ॥ १३

पञ्चाशतं षट् च कुरुप्रवीर
शेषं दिनानां तव जीवितस्य ।
ततश्शुभैः कर्मफलोदयैस्त्वं
समेष्यसे भीष्म विमुच्य देहम् ॥ १४

एते हि देवा वसवो विमाना-
न्यास्थाय सर्वे ज्वलिताग्निकल्पाः ।
अन्तर्हितास्त्वां प्रतिपालयन्ति
काष्ठां प्रपद्यन्तमुदक्पतङ्गाम् ॥ १५

व्यावृत्तमात्रे भगवत्युदीचीं
सूर्ये जगत् कालवशं प्रपन्ने ।
गन्तासि लोकान् पुरुषप्रवीर
नावर्तते यानुपलभ्य विद्वान् ॥ १६

अमुं च लोकं त्वयि भीष्म याते
ज्ञानानि सर्वाणि पराभविष्यन् ।
अतस्तु सर्वे तव सन्निकर्षे
समागता धर्मविवेचनाय ॥ १७

तज्ज्ञातिशोकोपहतश्रुताय
सत्याभिसन्धाय युधिष्ठिराय ।
प्रब्रूहि धर्मार्थसमाधियुक्तं
तथ्यं वचोऽस्यापनुदेच्छूमं तत् ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥
॥ ८६ ॥ राजधर्मपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[अस्मिन्नध्याये १८ श्लोकाः]

---

## ॥ सप्तचत्वारिंशोऽध्यायः ॥

भीष्मेण कृष्णं प्रति स्वस्य शस्त्रसञ्छिन्नशरीरतया धर्मकथनापाटवप्रकटनम् ॥ १ ॥ कृष्णेन भीष्माय शरीरदार्ढ्यादिप्रदानम् ॥ २ ॥ ततः सायं सर्वेषां स्वस्वस्थानगमनम् ॥ ३ ॥

---

वैशम्पायनः—

ततः कृष्णस्य तद्वाक्यं धर्मार्थसहितं हितम् ।
श्रुत्वा शान्तनवः कृष्णं प्रत्युवाच कृताञ्जलिः ॥ १

भीष्मः—

लोकनाथ महाबाहो शिव नारायणाच्युत ।
तव वाक्यमुपश्रुत्य हर्षेणास्मि परिप्लुतः ॥ २

दमे तपसि सत्ये च दाने च निरतश्शुचिः ॥ १२

अर्हस्त्वं भीष्म मां द्रष्टुं तपसा स्वेन पार्थिव ।
तव ह्युपस्थिता लोका येभ्यो नावर्तसे पुनः ॥ १३

पञ्चाशतं षट् च कुरुप्रवीर
शेषं दिनानां तव जीवितस्य ।
ततश्शुभैः कर्मफलोदयैस्त्वं
समेष्यसे भीष्म विमुच्य देहम् ॥ १४

एते हि देवा वसवो विमाना-
न्यास्थाय सर्वे ज्वलिताग्निकल्पाः ।
अन्तर्हितास्त्वां प्रतिपालयन्ति
काष्ठां प्रपद्यन्तमुदक्पतङ्गाम् ॥ १५

व्यावृत्तमात्रे भगवत्युदीचीं
सूर्ये जगत् कालवशं प्रपन्ने ।
गन्तासि लोकान् पुरुषप्रवीर
नावर्तते यानुपलभ्य विद्वान् ॥ १६

अमुं च लोकं त्वयि भीष्म याते
ज्ञानानि सर्वाणि पराभविष्यन् ।
अतस्तु सर्वे तव सन्निकर्षं
समागता धर्मविवेचनाय ॥ १७

तज्ज्ञातिशोकोपहतश्रुताय
सत्याभिसन्धाय युधिष्ठिराय ।
प्रब्रूहि धर्मार्थसमाधियुक्तं
तथ्यं वचोऽस्यापनुदेच्छ्रमं तत् ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥
॥ ८६ ॥ राजधर्मपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
[ अस्मिन्नध्याये १८ श्लोकाः ]

---

## ॥ सप्तचत्वारिंशोऽध्यायः ॥



भीष्मेण कृष्णं प्रति स्वस्य शस्त्रसञ्छिन्नशरीरतया धर्मकथनापाटव-प्रकटनम् ॥ १ ॥ कृष्णेन भीष्माय शरीरदार्ढ्यादिप्रदानम् ॥ २ ॥ ततः सायं सर्वेषां स्वस्वस्थानगमनम् ॥ ३ ॥

---

वैशम्पायनः—

ततः कृष्णस्य तद्वाक्यं धर्मार्थसहितं हितम् ।
श्रुत्वा शान्तनवः कृष्णं प्रत्युवाच कृताञ्जलिः ॥ १

भीष्मः—

लोकनाथ महाबाहो शिव नारायणाच्युत ।
तव वाक्यमुपश्रुत्य हर्षेणास्मि परिप्लुतः ॥ २

किञ्चाहमभिधास्यामि वाक्पते तव सन्निधौ ।
यदा वचोगतं सर्वं तव वाचि समाहितम् ॥ ३

यद्धि किञ्चित् कृतं लोके कर्तव्यं क्रियते च यत् ।
त्वत्तस्तन्निस्सृतं देव लोको बुद्धिमयो हि ते ॥ ४

कथयेद्देवलोकं यो देवराजसमीपतः ।
धर्मकामार्थमोक्षाणां कोऽर्थं ब्रूयात् तवाग्रतः ॥ ५

शराभिघातव्यथितं मनो मे मधुसूदन ।
गात्राणि चावसीदन्ति न च बुद्धिः प्रसीदति ॥ ६

न च मे प्रतिभा काचिद् अस्ति किञ्चित् प्रभाषितुम् ।
पीड्यमानस्य गोविन्द विषानलसमैश्शरैः ॥ ७

प्रजहाति बलं वै मा प्राणास्सन्त्वरयन्ति च ।
मर्माणि परितप्यन्ते भ्रान्तं चेतस्तथैव च ॥ ८

दौर्बल्यात् सज्जते वाङ्मे स कथं वक्तुमुत्सहे ।
साधु मे त्वं प्रसीदस्व दाशार्हकुलनन्दन ॥ ९

तत् क्षमस्व महाबाहो न ब्रूयां किञ्चिदच्युत ।
त्वत्सन्निधौ च सीदेद्धि वाचस्पतिरपि ब्रुवन् ॥ १०

न दिशस्सम्प्रजानामि नाकाशं न च मेदिनीम् ।
केवलं तव वीर्येण तिष्ठामि मधुसूदन ॥ ११

स्वयमेव भवांस्तस्माद् धर्मराजस्य यद्धितम् ।
तद्ब्रवीत्वाशु सर्वेषाम् आगमानां समागमम् ॥ १२

कथं त्वयि स्थिते कृष्ण शाश्वते लोककर्तरि ।
प्रब्रूयान्मद्विधः कश्चिद् गुरौ शिष्य इव स्थिते ॥ १३

श्रीभगवान्—

उपपन्नमिदं वाक्यं कौरवाणां धुरन्धरे ।
महावीर्ये महासत्त्वे स्थिरे सर्वार्थदर्शिनि ॥ १४

यच्च मामात्थ गाङ्गेय बाणघातरुजं प्रति ।
गृहाणात्र वरं भीष्म मत्प्रसादकृतं विभो ॥ १५

न ते ग्लानिर्न ते मूर्च्छा न तापो न च ते रुजा ।
प्रभविष्यन्ति गाङ्गेय क्षुत्पिपासे न चाप्युत ॥ १६

ज्ञानानि च समग्राणि प्रतिभास्यन्ति तेऽनघ ।
न च ते क्वचिदासक्तिर् बुद्धेः प्रादुर्भविष्यति ॥ १७

सत्त्वस्थं च मनो नित्यं तव भीष्म भविष्यति ।
रजस्तमोभ्यां निर्मुक्तं घनैर्मुक्त इवोडुराट् ॥ १८

यद्यच्च धर्मसंयुक्तम् अर्थयुक्तमथापि च ।
चिन्तयिष्यसि तत्राग्र्या बुद्धिस्तव भविष्यति ॥ १९

इमं च राजशार्दूल भूतग्रामं चतुर्विधम् ।
चक्षुर्दिव्यं समाश्रित्य द्रक्ष्यस्यमितविक्रम ॥ २०

किञ्चाहमभिधास्यामि वाक्पते तव सन्निधौ ।
यदा वचोगतं सर्वं तव वाचि समाहितम् ॥ ३

यद्धि किञ्चित् कृतं लोके कर्तव्यं क्रियते च यत् ।
त्वत्तस्तन्निस्सृतं देव लोको बुद्धिमयो हि ते ॥ ४

कथयेद्देवलोकं यो देवराजसमीपतः ।
धर्मकामार्थमोक्षाणां कोऽर्थं ब्रूयात् तवाग्रतः ॥ ५

शराभिघातव्यथितं मनो मे मधुसूदन ।
गात्राणि चावसीदन्ति न च बुद्धिः प्रसीदति ॥ ६

न च मे प्रतिभा काचिद् अस्ति किञ्चित् प्रभाषितुम् ।
पीड्यमानस्य गोविन्द विषानलसमैश्शरैः ॥ ७

प्रजहाति बलं वै मा प्राणास्सन्त्वरयन्ति च ।
मर्माणि परितप्यन्ते भ्रान्तं चेतस्तथैव च ॥ ८

दौर्बल्यात् सज्जते वाङ्मे स कथं वक्तुमुत्सहे ।
साधु मे त्वं प्रसीदस्व दाशार्हकुलनन्दन ॥ ९

तत् क्षमस्व महाबाहो न ब्रूयां किञ्चिदच्युत ।
त्वत्सन्निधौ च सीदेद्धि वाचस्पतिरपि ब्रुवन् ॥ १०

न दिशस्सम्प्रजानामि नाकाशं न च मेदिनीम् ।
केवलं तव वीर्येण तिष्ठामि मधुसूदन ॥ ११

स्वयमेव भवांस्तस्माद् धर्मराजस्य यद्धितम् ।
तद्ब्रवीत्वाशु सर्वेषाम् आगमानां समागमम् ॥ १२

कथं त्वयि स्थिते कृष्ण शाश्वते लोककर्तरि ।
प्रब्रूयान्मद्विधः कश्चिद् गुरौ शिष्य इव स्थिते ॥ १३

श्रीभगवान्—

उपपन्नमिदं वाक्यं कौरवाणां धुरन्धरे ।
महावीर्ये महासत्त्वे स्थिरे सर्वार्थदर्शिनि ॥ १४

यच्च मामात्थ गाङ्गेय बाणघातरुजं प्रति ।
गृहाणात्र वरं भीष्म मत्प्रसादकृतं विभो ॥ १५

न ते ग्लानिर्न ते मूर्च्छा न तापो न च ते रुजा ।
प्रभविष्यन्ति गाङ्गेय क्षुत्पिपासे न चाप्युत ॥ १६

ज्ञानानि च समग्राणि प्रतिभास्यन्ति तेऽनघ ।
न च ते क्वचिदासक्तिर् बुद्धेः प्रादुर्भविष्यति ॥ १७

सत्त्वस्थं च मनो नित्यं तव भीष्म भविष्यति ।
रजस्तमोभ्यां निर्मुक्तं घनैर्मुक्त इवोडुराट् ॥ १८

यद्यच्च धर्मसंयुक्तम् अर्थयुक्तमथापि च ।
चिन्तयिष्यसि तत्राग्र्या बुद्धिस्तव भविष्यति ॥ १९

इमं च राजशार्दूल भूतग्रामं चतुर्विधम् ।
चक्षुर्दिव्यं समाश्रित्य द्रक्ष्यस्यमितविक्रम ॥ २०

चतुर्विधं प्रजाजालं संयुक्तो ज्ञानचक्षुषा ।
भीष्म द्रक्ष्यसि तत्त्वेन जले मीन इवामले ॥ २१

वैशम्पायनः—

ततस्ते व्याससहितास् सर्वे एव महर्षयः ।
ऋग्यजुस्सामसंयुक्तैर् वचोभिः कृष्णमार्चयन् ॥ २२

ततस्सर्वार्तवं दिव्यं पुष्पवर्षं नभस्स्थलात् ।
पपात यत्र वार्ष्णेयस् सगाङ्गेयस्सपाण्डवः ॥ २३

वादित्राणि च दिव्यानि जगुश्चाप्सरसां गणाः ।
न चाहितमनिष्टं च किञ्चित् तत्र व्यदृश्यत ॥ २४

ववौ शिवस्सुखो वायुस् सर्वगन्धवहश्शुचिः ।
शान्तायां दिशि शान्ताश्च प्रावदन् मृगपक्षिणः ॥ २५

ततो मुहूर्ताद्भगवान् सहस्रांशुर्दिवाकरः ।
दहन् वनमिवैकान्ते प्रतीच्यां प्रत्यदृश्यत ॥ २६

ततो महर्षयस्सर्वे समुत्थाय जनार्दनम् ।
भीष्मं चामन्त्रयाञ्चक्रू राजानं च युधिष्ठिरम् ॥ २७

ततः प्रणाममकरोत् केशवः पाण्डवस्तथा ।
सात्यकिस्सञ्जयश्चैव स च शारद्वतः कृपः ॥ २८

ततस्ते धर्मनिरतास् सम्यक् तैरपि पूजिताः ।
श्वस्समेष्याम इत्युक्त्वा यथेष्टं त्वरिता ययुः ॥ २९

तथैवामन्त्र्य गाङ्गेयं केशवस्ते च पाण्डवाः ।
प्रदक्षिणमुपावृत्य रथानारुरुहुश्शुभान् ॥ ३०

ततो रथैः काञ्चनदन्तकूबरैर्
महीधराभैस्समदैश्च दन्तिभिः ।
हयैस्सुपर्णैरिव चाशुगामिभिः
पदातिभिश्चात्तशरासनादिभिः ॥ ३१

ययौ रथानां पुरतो हि सा चमूस्
तथैव पश्चादतिमात्रकारिणी ।
पुरश्च पश्चाच्च यथा महानदी
पुरर्क्षवन्तं गिरिमेत्य नर्मदा ॥ ३२

ततः पुरस्ताद्भगवान् निशाकरस्
समुत्थितस्तामभिहर्षयंश्चमूम् ।
दिवाकरापीतरसास्तथौषधीः
पुनस्स्वकेनैव गुणेन योजयन् ॥ ३३

ततः पुरं सुरपुरसन्निभद्युति
प्रविश्य ते यदुवरपाण्डवास्तदा ।
यथोचितान् भवनवरान् समाविशन्
क्लमान्विता मृगपतयो गुहा इव ॥ ३४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
॥ ८६ ॥ राजधर्मपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
[अस्मिन्नध्याये ३४ श्लोकाः]

## ॥ अष्टचत्वारिंशोऽध्यायः ॥



अपरेद्युः प्रभाते कृष्णयुधिष्ठिरादिभिर्धर्मश्रवणाय भीष्मसमीपगमनम् ॥



वैशम्पायनः—

ततः प्रविश्य भवनं प्रशिश्ये मधुसूदनः ।
याममात्रावशेषायां यामिन्यां प्रत्यबुध्यत ॥ १

स ध्यानपद्माश्रित्य सर्वज्ञानानि माधवः ।
अवलोक्य ततः पश्चाद् दध्यौ ब्रह्म सनातनम् ॥ २

सूतास्स्तुतिपुराणज्ञा रक्तकण्ठास्सुशिक्षिताः ।
अस्तुवन् विश्वकर्माणं वासुदेवं प्रजापतिम् ॥ ३

पठन्ति पाणिस्वनिनो गाथा गायन्ति गायकाः ।
शङ्खानकमृदङ्गाश्च प्रावाद्यन्त सहस्रशः ॥ ४

वीणापणववेणूनां स्वनश्चापि मनोरमः ।
प्रभास इव विस्तीर्णश् शुश्रुवे तस्य वेश्मनि ॥ ५

ततो युधिष्ठिरस्यापि राज्ञो मङ्गलसंयुताः ।
उच्चेरुर्मधुरा वाचो गीतवादित्रबृंहिताः ॥ ६

तत उत्थाय दाशार्हस् स्नातः प्राञ्जलिरच्युतः ।
जप्त्वा गुह्यं महाबाहुर् अग्नीनाश्रित्य तस्थिवान् ॥ ७

ततस्सहस्रं विप्राणां चतुर्वेदविदां तथा ।
गवां सहस्रेणैकैकं वाचयामास माधवः ॥ ८

मङ्गलालम्भनं कृत्वा आत्मानमवलोक्य च ।
आदर्शे विमले कृष्णस् ततस्सात्यकिमब्रवीत् ॥ ९

श्रीभगवान्—

गच्छ शैनेय जानीहि गत्वा राजनिवेशनम् ।
अपि सज्जो महातेजा भीष्मं द्रष्टुं युधिष्ठिरः ॥ १०

वैशम्पायनः—

ततः कृष्णस्य वचनात् सात्यकिस्त्वरितो ययौ ।
उपगम्य च राजानं युधिष्ठिरमभाषत ॥ ११

सात्यकिः—

युक्तो रथवरो राजन् वासुदेवस्य धीमतः ।
समीपमापगेयस्य प्रयास्यति जनार्दनः ॥ १२

भवत्प्रतीक्षः कृष्णोऽसौ धर्मराज महाद्युते ।
यदत्रानन्तरं कृत्यं तद्भवान् कर्तुमर्हति ॥ १३

युधिष्ठिरः—

युज्यतां मे रथवरः फल्गुनाप्रतिमद्युते ॥ १३॥

न सैनिकैश्च यातव्यं यास्यामो वयमेव हि ।
न च पीडयितव्यो मे भीष्मो धर्मभृतां वरः ॥ १४॥

अतः पुरवराश्चापि निवर्तन्तु धनञ्जय ।
अद्यप्रभृति गाङ्गेयः परं गुह्यं प्रवक्ष्यति ॥ १५॥
अतो नेच्छामि कौन्तेय पृथग्जनसमागमम् ॥ १६

वैशम्पायनः—

[1]स तद्वाक्यमथाज्ञाय कुन्तीपुत्रो धनञ्जयः ।
युक्तं रथवरं तस्मा आचचक्षे नरर्षभः ॥ १७
ततो युधिष्ठिरो राजा यमौ भीमार्जुनावपि ।
भूतानीव समस्तानि ययुः कृष्णनिवेशनम् ॥ १८
आगच्छत्स्वथ कृष्णोऽपि पाण्डवेषु महात्मसु ।
शैनेयसहितो धीमान् रथमेवान्वपद्यत ॥ १९
रथस्थास्संविदं कृत्वा सुखां पृष्ट्वा च शर्वरीम् ।
मेघघोषै रथवरैः प्रययुस्ते महारथाः ॥ २०
मेघपुष्पं वलाहं च सैन्यं सुग्रीवमेव च ।
दारुकश्चोदयामास वासुदेवस्य वाजिनः ॥ २१
ते हया वासुदेवस्य दारुकेण प्रचोदिताः ।
गां खुराग्रैस्तथा राजँल्लिखन्तः प्रययुस्तदा ॥ २२
ते ग्रसन्त इवाकाशं वेगवन्तो महाबलाः ।
क्षेत्रं धर्मस्य कृत्स्नस्य कुरुक्षेत्रमवातरन् ॥ २३

1. क-ख-घ—तद्वाक्यमाज्ञाय ततः

ततो ययुर्यत्र भीष्मश् शरतल्पगतः प्रभुः ।
आस्ते ब्रह्मर्षिभिस्सार्धं ब्रह्मा देवगणैर्यथा ॥ २४॥

ततोऽवतीर्य गोविन्दो रथात् स च युधिष्ठिरः ।
भीमो गाण्डीवधन्वा च यमौ सात्यकिरेव च ॥ २५॥

ऋषीनभ्यर्चयन्ति स्म करानुद्यम्य दक्षिणान् ॥ २६

स तैः परिवृतो राजा नक्षत्रैरिव चन्द्रमाः ।
अभ्याजगाम गाङ्गेयं ब्रह्माणमिव वासवः ॥ २७

शरतल्पे शयानं तम् आदित्यं पतितं यथा ।
ददर्श स महाबाहुं भयादागतसाध्वसः ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
॥ ८६ ॥ राजधर्मपर्वणि नवमोऽध्यायः ॥ ९ ॥
[अस्मिन्नध्याये २८ श्लोकाः]

---

## ॥ एकोनपञ्चाशोऽध्यायः ॥

कृष्णेन भीष्मं प्रति धर्मकथनचोदना ॥

जनमेजयः—

धर्मात्मनि महासत्त्वे सत्यसन्धे जितात्मनि ।
देवव्रते महाभागे शरतल्पगते प्रभौ ॥ १

शयाने वीरशयने भीष्मे शन्तनुनन्दने ।
गाङ्गेये पुरुषव्याघ्रे पाण्डवैः पर्युपासिते ॥ २

काः कथास्समवर्तन्त तस्मिन् वीरसमागमे ।
हतेषु सर्वसैन्येषु शंस तन्मे महामुने ॥ ३

वैशम्पायनः—

शरतल्पगते भीष्मे कौरवाणां पितामहे ।
आजग्मुर्ऋषयस्सिद्धा नारदप्रमुखा नृप ॥ ४

हतशिष्टाश्च राजानो युधिष्ठिरपुरोगमाः ।
धृतराष्ट्रश्च कृष्णश्च भीमार्जुनयमास्तथा ॥ ५

तेऽभिगम्य महात्मानं भारतानां पितामहम् ।
अन्वशोचन्त गाङ्गेयम् आदित्यं पतितं यथा ॥ ६

मुहूर्तमिव च ध्यात्वा नारदो देवदर्शनः ।
उवाच पाण्डवान् सर्वान् हतशिष्टांश्च पार्थिवान् ॥ ७

नारदः—

[1]आचष्टे प्राप्तकालं च भीष्मोऽयमनुयुज्यताम् ।
अस्तमेति च गाङ्गेयो भानुमानिव भारत ॥ ८

अयं प्राणानुत्सिसृक्षुस् तं सर्वमनुपृच्छत ।
कृत्स्नान् हि विविधान् धर्मांश् चातुर्वर्ण्यस्य वेत्त्ययम् ॥ ९

एष वृद्धः पराँल्लोकान् सम्प्राप्नोति तनुत्यजाम् ।
तत् क्षिप्रमनुयुञ्जीध्वं संशयान् मनसि स्थितान् ॥ १०

वैशम्पायनः—

एवमुक्ता नारदेन भीष्ममीयुर्नराधिपाः ।
प्रष्टुं चाशक्नुवन्तस्ते वीक्षाञ्चक्रुः परस्परम् ॥ ११

अथोवाच हृषीकेशं धर्मपुत्रो युधिष्ठिरः ॥ ११॥

युधिष्ठिरः—

नान्यस्त्वद्देवकीपुत्र शक्तः प्रष्टुं पितामहम् ।
प्रव्याहर यदुश्रेष्ठ त्वमग्रे मधुसूदन ॥ १२॥

त्वं हि नस्तात सर्वेषां सर्वधर्मविदुत्तमः ॥ १३

वैशम्पायनः—

एवमुक्तः पाण्डवेन भगवान् केशवस्तदा ।
अभिगम्य दुराधर्षं प्रत्याहारयदच्युतः ॥ १४

श्रीभगवान्—

कच्चित् सुखेन रजनी व्युष्टा ते राजसत्तम ।

---

1. क–ख—आचक्षे

विस्पष्टलक्षणा बुद्धिः कच्चिच्चोपस्थिता तव ॥ १५
कच्चिज्ज्ञानानि सर्वाणि प्रतिभान्ति च तेऽनघ ।
न ग्लायते च हृदयं न च ते व्याकुलं मनः ॥ १६

भीष्मः—

दाहो मोहश्श्रमश्चैव क्लमो ग्लानिस्तथा रुजा ।
तव प्रसादाद्वार्ष्णेय सद्यो व्यपगतानि मे ॥ १७

यच्च भूतं भविष्यच्च भवच्च परमद्युते ।
तत् सर्वमनुपश्यामि पाणौ फलमिवाहितम् ॥ १८

वेदोक्ताश्चैव ये धर्मा वेदान्तनियताश्च ये ।
तान् सर्वान् सम्प्रपश्यामि वरदानात् तवाच्युत ॥ १९

शिष्टैश्च धर्मो यः प्रोक्तस् स च मे हृदि वर्तते ।
देशजातिकुलानां च धर्मज्ञोऽस्मि जनार्दन ॥ २०

चतुर्ष्वाश्रमधर्मेषु योऽर्थस्स च हृदि स्थितः ।
राजधर्मांश्च सकलान् अवगच्छामि केशव ॥ २१

यच्च यत्र च वक्तव्यं तद्वक्ष्यामि जनार्दन ।
तव प्रसादाद्धि शुभा मनो मे बुद्धिराविशत् ॥ २२

त्वामेव चास्मि संवृत्तस् त्वदनुध्यानबृंहितः ।
वक्तुं श्रेयस्समर्थोऽस्मि त्वत्प्रसादाज्जनार्दन ॥ २३

स्वयं किमर्थं तु भवाञ् श्रेयो न प्राह पाण्डवान् ।

किं ते विवक्षितं चात्र तदाशु वद माधव ॥ २४

श्रीभगवान्—

यशसश्श्रेयसश्चैव मूलं मां विद्धि कौरव ।
मत्तस्सर्वे हि निर्वृत्ता भावास्सदसदात्मकाः ॥ २५

शीतांशुश्चन्द्र इत्युक्ते तेन को विस्मयिष्यति ।
तथैव यशसा पूर्णे मयि को विस्मयिष्यति ॥ २६

प्रथेयं तु मया भूयो यशस्तव महाद्युते ।
ततो मे विपुला बुद्धिस् त्वयि भीष्म समाहिता ॥ २७

यावद्धि पृथिवीपाल पृथिवी स्थास्यति ध्रुवा ।
तावत्तवाक्षया कीर्तिर् लोकाननुचरिष्यति ॥ २८

यच्च त्वं वक्ष्यसे भीष्म पाण्डवायानुपृच्छते ।
वेदप्रवादा इव ते स्थास्यन्ति पृथिवीतले ॥ २९

यश्चैतेन प्रमाणेन योक्ष्यत्यात्मानमात्मना ।
स फलं सर्वपुण्यानां प्रेत्य चानुभविष्यति ॥ ३०

एतस्मात् कारणाद्भीष्म मतिर्दिव्या मया हि ते ।
दत्ता यशो विप्रथेत कथं भूय इति प्रभो ॥ ३१

यावद्धि प्रथते लोके पुरुषस्य यशो भुवि ।
तावत्तस्याक्षया कीर्तिर् भवतीति विनिश्चितम् ॥ ३२

राजानो हतशिष्टास्त्वां राजन्नभित आसते ।

स्वधर्माननुयुङ्क्षन्तस् तेभ्यः प्रब्रूहि भारत ॥ ३३

भवान् हि च वयोवृद्धश् श्रुताचारसमन्वितः ।
कुशलो राजधर्माणां पूर्वेषामपरे च ये ॥ ३४

जन्मप्रभृति ते किञ्चिद् वृजिनं न ददर्श ह ।
ज्ञातारं मनुधर्माणां त्वां विदुस्सर्वपार्थिवाः ॥ ३५

तेभ्यः पितेव पुत्रेभ्यो राजन् ब्रूहि परन्तप ।
ऋषयश्च हि देवाश्च त्वया नित्यमुपासिताः ॥ ३६

तस्माद्वक्तव्यमेवेह त्वया पश्याम्यशेषतः ।
धर्मं शुश्रूषमाणेभ्यः पृष्टेन च सता पुनः ॥ ३७

वक्तव्यं विदुषा नित्यं धर्ममाहुर्मनीषिणः ।
अप्रतिब्रुवतः कष्टो दोषो हि भविता प्रभो ॥ ३८

तस्मात् पुत्रैश्च पौत्रैश्च धर्मान् पृष्टान् सनातनान् ।
विद्वञ् जिज्ञासमानेभ्यः प्रब्रूहि भरतर्षभ ॥ ३९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९॥
॥ ८६ ॥ राजधर्मपर्वणि दशमोऽध्यायः ॥ १० ॥
[ अस्मिन्नध्याये ३९ श्लोकाः ]

## ॥ पञ्चाशोऽध्यायः ॥



कृष्णेन भीष्मं प्रति युधिष्ठिरस्य तदनुपसर्पणकारणाभिधानम् १ ॥ भीष्मेण स्वाज्ञयोपसृत्याभिवादयन्तं युधिष्ठिरं प्रति धर्मप्रश्नानुज्ञानम् ॥२॥

---

**वैशम्पायनः—**

अथाब्रवीन्महातेजा वाक्यं कौरवनन्दनः ॥ ॥

**भीष्मः—**

हन्त धर्मान् प्रवक्ष्यामि दृढे वाङ्मनसे मम ।
तव प्रसादाद्गोविन्द भूतात्मा ह्यसि शाश्वतः ॥ १॥

युधिष्ठिरस्तु मां राजा धर्मान् समनुपृच्छतु ।
एवं प्रीतो भविष्यामि धर्मान् वक्ष्यामि चाखिलान् ॥ २॥

यस्मिन् राजर्षभे जाते धर्मात्मनि महात्मनि ।
अहृष्यन्नृषयस्सर्वे स मां पृच्छतु पाण्डवः ॥ ३॥

[1]सर्वेषां दीप्तयशसां कुरूणां धर्मचारिणाम् ।
यस्य नास्ति समः कश्चित् स मां पृच्छतु पाण्डवः ॥ ४॥

[2]धृतिर्दमो ब्रह्मचर्यं क्षमा धर्मश्च नित्यदा ।
यस्मिन्नोजश्च तेजश्च स मां पृच्छतु पाण्डवः ॥ ५॥

सत्यं दानं तपश्शौचं शान्तिर्दाक्ष्यमसम्भ्रमः ।
यस्मिन्नेतानि सर्वाणि स मां पृच्छतु पाण्डवः ॥ ६॥

---

1. घ—अर्धद्वयं नास्ति　　2. अ-क-ब—अर्धद्वयं नास्ति

यो न कामान्न संरम्भान्न भयान्नार्थकारणात् ।
कुर्यादधर्मं धर्मात्मा स मां पृच्छतु पाण्डवः ॥ ७॥

सम्बन्धिनोऽतिथीन् भृत्यान् संश्रितोपाश्रितांश्च यः ।
सम्मानयति सत्कृत्य स मां पृच्छतु पाण्डवः ॥ ८॥

सत्यनित्यः क्षमानित्यो ज्ञाननित्योऽतिथिप्रियः ।
यो ददाति सतां नित्यं स मां पृच्छतु पाण्डवः ॥ ९॥

[1]इज्याध्ययननित्यश्च धर्मे च निरतस्सदा ।
शान्तश्श्रुतरहस्यश्च स मां पृच्छतु माधव ॥ १०॥

श्रीभगवान्—

लोकस्य कदनं कृत्वा लोकनाथश्च पाण्डवः ।
अभिशापभयाद्भीतो भवन्तं नोपसर्पति ॥ ११॥

पूज्यमानांश्च भक्तांश्च गुरून् सम्बन्धिबान्धवान् ।
अर्घ्यार्हानिषुभिर्हत्वा भवन्तं नोपसर्पति ॥ १२॥

भीष्मः—

ब्राह्मणानां यथा धर्मो दानमध्ययनं तपः ।
क्षत्रियाणां तथा कृष्ण समरे देहपातनम् ॥ १३॥

पितृन् पितामहान् पुत्रान् गुरून् सम्बन्धिबान्धवान् ।
मिथ्याप्रवृत्तान् यस्सङ्ख्ये निहन्याद्धर्म एव सः ॥ १४॥

---

1. घ—सर्वेषां दीप्तयशसां कुरूणां धर्मचारिणाम् ।
यस्य नास्ति समः कश्चित् स मां पृच्छतु पाण्डवः॥ [अधिकः पाठः]

समयत्यागिनो लुब्धान् गुरूनपि च केशव ।
निहन्ति समरे पापान् क्षत्रियो यस्स धर्मवित् ॥ १५॥
[1]ये लोभान्न समीक्षेरन् धर्मसेतुं सनातनम् ।
निहन्ति यस्तान् समरे क्षत्रियस्स च धर्मवित् ॥ १६॥
[2]लोहितोदां केशतृणां गजशैलां ध्वजद्रुमाम् ।
महीं करोति युद्धेषु क्षत्रियो यस्स धर्मवित् ॥ १७॥
आहूतेन रणे नित्यं योद्धव्यं क्षत्रबन्धुना ।
धर्म्यं स्वर्ग्यं च लोक्यं च युद्धं हि मनुरब्रवीत् ॥ १८॥

वैशम्पायनः—

एवमुक्तस्तु भीष्मेण धर्मराजो युधिष्ठिरः ।
विनीतवदुपागम्य तस्थौ सन्दर्शनेऽग्रतः ॥ १९॥
अथास्य पादौ जग्राह भीष्मश्चापि ननन्द तम् ।
मूर्ध्नि चैनमुपाघ्राय निषीदेत्यब्रवीत् तदा ॥ २०॥
तमुवाचाथ गाङ्गेयो वृषभस्सर्वधन्विनाम् ।

भीष्मः—

पृच्छ मां तात विस्रब्धो मा भैस्त्वं कुरुसत्तम ॥ २१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥
॥ ८६ ॥ राजधर्मपर्वणि एकादशोऽध्यायः ॥ ११ ॥
[ अस्मिन्नध्याये २१॥ श्लोकाः ]

---

1. ख—अर्धद्वयं नास्ति
2. अ-क-घ—अर्धद्वयं नास्ति

## ॥ एकपञ्चाशोऽध्यायः ॥



भीष्मेण युधिष्ठिराय राजधर्मकथनम् ॥

वैशम्पायनः—

प्रणिपत्य हृषीकेशम् अभिवाद्य पितामहम् ।
अनुमान्य गुरून् सर्वान् पर्यपृच्छद्युधिष्ठिरः ॥ १

युधिष्ठिरः—

राजा वै परमो धर्म इति धर्मविदो विदुः ।
महान्तमेतं भारं हि मन्ये तद्ब्रूहि भारत ॥ २

राजधर्मान् विशेषेण कथयस्व पितामह ।
सर्वस्य जीवलोकस्य राजधर्मः परायणम् ॥ ३

त्रिवर्गो हि समासक्तो राजधर्मेषु कौरव ।
मोक्षधर्मश्च विस्पष्टस् सकलोऽत्र समाहितः ॥ ४

यथा हि रश्मयोऽश्वस्य द्विरदस्याङ्कुशो यथा ।
नरेन्द्रधर्मो लोकस्य तथा प्रग्रहणं स्मृतम् ॥ ५

अत्र वै सम्प्रमूढे तु धर्मे राजर्षिसेविते ।
[1]त्रैलोक्यसंस्था न भवेत् सर्वं च व्याकुलीभवेत् ॥ ६

उदयन् हि यथा सूर्यो नाशयत्यखिलं तमः ।
राजधर्मस्तथा लोक्याम् आक्षिपत्यशुभां मतिम् ॥ ७

1. अ—लोकस्य संस्था

तदग्रे राजधर्माणाम् अर्थतत्त्वं पितामह ।
प्रब्रूहि भरतश्रेष्ठ त्वं हि बुद्धिमतां वरः ॥ ८

आगमश्च परस्त्वत्तस् सर्वेषां नः परन्तप ।
भवन्तं हि परं बुद्धौ वासुदेवोऽनुमन्यते ॥ ९

भीष्मः—

नमो धर्माय महते नमः कृष्णाय वेधसे ।
ब्राह्मणेभ्यो नमस्कृत्य धर्मान् वक्ष्यामि शाश्वतान् ॥ १०

शृणु कात्स्न्येन मत्तस्त्वं राजधर्मान् युधिष्ठिर ।
निरुच्यमानान् नियतान् यच्चान्यदपि वाञ्छसि ॥ ११

आदावेव कुरुश्रेष्ठ राज्ञा रञ्जनमिच्छता ।
देवतानां द्विजानां च वर्तितव्यं यथाविधि ॥ १२

दैवतान्यर्चयित्वा हि ब्राह्मणांश्च कुरूद्वह ।
आनृण्यं याति धर्मस्य लोकेन च समर्च्यते ॥ १३

[1]उत्थाने च सदा पुत्र प्रयतेथा युधिष्ठिर ।
न ह्युत्थानादृते दैवं राज्ञामर्थप्रसिद्धये ॥ १४

साधारणं द्वयं ह्येतद् दैवमुत्थानमेव च ।
पौरुषं हि परं मन्ये दैवं निश्चित्य मुह्यते ॥ १५

विपन्ने च समारम्भे सन्तापं मा स्म वै कृथाः ।

1. अ—नास्तीदमर्धम्

घटेतैवं सदा तात राज्ञामेष परो नयः ॥ १६

न हि राज्यादृते किञ्चिद् राज्ञां वै सिद्धिकारकम् ।
सत्ये हि राजा निरतः प्रेत्य चेह च नन्दति ॥ १७

ऋषीणामपि राजेन्द्र सत्यमेव [1]पराक्रमः ।
तथा राज्ञः परं सत्यान्नान्यदाश्वासकारकम् ॥ १८

गुणवाञ् शीलवान् दान्तो मृदुदण्डो जितेन्द्रियः ।
सुदर्शस्स्थूललक्ष्यश्च न भ्रश्येत सदा श्रियः ॥ १९

आर्जवं सर्वकार्येषु श्रयेथाः कुरुनन्दन ।
आर्जवेन सदा युक्ता मोदन्ते ऋषयो दिवि ॥ २०

पुनर्नयविचारेण त्रयीसंवरणेन च ॥ २०॥

मृदुर्हि राजा सततं लङ्घ्यो भवति सर्वतः ।
तीक्ष्णाच्चोद्विजते लोकस् तस्मादुभयमाचरेत् ॥ २१॥

अदण्ड्याश्चैव ते नित्यं विप्रास्स्युर्ददतां वर ।
भूतमेतत् परं लोके ब्राह्मणा नाम पाण्डव ॥ २२॥

मनुना चात्र राजेन्द्र गीतौ श्लोकौ महात्मना ।
धर्मेषु स्वेषु कौरव्य हृदि तौ कर्तुमर्हसि ॥ २३॥

अद्भ्योऽग्निर्ब्रह्मतः क्षत्रम् अश्मनो लोहमुत्थितम् ।
तेषां सर्वगतं तेजस् स्वासु योनिषु शाम्यति ॥ २४॥

1. क्ष-च—परं धनम्

अयो हन्ति यदाऽश्मानम् अग्निरापो निहन्ति च ।
ब्रह्म च क्षत्रियो द्वेष्टि तदा सीदन्ति ते त्रयः ॥ २५॥

एवं कृत्वा महाराज नमस्या एव ते द्विजाः ।
भौमं ब्रह्म द्विजश्रेष्ठा धारयन्ति शमान्विताः ॥ २६॥

एवं चैव महाराज लोकयात्राविघातकाः ।
निग्राह्या एव बाहुभ्यां ब्राह्मणास्ते नरेश्वर ॥ २७॥

श्लोकाश्चोशनसा गीताः पुरा तात महर्षिणा ।
तान् निबोध महाराज त्वमेकाग्रमना नृप ॥ २८॥

उद्यम्य शस्त्रमायान्तम् अपि वेदान्तगं रणे ।
निगृह्णीयात् स्वधर्मेण धर्मापेक्षी नराधिपः ॥ २९॥

विनश्यमानं धर्मं हि यो रक्षति स धर्मवित् ।
न तेन भ्रूणहा स स्यान्मन्युस्तन्मन्युमृच्छति ॥ ३०॥

एवं चैव नरश्रेष्ठ रक्ष्या एव द्विजातयः ।
स्वापराद्धानपि हि तान् विषयान्ते समुत्सृजेत् ॥ ३१॥

अभिशस्तमपि ह्येषां पीडयेन्न विशां पते ।
ब्रह्मघ्ने गुरुतल्पे च भ्रूणहे च तथैव च ॥ ३२॥

राजद्विष्टस्य विप्रस्य विषयान्ते विवासनम् ।
विधीयते न शारीरं भयमेषां कथञ्चन ॥ ३३॥

विहिताश्च नरास्ते स्युर् भक्तिमन्तो द्विजेषु ये ।
न शोकः परमा तुष्टी राज्ञां भवति सञ्चयात् ॥ ३४॥

दुर्गेषु च महाराज षट्सु ये शास्त्रनिश्चिताः ।
सर्वदुर्गेषु मन्यन्ते नरदुर्गं सुदुर्गमम् ॥ ३५॥

तस्मान्नित्यं दया कार्या चातुर्वर्ण्ये विपश्चिता ।
धर्मात्मा सत्यवाक् चैव राजा रञ्जयति प्रजाः ॥ ३६॥

न च क्षान्तेन ते भाव्यं नित्यं पुरुषसत्तम ।
सुधर्षो हि मृदू राजा क्षमावानिव कुञ्जरः ॥ ३७॥

बार्हस्पत्ये च शास्त्रे च श्लोकोऽयं निहितः प्रभो ।
अस्मिन्नर्थे निगदितस् तन्मे निगदतश्शृणु ॥ ३८॥

क्षममाणं नृपं नित्यं नीचः परिभवेज्जनः ।
हस्तियन्ता गजस्येव शिर एवारुरुक्षति ॥ ३९॥

तस्मान्नैव मृदुर्नित्यं तीक्ष्णो वाऽपि भवेन्नृपः ।
वसन्तेऽर्क इव श्रीमान् न शीतो न च घर्मदः ॥ ४०॥

प्रत्यक्षेणानुमानेन तथौपम्यागमैरपि ।
परीक्ष्यास्ते महाराज स्वे परे चैव सर्वदा ॥ ४१॥

व्यसनानि च सर्वाणि त्यजेथा भूरिदक्षिण ।
न चैवानि प्रयुञ्जीथास् सङ्गं तु परिवर्जय ॥ ४२॥

व्यसनी हि नृलोकेऽस्मिन् परिभूतो भवत्युत ।
उद्वेजयति लोकं [1]च योऽतिद्वेषी महीपतिः ॥ ४३॥

भवितव्यं सदा राज्ञा गर्भिणीसहधर्मिणा ।
कारणं च महाराज श्रृणु येनेदमुच्यते ॥ ४४॥

यथा हि गर्भिणी हित्वा स्वं प्रियं मनसोऽनुगम् ।
गर्भस्य हितमाधत्ते तथा राज्ञाऽप्यसंशयम् ॥ ४५॥

वर्तितव्यं कुरुश्रेष्ठ नित्यं धर्मानुवर्तिना ।
स्वं प्रियं समभित्यज्य यद्यल्लोकहितं भवेत् ॥ ४६॥

न तस्य त्यज्यते धैर्यं कदाचिदपि पाण्डव ।
धीरस्य स्पष्टदण्डस्य न ह्याज्ञा प्रतिहन्यते ॥ ४७॥

परिहासश्च भृत्यैस्ते न नित्यं वदतां वर ।
कर्तव्यो राजशार्दूल दोषमत्र हि मे श्रृणु ॥ ४८॥

अवमन्यन्ति भर्तारं सहर्षमुपजीविनः ।
स्वे स्थाने नावतिष्ठन्ते लङ्घयन्ति च तद्वचः ॥ ४९॥

प्रेष्यमाणा विकल्पन्ते गुह्यं चाप्यनुयुञ्जते ।
अयाच्यं चैव याचन्ते भोज्यान्याहारयन्ति च ॥ ५०॥

क्रुध्यन्ति च प्रदीप्यन्ति अधितिष्ठन्ति भूमिपम् ।

---

1. क-ख-घ—चाप्यति

उत्कोचैर्वञ्चनाभिश्च कार्याणि घ्नन्ति चास्य ते ॥ ५१॥

जर्झरं चास्य विषयं कुर्वन्ति प्रतिरूपकैः ।
स्त्रीरक्षिभिः प्रसज्जन्ते तुल्यवेषा भवन्ति च ॥ ५२॥

वातनं ष्ठीवनं चैव कुर्वते चास्य सन्निधौ ।
निर्लज्जं राजशार्दूल व्याहरन्ति च दुर्वचः ॥ ५३॥

दन्तिनं वा हयं चापि रथं वा नृपसम्मतम् ।
अधिरोहन्त्यवज्ञाय सहर्षाः पार्थिवे मृदौ ॥ ५४॥

इदं ते दुष्कृतं राजन्निदं ते [1]दुर्विचेष्टितम् ।
इत्येवं सुहृदो नाम ब्रुवते परिषद्गताः ॥ ५५॥

क्रुद्धे चास्मिन् हसन्त्येव न च हृष्यन्ति पूजिताः ।
सङ्घर्षशीलाश्च तदा भवन्त्यन्योन्यकारणात् ॥ ५६॥

विस्रंसयन्ति मन्त्रं च विवृण्वन्ति च दुष्कृतम् ।
हेलयन्तश्च कुर्वन्ति सावज्ञास्तस्य शासनम् ॥ ५७॥

अलङ्काराणि भोज्यं च तथा स्नानानुलेपने ।
हेलयाना नरव्याघ्र स्वस्थास्तस्योपशृण्वते ॥ ? ५८॥

निन्दन्तस्स्वानधीकारान् सन्त्यजन्त्येव भारत ।
न वृत्त्या परितुष्यन्ति राजदेयं हरन्ति च ॥ ५९॥

---

1. ब—दुष्टचेष्टितम्

*क्रीडितुं तेन चेच्छन्ति ससूत्रेणेव पक्षिणा ।
अस्मत् प्रणेयो राजेति लोके चैव वदन्त्युत ॥ ६०॥

नृपतौ मार्दवोपेते हर्षुले च युधिष्ठिर ।
एते चैवापरे चैव दोषाः प्रादुर्भवन्ति च ॥* ६१॥

नित्योद्युक्तेन वै राज्ञा भवितव्यं युधिष्ठिर ।
न प्रशस्यस्तु राजा हि नारीवोद्यमवर्जितः ॥ ६२॥

भगवानुशना चाह श्लोकमत्र विशां पते ।
तदिहैकमना राजन् वदतस्तं निबोध मे ॥ ६३॥

द्वावेव ग्रसते भूमिस् सर्पौ बिलशयाविव ।
राजानं चाप्ययोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ ६४॥

तदेतन्नरशार्दूल हृदि त्वं कर्तुमर्हसि ।
सन्धेयानभिसन्धत्स्व विरोध्यांश्च विरोधय ॥ ६५॥

सप्ताङ्गे यश्च ते राज्ये विपरीतं समाचरेत् ।
गुरुर्वा यदि वा मित्रं प्रतिहन्तव्य एव सः ॥ ६६॥

मरुत्तेन हि राज्ञाऽऽसीद् गीतश्श्लोकः पुरातनः ।
राज्याधिकारे राजेन्द्र बृहस्पतिमतः पुरा ॥ ६७॥

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।

---

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

उत्पथं प्रतिपन्नस्य परित्यागो विधीयते ॥ ६८॥

बाहोः पुत्रेण राजेन्द्र सगरेण च धीमता ।
असमञ्जस्सुतो ज्येष्ठस् त्यक्तः पौरहितैषिणा ॥ ६९॥

असमञ्जस्सरय्वां वै पौराणां बालकान् नृप ।
न्यमज्जयदतः पुत्रो निर्भर्त्स्य स विवासितः ॥ ७०॥

ऋषिणोद्दालकेनापि श्वेतकेतुर्महातपाः ।
मिथ्या विप्रानुपचरन् सन्त्यक्तो दयितस्सुतः ॥ ७१॥

लोकरञ्जनमेवात्र राज्ञो धर्मस्सनातनः ।
सत्यस्य रक्षणं चैव व्यवहारस्य चार्जवम् ॥ ७२॥

न हिंस्यात् परवित्तानि देयं काले च दापयेत् ।
विक्रान्तस्सत्यवाक् क्षान्तो नृपो न चलते पथः ॥ ७३॥

गुप्तमन्त्रो जितक्रोधश् शास्त्रार्थकृतनिश्चयः ।
धर्मे चार्थे च कामे च मोक्षे च सततं रतः ॥ ७४॥

त्रय्या संवृतमन्त्रश्च राजा भवितुमर्हति ।
वृजिनस्य नरेन्द्राणां नान्यत् संवरणात् परम् ॥ ७५॥

चातुर्वर्ण्यंच धर्माश्च रक्षितव्या महीक्षिता ।
धर्मसङ्कररक्षा हि राज्ञां धर्मस्सनातनः ॥ ७६॥

न विश्वसेच्च नृपतिर् न चात्यर्थं [1]न विश्वसेत् ।

1. अ—च

षाड्गुण्यगुणदोषांश्च नित्यं बुद्ध्याऽवलोकयेत् ॥ ७७॥

अच्छिद्रदर्शी नृपतिर् नित्यमेव प्रशस्यते ।
त्रिवर्गे विदितार्थश्च युक्ताचारपथश्च यः ॥ ७८॥

कोशस्योपार्जनरतिर् यमवैश्रवणोपमः ।
वेत्ता च दशवर्गस्य स्थानवृद्धिक्षयात्मनः ॥ ७९॥

अभृतानां भवेद्भर्ता भृतानां चैव रक्षकः ।
नृपतिस्सुमुखो नित्यं स्मितपूर्वाभिभाषिता ॥ ८०॥

उपासिता च वृद्धानां जिततन्द्रिरलोलुपः ।
सतां वृत्ते स्थितमतिस् सतां ह्याचारदर्शनः ॥ ८१॥

न चाददीत वित्तानि सतां हस्तात् कथञ्चन ।
असद्भ्यस्तु समादाय सद्भ्यस्सम्प्रतिपादयेत् ॥ ८२॥

स्वयं हर्ता च दाता च वश्यात्मा वश्यसाधनः ।
काले दाता च भोक्ता च शुद्धाचारस्तथैव च ॥ ८३॥

शूरान् भक्तानसंहार्यान् कुले जातानरोगिणः ।
शिष्टाञ्शिष्टानुसम्बन्धान् मानिनो जनमानिनः ॥ ८४॥

विद्याविदो लोकविदः परलोकान्ववेक्षकान् ।
धर्मे च निरतान् साधून् अचलानचलानिव ॥ ८५॥

सहायान् सततं कुर्याद् राजा भूरिपुरस्कृतान् ॥ ८६

तैस्तु तुल्यो भवेद्भोगैश् छत्रमात्राज्ञयाऽधिकः ।
प्रत्यक्षा च परोक्षा च वृत्तिश्चास्य सदा भवेत् ॥ ८७

एवं कुर्वन् नरेन्द्रो हि न खेदमिह विन्दति ॥ ८७॥

सर्वातिशङ्की नृपतिर् यश्च सर्वहरो भवेत् ।
स क्षिप्रमनृजुर्लुब्धस् स्वजनेनैव बाध्यते ॥ ८८॥

विशुद्धः पृथिवीपालो लोकस्यानुग्रहे रतः ।
न पतत्यरिभिर्ग्रस्तः पतितश्चाधितिष्ठति ॥ ८९॥

अक्रोधनोऽथाव्यसनी मृदुदण्डो जितेन्द्रियः ।
राजा भवति भूतानां विश्वास्यो हिमवानिव ॥ ९०॥

प्राज्ञो न्यायगुणोपेतः पररन्ध्रेषु लालसः ।
सुदर्शस्सर्ववर्णानां नयापनयवित् तथा ॥ ९१॥

क्षिप्रकारी जितक्रोधस् सुप्रसादो महामनाः ।
अरोगप्रकृतिर्युक्तः क्रियावानविकत्थनः ॥ ९२॥

आरब्धान्येव कार्याणि न पर्यवसितान्यपि ।
यस्य राज्ञः प्रदृश्यन्ते स राजा राजसत्तमः ॥ ९३॥

पुत्रा इव पितुर्गेहे विषये यस्य मानवाः ।
निर्भया विचरिष्यन्ति स राजा राजसत्तमः ॥ ९४॥

अगूढविभवा यस्य नरा राष्ट्रनिवासिनः ।

नयापनयवेत्ता यस् स राजा राजसत्तमः ॥ ९५॥

स्वधर्मनिरता यस्य जना विषयवासिनः ।
असङ्घातरता दान्ताः पाल्यमाना यथाविधि ॥ ९६॥

वश्या नेया विनीताश्च न च सङ्घर्षशीलिनः ।
विषये दानरुचयो नरा यस्य स पार्थिवः ॥ ९७॥

न यस्य कूटप्रशमो न माया न च मत्सरः ।
विषये भूमिपालस्य तस्य धर्मस्सनातनः ॥ ९८॥

यस्सत्करोति ज्ञानानि श्रेयान् पौरहिते रतः ।
सतां वर्त्मानुगस्त्यागी स राजा स्वर्गमर्हति ॥ ९९॥

यस्य चारश्च मन्त्रश्च नित्यं चैव कृताकृतौ ।
न ज्ञायेते च रिपुभिस् स राजा राज्यमर्हति ॥ १००॥

श्लोकद्वयं पुरा गीतं भार्गवेण महात्मना ।
आख्याते राजचरिते राजानं प्रति भारत ॥ १०१॥

राजानं प्रथमं विन्देत् ततो भार्यां ततो धनम् ।
राजन्यसति लोकेऽस्मिन् कुतो भार्या कुतो धनम् ॥ १०२॥

तद्राजन् राजसिंहानां नान्यो धर्मस्सनातनः ।
ऋते रक्षां सुविस्पष्टां रक्षा लोकस्य धारणम् ॥ १०३॥

प्राचेतसेन मनुना श्लोकौ चैतावुदाहृतौ ।

राजधर्मेषु राजेन्द्र ताविहैकमनाश्शृणु ॥ १०४॥

षडिमान् पुरुषो जह्याद् भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यम् अनधीयानमृत्विजम् ॥ १०५॥

अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥ १०६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥
॥ ८६ ॥ राजधर्मपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
[अस्मिन्नध्याये १०६॥ श्लोकाः]

---

## ॥ द्विपञ्चाशोऽध्यायः ॥

---

भीष्मेण युधिष्ठिराय प्रथमदिने राजधर्मकथनम् ॥ १ ॥ ततः सायं कृष्णादीनां स्वस्वावासगमनम् ॥ २ ॥

---

वैशम्पायनः—

[1]एतावदुक्त्वा भूयोऽपि भीष्मः कुरुपितामहः ।
उवाच वचनं धीमान् सर्वतस्सारसङ्ग्रहम् ॥ १

भीष्मः—

एतत्ते राजधर्माणां नवनीतं युधिष्ठिर ।
बृहस्पतिर्हि भगवान् नान्यं धर्मं प्रशंसति ॥ २

1. ख—अर्धद्वयं नास्ति

विशालाक्षश्च भगवान् काव्यश्चैव महातपाः ।
सहस्राक्षो महेन्द्रश्च तथा प्राचेतसो मनुः ॥ ३

भरद्वाजश्च भगवांस् तथा गौरशिरा मुनिः ।
राजशास्त्रप्रणेतारो ब्राह्मणा ब्रह्मवादिनः ॥ ४

रक्षामेव प्रशंसन्ति धर्मं धर्मभृतां वर ।
राज्ञां राजीवताम्राक्ष साधनं चात्र मे शृणु ॥ ५

चारश्च प्रणिधिश्चैव काले दानममत्सरः ।
युक्त्या दानं न चादानम् अयोगेन युधिष्ठिर ॥ ६

सतां सङ्ग्रहणं शौर्यं दाक्ष्यं सत्यं प्रजाहितम् ।
अनार्जवैरार्जवैश्च शत्रुपक्षाविवर्धनम् ॥ ७

साधूनामपरित्यागः कुलीनानां च धारणम् ।
निचयश्च निचेयानां सेवासु महतामपि ॥ ८

बलानां हर्षणं नित्यं प्रजानामन्ववेक्षणम् ।
कार्येष्वखेदः कोशस्य तथैव च विवर्धनम् ॥ ९

पुरगुप्तिरविश्वासः पौरसङ्घातभेदनम् ।
केतनानां च जीर्णानाम् अवेक्षा चैव सीदताम् ॥ १०

विविधस्य च दण्डस्य प्रयोगः कालचोदितः ।
अरिमध्यस्थमित्राणां यथावच्चान्ववेक्षणम् ॥ ११

उपजापश्च कृत्यानाम् आत्मनः [1]परिमर्शनात् ।
अविश्वासस्स्वयं चैव परस्याश्वासनं तथा ॥ १२

नीतिवर्त्मानुसारेण नित्यमुत्थानमेव च ।
रिपूणामनवज्ञानं नित्यं चान्यायवर्जनम् ॥ १३
उत्थानं च नरेन्द्राणां बृहस्पतिरभाषत ॥ १३॥
राजधर्मस्य यन्मूलं श्लोकांश्चात्र निबोध मे ॥ १४

उत्थानेनामृतं लब्धम् उत्थानेनासुरा हताः ।
उत्थानेन सुरेन्द्रेण श्रैष्ठ्यं प्राप्तं दिवीह च ॥ १५

उत्थानवीरः पुरुषो वाग्धीरानधितिष्ठति ।
उत्थानधीरं वाग्धीरा रमयन्त उपासते ॥ १६

उत्थानहीनो राजा हि बुद्धिमानपि नित्यशः ।
सुधर्षणीयश्शत्रूणां भुजङ्ग इव निर्विषः ॥ १७

न च शत्रुरवज्ञेयो दुर्बलोऽपि बलीयसा ।
अल्पोऽपि हि दहत्यग्निर् विषमल्पं हिनस्ति च ॥ १८

एकाश्वेनापि सम्भूतश् शत्रुर्दुर्गं समाश्रितः ।
[2]सर्वं तापयते देशम् अपि राज्ञस्समृद्धिनः ॥ १९

राज्ञो रहस्यं यद्वाक्यं जयार्थं लोकसङ्ग्रहः ।

---

1. क-ख-ब—परदर्शनात् 2. क-ख-घ—तं तं

हृदि [1]यच्चास्य जिह्मं स्यात् कारणार्थं च यद्भवेत् ॥ २०

यच्चास्य कार्यं वृजिनं मार्दवेनैव धार्यते ।
रञ्जनार्थाय लोकस्य धर्मिठामाचरेत् क्रियाम् ॥ २१

राज्यं हि सुमहत्तत्र दुर्धार्यमकृतात्मभिः ।
न शक्यं मृदुना वोढुम् आपातस्थानमुल्बणम् ॥ २२

राज्यं सर्वामिषं नित्यम् आर्जवेनैव धार्यते ।
तस्मान्मिश्रेण सततं वर्तितव्यं युधिष्ठिर ॥ २३

यद्यप्यस्य विपत्तिस्स्याद् रक्षमाणस्य वै प्रजाः ।
सोऽप्यस्य विमलो धर्म एवंवृत्ता हि भूमिपाः ॥ २४

एप ते राजधर्माणां लेशस्समनुवर्णितः ।
भूयस्ते यत्र सन्देहस् तद्ब्रूहि कुरुनन्दन ॥ २५

वैशम्पायनः—

ततो व्यासश्च भगवान् देवस्थानोऽश्म एव च ।
वासुदेवः कृपश्चैव सात्यकिस्सञ्जयस्तथा ॥ २६

साधु साध्विति संहृष्टा घुष्यमाणैरिवाननैः ।
अस्तुवंस्ते नरव्याघ्रं भीष्मं धर्मभृतां वरम् ॥ २७

ततो दीनमना भीष्मम् उवाच कुरुनन्दनः ।
नेत्राभ्यामश्रुपूर्णाभ्यां पादौ तस्य शनैस्स्पृशन् ॥ २८

---

1. घ—यच्चाप्यजिह्मं

युधिष्ठिरः—

गत्वेदानीं श्वस्सन्देहं प्रवक्ष्यामि पितामह ।
उपैति सविता ह्यस्तं रसमापीय पार्थिवम् ॥ २९

वैशम्पायनः—

ततो द्विजातीनभिवाद्य केशवः
कृपश्च ते चैव युधिष्ठिरादयः ।
प्रदक्षिणीकृत्य महानदीसुतं
ततो रथानारुरुहुर्मुदा युताः ॥ ३०

दृषद्वतीं चाप्यवगाह्य सुव्रताः
कृतोदकार्थाः कृतजप्यमङ्गलाः ।
उपास्य सन्ध्यां विधिवत् परन्तपास्
ततः पुरं ते विविशुर्गजाह्वयम् ॥ ३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
॥ ८६ ॥ राजधर्मपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
[अस्मिन्नध्याये ३१ श्लोकाः]

## ॥ त्रिपञ्चाशोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति राजोत्पत्तेर्ब्रह्मकृतदण्डनीतिग्रन्थप्रतिपाद्यार्थानां पृथुराजचरितादीनां च कथनम् ॥

वैशम्पायनः—

ततः कल्यं समुत्थाय कृतपौर्वाह्णिकक्रियाः ।
ययुस्ते नगराकारै रथैः पाण्डवयादवाः ॥ १

प्रतिपद्य कुरुक्षेत्रं भीष्ममासाद्य चानघम् ।
सुखं च रजनीं पृष्ट्वा गाङ्गेयं रथिनां वरम् ॥ २

व्यासादीनभिवन्द्यर्षीन् सर्वैस्तैश्चाभिनन्दिताः ।
निषेदुरभितो भीष्मं परिवार्य समन्ततः ॥ ३

ततो राजा महातेजा धर्मपुत्रो युधिष्ठिरः ।
अब्रवीत् प्राञ्जलिर्भीष्मं प्रतिपूज्य यथाविधि ॥ ४

युधिष्ठिरः—

य एष राजन् राजेति शब्दश्चरति भारत ।
कथमेष समुत्पन्नस् तन्मे ब्रूहि पितामह ॥ ५

तुल्यपाणिभुजग्रीवस् तुल्यबुद्धीन्द्रियात्मकः ।
तुल्यदुःखसुखात्मा च तुल्यदृष्टिशिरोधरः ॥ ६

तुल्यशुक्रास्थिमज्जा च तुल्यमांसासृगेव च ।

निश्श्वासोच्छ्वासतुल्यश्च तुल्यप्राणशरीरवान् ॥ ७
समानजन्ममरणस् समस्सर्वैर्गुणैर्नृणाम् ।
विशिष्टबुद्धीन् शूरांश्च कथमेकोऽधितिष्ठति ॥ ८
कथमेको महीं कृत्स्नां शूरवीरार्यसङ्कुलाम् ।
रक्षत्यपि च लोकोऽस्य प्रसादमभिवाञ्छति ॥ ९
एकस्य तु प्रसादेन कृत्स्नो लोकः प्रसीदति ।
व्याकुले चाकुलस्सर्वो भवतीति विनिश्चयः ॥ १०
एतदिच्छाम्यहं श्रोतुं त्वत्तो हि भरतर्षभ ।
सर्वं तन्मे यथातत्त्वं प्रब्रूहि वदतां वर ॥ ११
नैतत् कारणमत्यल्पं भविष्यति विशां पते ।
यदेकस्मिञ्जगत् सर्वं देववद्याति सन्नतिम् ॥ १२

भीष्मः—

नियतस्त्वं नरश्रेष्ठ शृणु सर्वमशेषतः ।
यथा राज्यं समुत्पन्नम् आदौ कृतयुगेऽभवत् ॥ १३
नैव राज्यं न राजाऽऽसीन्न च दण्डो न दाण्डिकः ।
धर्मेणैव प्रजास्सर्वा रक्षन्ति स्म परस्परम् ॥ १४
पालयानास्तथाऽन्योन्यं नरा धर्मेण भारत ।
दैन्यं परस्परं जग्मुस् ततस्तान् मोह आविशत् ॥ १५
ते मोहवशमापन्ना मानवा मनुजर्षभ ।

प्रतिपत्तिविमोहाच्च धर्मस्तेषामनीनशत् ॥ १६

नष्टायां प्रतिपत्तौ तु मोहवश्यास्तदा नराः ।
लोभस्य वशमापन्नास् सर्वे भरतसत्तम ॥ १७

अप्राप्तस्याभिमर्शं तु कुर्वन्तो मनुजास्ततः ।
कामो नामापरस्तत्र समपद्यत वै प्रभो ॥ १८

तांस्तु कामाभिसन्तप्तान् रागो नामाभिसंस्पृशत् ।
रक्ताश्च नाभ्यजानन्त कार्याकार्ये युधिष्ठिर ॥ १९

अगम्यागमनं चैव वाच्यावाच्यं तथैव च ।
भक्ष्याभक्ष्यं च राजेन्द्र दोषादोषं च नात्यजन् ॥ २०

विप्लुते नरलोकेऽस्मिस् ततो ब्रह्म ननाश ह ।
नाशाच्च ब्रह्मणो राजन् धर्मो नाशमथागमत् ॥ २१

नष्टे ब्रह्मणि धर्मे च देवास्त्रासमथागमन् ।
ते त्रस्ता नरशार्दूल ब्रह्माणं शरणं ययुः ॥ २२

प्रपद्य भगवन्तं ते [1]देवं लोकपितामहम् ।
ऊचुः प्राञ्जलयस्सर्वे दुःखवेगसमाहताः ॥ २३

देवाः—

भगवन् नरलोकस्थं ग्रस्तं ब्रह्म सनातनम् ।
लोभमोहादिभिर्भावैस् ततो नो भयमाविशत् ॥ २४

1. ख—देव घ—देवा

ब्रह्मणश्च प्रणाशेन धर्मो व्यनशदीश्वर ॥ २४॥

ततस्तु समतां याता मर्त्यैस्त्रिभुवनेश्वराः ॥ २५

अधोभिवर्षास्तु वयं भौमास्तूर्ध्वप्रवर्षिणः ।
क्रियाव्युपरमात्तेषां ततोऽगच्छाम संशयम् ॥ २६

अत्र निश्श्रेयसं यन्नस् तद्ध्यायस्व पितामह ।
त्वत्प्रसादात् समुत्थोऽसौ प्रभावो नो भवत्वयम् ॥ २७

भीष्मः—

तानुवाच सुरान् सर्वान् स्वयम्भूर्भगवांस्ततः ॥ २७॥

ब्रह्मा—

श्रेयोऽहं चिन्तयिष्यामि व्येतु वो भीस्सुरोत्तमाः ॥ २८

भीष्मः—

ततोऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम् ।
यत्र धर्मस्तथैवार्थः कामश्चैवानुवर्णितः ॥ २९

त्रिवर्ग इति विख्यातो गण एव स्वयम्भुवा ।
चतुर्थो मोक्ष इत्येव पृथगर्थः पृथग्गुणः ॥ ३०

मोक्षस्यापि त्रिवर्गोऽन्यः प्रोक्तस्सत्त्वं रजस्तमः ।
स्थानं वृद्धिः क्षयश्चैव त्रिवर्गश्चैव दण्डजः ॥ ३१

आत्मादेशश्च कालश्चाप्युपायाः कृत्यमेव च ।
सहायाः कारणं चैव षड्वर्गो नीतिजस्स्मृतः ॥ ३२

त्रयी चान्वीक्षिकी चैव वार्ता च भरतर्षभ ।
दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः ॥ ३३

अमात्यलिप्सा प्रणिधी राजपुत्रस्य लक्षणम् ।
चारश्च विविधोपायः प्रणिधिश्च पृथग्विधः ॥ ३४

साम चैव प्रदानं च भेदो दण्डश्च पाण्डव ।
उपेक्षा पञ्चमी चात्र कार्त्स्न्येन समुदाहृता ॥ ३५

मन्त्रश्च वर्णितः कृत्स्नो मन्त्रभेदास्तथैव च ।
विभ्रमश्चैव मन्त्रस्य सिद्ध्यसिद्ध्योश्च यत् फलम् ॥ ३६

सन्धिश्च विविधाभिख्यो हीनो मध्यस्तथा समः ।
भयसत्कार[1]वित्ताख्यः कार्त्स्न्येन परिवर्णितः ॥ ३७

यात्राकालाश्च चत्वारस् त्रिवर्गस्य च विस्तरः ।
विजयो धर्मयुक्तश्च तथाऽर्थविजयश्च ह ॥ ३८

आसुरश्चैव विजयः कार्त्स्न्येन परिवर्णितः ।
लक्षणं पञ्चवर्गस्य द्विविधं चात्र वर्णितम् ॥ ३९

प्रकाशश्चाप्रकाशश्च दण्डोऽथ परिशब्दितः ।
प्रकाशोऽष्टविधस्तत्र गुह्यस्तु वहुविस्तरः ॥ ४०

रथा नागा हयाश्चैव पादाताश्चैव पाण्डव ।
विष्टिर्नावश्चराश्चैव देशिका इति चाष्टमः ॥ ४१

1. क-ख-घ—चिन्ताख्यः

अङ्गान्येतानि कौरव्य प्रकाशानि बलस्य तु ॥ ४१॥

जङ्गमाजङ्गमाश्चोक्ताश् चूर्णयोगा विषादयः ।
स्पर्शे चाभ्यवहार्ये चाप्युपांशुर्विविधस्स्मृतः ॥ ४२॥

क्रीडापूर्वं रणे द्यूते विस्रम्भेण समन्वितम् ।
उक्तं कैतव्यमित्येतद् उपायो नवमो बुधैः ॥ ४३॥

उपेक्षा सर्वकार्येषु कर्मणां करणेषु च ।
अनिष्टानां समुत्थाने त्रिवर्गो नश्यते यया ॥ ४४॥

इन्द्रजालादिका माया वाग्जीवनकुशीलवैः ।
सुनिमित्तैर्दुर्निमित्तैर् उत्पातैश्च समन्वितम् ॥ ४५॥
दम्भो लिङ्गं समाश्रित्य शत्रुवर्गे प्रयुज्यते ॥ ४६

शाठ्यं निश्चेष्टता प्रोक्ता चित्तदोषप्रदूषिका ।
अरिर्मित्रमुदासीन इत्येतेऽप्यनुवर्णिताः ॥ ४७

कृत्स्नो मार्गगुणश्चैव तथा भूमिगुणश्च ह ।
आत्मरक्षणमाश्वासस् स्पर्शानां चान्ववेक्षणम् ॥ ४८

कल्पना विविधाश्चापि नृनागरथवाजिनाम् ।
व्यूहाश्च विविधाभिख्या विचित्रं युद्धकौशलम् ॥ ४९

उत्पाताश्च निपाताश्च सुयुद्धं सुपलायनम् ।
शास्त्राणां पालनं ज्ञानं तथैव भरतर्षभ ॥ ५०

बलव्यसनमुक्तं च तथैव वलहर्षणम् ।
पीडा चापदकालश्च भयकालश्च पाण्डव ॥ ५१

तथा ख्यातविधानं च योगस्सञ्चार एव च ।
चोराटविबलैश्चोग्रैः परराष्ट्रस्य पीडनम् ॥ ५२

अग्निदैर्गरदैश्चैव प्रतिरूपककारकैः ।
श्रेणिमुख्योपतापेन विविधच्छेदनेन च ॥ ५३

दूषणेन च नागानाम् आतङ्कजननेन च ।
आराधनेन भक्तस्य पत्युश्चोपग्रहेण च ॥ ५४

सप्ताङ्गस्य च राज्यस्य ह्रासवृद्धिसमीक्षणम् ।
दूतसामर्थ्ययोगश्च राष्ट्रस्य च विवर्धनम् ॥ ५५

अरिमध्यस्थमित्राणां सम्यक् चोक्तं प्रपञ्चनम् ।
अवमर्दः प्रतीघातस् तथैव च बलीयसाम् ॥ ५६

व्यवहारस्सुसूक्ष्मश्च तथा कण्टकशोधनम् ।
[1]श्रमो व्यायामयोगश्च योगद्रव्यस्य सञ्चयः ॥ ५७

अभृतानां च भरणं भृतानां चान्ववेक्षणम् ।
अन्तकाले प्रदानं च [2]व्यसनेष्वप्रसङ्गिता ॥ ५८

तथा राजगुणाश्चैव सेनापतिगुणास्तथा ।

---

1. ख-घ—शमो	2. घ—व्यसनेषु प्रसङ्गिता

करणस्य च कर्तुश्च गुणदोषास्तथैव च ॥ ५९

दुष्टेङ्गितं च विविधं वृत्तिश्चैवानुजीविनाम् ।
शङ्कितत्वं च सर्वस्य प्रमादस्य च वर्जनम् ॥ ६०

अलभ्यलिप्सा लब्धस्य तथैव च विवर्धनम् ।
प्रदानं च विवृद्धस्य पात्रेभ्यो विधिवत् तथा ॥ ६१

विसर्गोऽर्थस्य धर्मार्थम् अर्थार्थं कामहेतुकम् ।
चतुर्थो व्यसनाघाते तथैवात्रानुवर्णितम् ॥ ६२

क्रोधजानि तथोग्राणि कामजानि तथैव च ।
दशोक्तानि कुरुश्रेष्ठ व्यसनान्यत्र चैव ह ॥ ६३

मृगयाऽक्षास्तथा पानं स्त्रियश्च भरतर्षभ ।
कामजान्याहुराचार्याः प्रोक्तानीह स्वयम्भुवा ॥ ६४

वाक्पारुष्यं तथोग्रत्वं दण्डपारुष्यमेव च ।
आत्मनो निग्रहस्त्यागो ह्यर्थदूषणमेव च ॥ ६५
यन्त्राणि विविधान्येव क्रियास्तेषां च वर्णिताः ॥ ६५॥
अवमर्दः प्रतीघातः केतनानां च भञ्जनम् ।
चैत्यद्रुमाणामामर्दो रोधः कर्मान्तनाशनम् ॥ ६६॥
उपस्करोऽथ वमनं तथोपास्या च वर्णिता ॥ ६७
पणवानकशङ्खानां भेरीणां च युधिष्ठिर ।

उपार्जनं च द्रव्याणां परमर्म च तानि षट् ॥ ६८
लब्धस्य च प्रशमनं सतां चैवाभिपूजनम् ।
विद्वद्भिरेकीभावश्च जपहोमविधिज्ञता ॥ ६९
मङ्गलालम्भनं चैव शरीरस्य प्रतिक्रिया ।
आहारयोजनं चैव नित्यमास्तिक्यमेव च ॥ ७०
एतेन च तथा स्थेयं सत्यत्वं मधुरा गिरः ।
उत्तमानां [1]समानानां क्रियाः केतनजास्तथा ॥ ७१
प्रत्यक्षाश्च परोक्षाश्च सर्वाधिकरणेष्वथ ।
वृत्तिर्भरतशार्दूल नित्यं चैवान्ववेक्षणम् ॥ ७२
अदण्ड्यता च विप्राणां युक्त्या दण्डनिपातनम् ।
अनुजीविस्वजातिभ्यो गुणेभ्यश्च समुद्भवः ॥ ७३
रक्षणं चैव पौराणां स्वराष्ट्रस्य विवर्धनम् ।
मण्डलस्था च या चिन्ता राजन् द्वादशराजिका ॥ ७४
त्रिस्सप्ततिमतिश्चैव प्रोक्ता या च स्वयम्भुवा ।
देशजातिकुलानां च धर्मस्समनुवर्णितः ॥ ७५
धर्मश्चार्थश्च कामश्च मोक्षश्चात्रानुवर्णितः ॥ ७५॥
उपायाश्चार्थलिप्सा च विविधा भूरिदक्षिणाः ।
मूलकर्मक्रिया चात्र मायायोगश्च वर्णितः ॥ ७६॥

1. क-ख-घ—समाजानां

दूषणं स्रोतसामत्र वर्णितं च स्थिराम्भसाम् ॥ ७७
धैर्यैरुपायैर्लोकश्च न चलेदार्यवर्त्मनः ।
तत् सर्वं राजशार्दूल नीतिशास्त्रेऽनुवर्णितम् ॥ ७८

एतत् कृत्वा शुभं शास्त्रं ततस्स भगवान् प्रभुः ।
देवानुवाच संहृष्टस् सर्वाञ्छक्रपुरोगमान् ॥ ७९

उपकाराय लोकस्य त्रिवर्गस्थापनाय च ।
नवनीतं सरस्वत्या बुद्धिरेषा प्रभाषिता ॥ ८०

दण्डेन सहिता ह्येषा लोकरक्षणकारिका ।
निग्रहानुग्रहरता लोकाननुचरिष्यति ॥ ८१

दण्डेन नीयते चेयं दण्डं नयति चाप्युत ।
दण्डनीतिरिति प्रोक्ता त्रीँल्लोकानवपत्स्यते ॥ ८२

षाड्गुण्यगुणसारैषा स्थास्यत्यग्रे महात्मसु ।
धर्मार्थकाममोक्षाश्च सकला ह्यत्र शब्दिताः* ॥ ८३

ततस्तां भगवान् नीतिं पूर्वं जग्राह शङ्करः ।
बहुरूपो विशालाक्षश् शिवस्स्थाणुरुमापतिः ॥ ८४

अनादिनिधनो देवश् चैतन्यादिसमन्वितः ।
ज्ञानानि च वशे यस्य तारकादीन्यशेषतः ॥ ८५

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

अणिमादिगुणोपेतम् ऐश्वर्यं न च कृत्रिमम् ।
तुष्ट्यर्थं ब्रह्मणः पुत्रो ललाटादुत्थितः प्रभुः ॥ ८६

अरुदत् सस्वनं घोरं जगतः प्रभुरव्ययः ।
जायमानः पिता पुत्रे पुत्रः पितरि चैव हि ॥ ८७

बुद्धिं विश्वसृजे दत्त्वा ब्रह्माण्डं येन निर्मितम् ।
यस्मिन् हिरण्मयो हंसश् शकुनिस्समपद्यत ॥ ८८

कर्ता सर्वस्य लोकस्य ब्रह्मा लोकपितामहः ।
स देवस्सर्वभूतात्मा महादेवस्सनातनः ॥ ८९

असङ्ख्यातसहस्राणां रुद्राणां स्थानमव्ययम् ॥ ८९॥

युगानामायुषो ह्रासं विज्ञाय भगवाञ् शिवः ।
सञ्चिक्षेप ततश्शास्त्रं महार्थं ब्रह्मणा कृतम् ॥ ९०॥

वैशालाक्षमिति प्रोक्तं तदिन्द्रः प्रत्यपद्यत ।
दशाध्यायसहस्राणि सुब्रह्मण्यो महातपाः ॥ ९१॥

मघवानपि तच्छास्त्रं देवात् प्राप्य महेश्वरात् ।
प्रजारञ्जनमन्विच्छन् सञ्चिक्षेप पुरन्दरः ॥ ९२॥

सहस्रैः पञ्चभिस्तात यदुक्तं बाहुदन्तिकम् ॥ ९३

अध्यायानां सहस्रैस्तु त्रिभिरेव बृहस्पतिः ।
संञ्चिक्षेपेश्वरो बुद्ध्या बार्हस्पत्यं यदुच्यते ॥ ९४

अध्यायानां सहस्रेण काव्यस्सङ्क्षेपमब्रवीत् ।
तच्छास्त्रममितप्रज्ञो योगाचार्यो महायशाः ॥ ९५

एवं लोकानुरोधेन शास्त्रमेतन्महर्षिभिः ।
सङ्क्षिप्तमायुर्विज्ञाय लोकानां ह्यासि पाण्डव ॥ ९६

अथ देवास्समागम्य विष्णुमूचुः प्रजापतिम् ।
एको योऽर्हति मर्त्येभ्यश् श्रेष्ठं तं वै समादिश ॥ ९७

ततस्सञ्चिन्त्य भगवान् देवो नारायणः प्रभुः ।
तैजसं वै विरजसं सोऽसृजन्मानसं सुतम् ॥ ९८

विरजास्तु महाभागः प्रभुत्वं भुवि नैच्छत ।
न्यासायैवाभवद्बुद्धिः प्रणीता तस्य पाण्डव ॥ ९९

कीर्तिमांस्तस्य पुत्रोऽभूत् सोऽपि मर्त्याधिकोऽभवत् ।
कर्दमस्तस्य पुत्रोऽभूत् सोऽप्यतप्यन्महत्तपः ॥ १००

प्रजापतेः कर्दमस्य अनङ्गो नाम वीर्यवान् ।
प्रजानां रक्षिता साधुर् दण्डनीतिविशारदः ॥ १०१

अनङ्गपुत्रोऽतिबलो नीतिमानभिगम्य वै ।
अभिपेदे महाराज्यम् अथेन्द्रियवशोऽभवत् ॥ १०२

प्राप्य नारीं महाभागां रूपिणीं काममोहितः ।

सौभाग्येन च सम्पन्नां गुणैश्चानु[1]त्तमां सतीम् ॥ १०३

मृत्योस्तु दुहिता राजन् सुनीथा नाम नामतः ।
प्रख्याता त्रिषु लोकेषु या सा वेनमजीजनत् ॥ १०४

तं प्रजासु विधर्माणं रागद्वेषवशानुगम् ।
मन्त्रपूतैः कुशैर्जघ्नुर् ऋषयो ब्रह्मवादिनः ॥ १०५

ममन्थुर्दक्षिणं चोरुम् ऋषयस्तस्य भारत ।
मन्त्रवत्तस्य सञ्जज्ञे ह्रस्वकः पुरुषोऽशुचिः ॥ १०६

दग्धस्थूणाप्रतीकाशो राक्षसः कृष्णमूर्धजः ।
निषीदेत्येवमूचुस्ते ऋषयो ब्रह्मवादिनः ॥ १०७

तस्मान्निषादास्सम्भूताः क्रूराश्शैलवनाश्रयाः ।
ये चान्ये विन्ध्यनिलया म्लेच्छाश्शतसहस्रशः ॥ १०८

भूयोऽस्य दक्षिणं पाणिं ममन्थुस्ते महर्षयः ।
ततः पुरुष उत्पन्नो रूपेणेन्द्र इवापरः ॥ १०९

कवची बद्धनिस्त्रिंशस् सशरस्सशरासनः ।
वेदवेदाङ्गविच्चैव धनुर्वेदस्य पारगः ॥ ११०

तं दण्डनीतिस्सकला श्रिता राजन् नरोत्तमम् ॥ ११०॥

ततस्स प्राञ्जलिर्वैन्यो महर्षींस्तानुवाच ह ॥ १११

1. क-घ—मतां

वैन्यः—

सुसूक्ष्मा मे समुत्पन्ना बुद्धिर्धर्मार्थदर्शिनी ।
अनया किं मया कार्यं तन्मे तत्त्वेन शंसत ॥ ११२

यन्मां भवन्तो वक्ष्यन्ति कार्यमर्थसमन्वितम् ।
तदहं वः करिष्यामि नात्र कार्या विचारणा ॥ ११३

भीष्मः—

तमूचुस्तत्र देवाश्च ते चैव परमर्षयः ॥ ११३॥

ऋषयः—

नियतो यत्र धर्मो वै तमशङ्कस्समाचर ।
प्रियाप्रिये परित्यज्य समस्सर्वेषु जन्तुषु ॥ ११४॥

कामं क्रोधं च लोभं च मानं चोत्सृज्य दूरतः ॥ ११५

यश्च धर्मात् प्रचलितो लोके कश्चन मानवः ।
निग्राह्यस्ते स्वबाहुभ्यां शश्वद्धर्ममवेक्षता ॥ ११६

प्रतिज्ञामधिरोहस्व मनसा कर्मणा गिरा ।
पालयिष्याम्यहं भौमं ब्रह्म इत्येव चासकृत् ॥ ११७

यश्चात्र धर्म इत्युक्तो दण्डनीतिव्यपाश्रयः ।
तमशङ्कः करिष्यामि स्ववशो न कदाचन ॥ ११८

अदण्ड्या मे द्विजाश्चेति प्रतिजानीष्व चाभि भो ।
लोकं च सङ्करात् कृत्स्नं त्राताऽस्मीति परन्तप ॥ ११९

भीष्मः—

वैन्यस्तु तानुवाचेदं देवानृषिपुरोगमान् ॥ ११९॥

वैन्यः—

ब्राह्मणा मे सहायाश्चेद् एवमस्तु सुरर्षभाः ॥ १२०

भीष्मः—

एवमस्त्विति वैन्यस्तु तैरुक्तो ब्रह्मवादिभिः ॥ १२०॥

पुरोधाश्चाभवत्तस्य शुक्रो ब्रह्ममयो निधिः ।
मन्त्रिणो वालखिल्यास्तु सारस्वत्यो गणो ह्यभूत् ॥ १२१॥

महर्षिर्भगवान् गर्गस् तस्य सांवत्सरोऽभवत् ॥ १२२

आत्मनाऽष्टम इत्येव श्रुतिरेषां परा नृप ॥ १२२॥

उत्पन्नौ वन्दिनौ चास्य तौ पूर्वौ सूतमागधौ ॥ १२३

समतां वसुधायाश्च स सम्यगुदपादयत् ।
वैषम्यं परमं भूमेर् इति नः परमा श्रुतिः ॥ १२४

स विष्णुना च देवेन शक्रेण विबुधैश्च ह ।
ऋषिभिश्च प्रजापाल्ये ब्रह्मणा चाभिषेचितः ॥ १२५

तं साक्षात् पृथिवी भेजे रत्नान्यादाय वाऽपि च ।
सागरस्सरितां भर्ता हिमवांश्चाचलोत्तमः ॥ १२६

शक्रश्च धनमक्षय्यं प्रादात् तस्मै युधिष्ठिर ।
रुक्मं चापि महामेरुस् स्वयं कनकपर्वतः ॥ १२७

यक्षराक्षसभर्ता च भगवान् नरवाहनः ।
धर्मे चार्थे च कामे च समर्थं प्रददौ धनम् ॥ १२८

हया रथाश्च नागाश्च कोटिशः पुरुषास्तथा ।
प्रादुर्बभूवुर्वैन्यस्य चिन्तयानस्य पाण्डव ॥ १२९

न जरा न च दुर्भिक्षं नाधयो व्याधयः कुतः ॥ १२९॥

सरीसृपेभ्यस्स्तेनेभ्यो न चान्येभ्यः कदाचन ।
भयमासीत् ततस्तस्य पृथिवी सस्यमालिनी ॥ १३०॥

तेनेयं पृथिवी दुग्धा सस्यानि दश सप्त च ।
यक्षराक्षसनागानाम् ईप्सितं यस्य यस्य यत् ॥ १३१॥

तेन धर्मोत्तरश्चायं कृतो लोको महात्मना ।
रञ्जिताश्च प्रजास्सर्वास् तेन राजेति कथ्यते ॥ १३२॥

ब्राह्मणानां क्षतत्राणात् ततः क्षत्रिय उच्यते ।
प्रथिता धनतश्चेयं पृथिवी साधुभिस्स्मृता ॥ १३३॥

स्थापनं चाकरोद्विष्णुस् स्वयमेव सनातनः ।
नातिवर्तिष्यते कश्चिद् राजंस्त्वामिति भारत ॥ १३४॥

ततस्स भगवान् विष्णुर् आविवेश च पार्थिवान् ।
देववन्नरदेवानां नमतीदं जगत् ततः ॥ १३५॥

दण्डनीत्या च सततं रक्षितारं नरेश्वरम् ।

न स्म धर्षयते कश्चिन्नित्यशश्चारुदर्शनम् ॥ १३६॥

शुभं हि कर्म राजेन्द्र शुभत्वायोपकल्पते ॥ १३७

आत्मना करणैश्चेह समस्येह महीक्षितः ।
को हेतुर्यद्वशे तिष्ठेल्लोको दैवादृते नृणाम् ॥ १३८

विष्णोर्ललाटात् कमलं सौवर्णमभवत् तदा ।
श्रीस्सम्भूता ततस्तस्मिन् देवी धर्मस्य पाण्डव ॥ १३९

श्रियस्सकाशादर्थश्च जातो धर्मश्च पाण्डव ।
अथ धर्मस्तथैवात्र श्रीश्च राज्ये प्रतिष्ठिता ॥ १४०

स्वकृतस्य क्षयाच्चैव स्वर्लोकादेत्य मेदिनीम् ।
पार्थिवो जायते तात दण्डनीतिविशारदः ॥ १४१

माहात्म्येन च संयुक्तो वैष्णवेन नरो भुवि ।
बुद्ध्या भवति संयुक्तो माहात्म्यं चाधिगच्छति ॥ १४२

स्थापनादथ चेद्देवैर् न कश्चिदतिवर्तते ।
तिष्ठेदेकस्य तु वशे तं चैवानुविधीयते ॥ १४३

शुभं हि कर्म राजेन्द्र [1]शुभत्वायोपकल्पते ।
तुल्यस्यैकस्य येनायं लोको वचसि तिष्ठति ॥ १४४

योऽस्य वै मुखमद्राक्षीत् सोऽस्य सर्वो वशानुगः ।
सुभगं चार्थवन्तं च रूपवन्तं च पश्यति ॥ १४५

---

1. क-ख-घ—महत्त्वा

महत्त्वात् तस्य दण्डस्य नीतिर्विस्पष्टलक्षणा ।
नयश्चायश्च विपुलो येन सर्वमिदं ततम् ॥ १४६
आगमश्च पुराणानां महर्षीणां च सम्भवः ।
तीर्थवंशाश्च वंशाश्च क्षत्रियाणां युधिष्ठिर ॥ १४७
सकलं चातुराश्रम्यं चातुर्होत्रं तथैव च ।
चातुर्वैद्यं तथैवात्र चातुर्वर्ण्यं च वर्णितम् ॥ १४८
इतिहासोपवेदाश्च न्यायः कृत्स्नश्च वर्णितः ।
तपो ज्ञानमहिंसा च सत्यं दानममत्सरः ॥ १४९
वृद्धोपसेवा दाक्ष्यं च शौचमुत्थानमेव च ।
सर्वभूतानुकम्पा च सर्वमेवात्र वर्णितम् ॥ १५०
भुवि वाचोगतं यच्च तच्च सर्वं समर्पितम् ।
तस्मिन् पैतामहे शास्त्रे पाण्डवेय न संशयः ॥ १५१
ततो जगति राजेन्द्र ततस्संशब्दितो बुधैः ।
देवाश्च नरदेवाश्च तुल्या इति विशां पते ॥ १५२
एतत् ते सर्वमाख्यातं महत्त्वं प्रति राजसु ।
कार्त्स्न्येन भरतश्रेष्ठ किमन्यदिह वर्तताम् ॥ १५३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
॥ ८६ ॥ राजधर्मपर्वणि चतुर्दशोऽध्यायः ॥ १४ ॥
[ अस्मिन्नध्याये १५३ श्लोकाः ]

## ॥ चतुःपञ्चाशोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति चातुर्वर्ण्यधर्मकथनम् ॥

---

वैशम्पायनः—

ततः पुनस्स गाङ्गेयम् अभिवाद्य पितामहम् ।
प्राञ्जलिर्नियतो भूत्वा पर्यपृच्छद्युधिष्ठिरः ॥ १

युधिष्ठिरः—

के धर्मास्सर्ववर्णानां चातुर्वर्ण्यस्य के पृथक् ।
चतुर्णामाश्रमाणां च राजधर्माश्च के मताः ॥ २

केन स्म वर्धते राष्ट्रं राजा केन च वर्धते ।
केन पौराश्च भृत्याश्च वर्धन्ते भरतर्षभ ॥ ३

कोशो दण्डश्च दुर्गश्च सहाया मन्त्रिणस्तथा ।
ऋत्विक्पुरोहिताचार्यान् कीदृशान् वर्जयेन्नृपः ॥ ४

केषु विश्वसितव्यं स्याद् राज्ञा कस्याञ्चिदापदि ।
कुतो वाऽऽत्मा दृढं रक्ष्यस् तन्मे ब्रूहि पितामह ॥ ५

द्वैधीभावेन भूतानां शपथः कीदृशो भवेत् ।
अधर्मस्य फलं यच्च शपथस्य विलङ्घने ॥ ६

सर्वमेतद्यथातत्त्वं व्यवहारं च तादृशम् ।
समासव्यासयोगेन कथयस्व पितामह ॥ ७

भीष्मः—

नमो धर्माय महते नमः कृष्णाय वेधसे ।
ब्राह्मणेभ्यो नमस्कृत्य धर्मान् वक्ष्यामि शाश्वतान् ॥ ८

अक्रोधस्सत्यवचनं संविभागश्च सर्वशः ।
प्रजनं स्वेषु दारेषु शौचमद्रोह एव च ॥ ९
आर्जवं भृत्यभरणं त एते सार्ववर्णिकाः ॥ ९॥
ब्राह्मणस्य तु यो धर्मस् तत्ते वक्ष्यामि केवलम् ॥ १०

दममेव महाराज धर्ममाहुस्सनातनम् ।
स्वाध्यायोऽध्यापनं चैव तत्र कर्म समाप्यते ॥ ११

तं चेद्वित्तमुपागच्छेद् वर्तमानं स्वकर्मणि ।
अकुर्वाणं हि कर्माणि शान्तं प्रज्ञानकल्पितम् ॥ १२

कुर्वीतापत्यसन्तानम् अथो दद्याद्यजेत च ।
संविभज्य हि भोक्तव्यं धनं सद्भिरितीष्यते ॥ १३

परिनिष्ठितकर्मा हि स्वाध्यायेनैव वै द्विजः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ १४
क्षत्रियस्यापि यो धर्मस् तं ते वक्ष्यामि भारत ॥ १४॥
दद्याद्राजा न याचेत यजेत न तु याजयेत् ॥ १५

नाध्यापयेदधीयीत प्रजाश्च परिपालयत् ।
नित्योद्युक्तो दस्युवधे रणे कुर्यात् पराक्रमम् ॥ १६

ये तु क्रतुभिरीजानाश् श्रुतवन्तश्च पार्थिवाः ।
ये चाहवे विजेतारस् त एषां लोकजित्तमाः ॥ १७

अविक्षतेन देहेन समराद्यो निवर्तते ।
क्षत्रियो नास्य तत् कर्म प्रशंसन्ति पुराविदः ॥ १८

एवं हि क्षत्रबन्धूनां धर्ममाहुः प्रधानतः ।
नास्य कृत्यमिदं किञ्चिद् अन्यद्दस्युनिबर्हणात् ॥ १९

[1]दानमध्ययनं यज्ञो राज्ञां क्षेमो विधीयते ।
तस्माद्राज्ञा विशेषेण योद्धव्यं धर्मलिप्सुना ॥ २०

स्वेषु धर्मेष्ववस्थाप्य प्रजास्सर्वा महीपतिः ।
धर्मेण सर्वकृत्यानि समनिष्ठानि कारयेत् ॥ २१

परिनिष्ठितकृत्यस्स्यान्नृपतिः परिपालनात् ।
कुर्यादन्यन्न वा कुर्याद् ऐन्द्रो राजन्य उच्यते ॥ २२

वैश्यस्यापि हि यो धर्मस् तं ते वक्ष्यामि भारत ॥ २२॥

दानमध्ययनं यज्ञश् शौचेन धनसञ्चयः ।
पितृवत् पालयेद्वैश्यो युक्तस्सर्वान् पशूनिह ॥ २३॥

विकर्म वर्जयेदन्यत् कर्म यद्यत् समाचरेत् ।
रक्षया स हि तेषां वै महत् सुखमवाप्नुयात् ॥ २४॥

प्रजापतिर्हि वैश्याय सृष्ट्वा परिददौ पशून् ।

---

1. ख—सप्तार्धानि न सन्ति

ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः ॥ २५॥
तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम् ॥ २६

षण्णामेकां पिबेद्धेनुं शतस्य मिथुनं हरेत् ।
लये च सप्तमो भागस् तथा शृङ्गे तथा खुरे ॥ २७

यस्यास्य सर्वबीजानाम् एषा सांवत्सरी भृतिः ॥ २७॥

न च वैश्यस्य कामस्स्यान्न रक्षेयं पशूनिति ।
वैश्ये चेच्छति नान्येन रक्षितव्याः कथञ्चन ॥ २८॥

शूद्रस्यापि च यो धर्मस् तं ते वक्ष्यामि भारत ॥ २९

प्रजापतिर्हि वर्णानां दासं शूद्रमकारयत् ।
[1]तेषां शुश्रूषणाच्चैव महत् सुखमवाप्नुयात् ॥ ३०

शूद्र एतान् परिचरेत् त्रीन् वर्णाननसूयकः ।
सञ्चयांश्च न कुर्वीत जातु शूद्रः कथञ्चन ॥ ३१

पापीयान् हि धनं लब्ध्वा वशे कुर्याद्गरीयसः ।
राज्ञा वा समनुज्ञातः कर्म कुर्वीत धार्मिकः ॥ ३२

तस्य वृत्तिं प्रवक्ष्यामि यस्य तस्योपजीवनम् ।
अवश्यं भरणीयो हि वर्णानां शूद्र उच्यते ॥ ३३

पात्रं [2]वेष्टनमौशीरम् उपानद्व्यजनानि च ।

---

1. ख—तस्माच्छूद्रस्य वर्णानां परिचर्या विधीयते । [अधिकः पाठः]
2 घ—वेष्टनकं चीरं

यातयामानि शूद्राय देयानि परिचारिणे ॥ ३४
अधार्याणि विशीर्णानि वसनानि द्विजातिभिः ।
शूद्रायैव प्रदेयानि तस्य धर्मधनं हि तत् ॥ ३५
यश्च कश्चिद्द्विजातीनां शूद्रश्शुश्रूषुराव्रजेत् ।
कल्प्यां तेन तु तस्याहुर् वृत्तिं धर्मविदो जनाः ॥ ३६
देयः पिण्डोऽनपत्याय भर्तव्यौ वृद्धदुर्बलौ ।
शूद्रेण न हि भर्तव्यो [1]भर्ता कस्याञ्चिदापदि ॥ ३७
अतिरेकेण भर्तव्यो भर्ता द्रव्यपरिक्षये ।
न हि स्वमस्ति शूद्रस्य भर्तृहार्यधनो ह्यसौ ॥ ३८
उक्तस्त्रयाणां वर्णानां यज्ञस्त्रय्येव भारत ।
स्वाहाकारनमस्कारौ मन्त्रश्शूद्रे न हीष्यते ॥ ३९
[2]तस्माच्छूद्रः पाकयज्ञैर् यजेताव्रतवान् स्वयम् ।
पूर्णपात्रमपामाहुः पाकयज्ञस्य दक्षिणाम् ॥ ४०
शूद्रः पैलवनो नाम सहस्राणां शतं ददौ ।
ऐन्द्राग्नेन विधानेन दक्षिणामिति नश्श्रुतम् ॥ ४१
यतो हि सर्ववर्णानां [3]यज्ञस्तस्यैव भारत ॥ ४१॥
[4]अग्रे सर्वेषु यज्ञेषु श्रद्धायज्ञो विधीयते ।
दैवतं हि परं श्रद्धा पवित्रं यजतां च तत् ॥ ४२॥

---

1. ध—द्विजः　　2. क-ख-ध—ताभ्यां
3. क-ख-घ—श्रद्धा यज्ञो विधीयते　　4. क-ख-ध—नास्तीदमर्धम्

दैवतं परमं विप्रास् स्वेन स्वेन परस्परम् ।
अयजन्निह [1]सत्रैस्ते तैस्तैः कामैस्सनातनैः ॥ ४३॥

संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु सृष्टयः ।
देवानामपि ये देवा यद्ब्रूयुस्ते परं हि तत् ॥ ४४॥
तस्माद्वर्णैस्तु धर्मज्ञास् संसृज्यन्ते न काम्यया ॥ ४५

ऋग्यजुस्सामवित् पूज्यो नित्यं स्याद्दैवतं द्विजः ।
अनृग्यजुरसामा तु प्राजापत्य उपद्रवः ॥ ४६

यज्ञो मनीषया तात सर्ववर्णेषु भारत ॥ ४६॥

नास्य यज्ञहणो देवा ईहन्ते नेतरे जनाः ।
तस्मात् सर्वेषु वर्णेषु श्रद्धायज्ञो विधीयते ॥ ४७॥

स्वं दैवतं ब्राह्मणास्स्वेन नित्यं
परान् वर्णानयजन्नैवमासीत् ।
अधरोवितानस्त्वथ तत्र सृष्टस्
तस्माद्विद्वांसस्त्रिषु वर्णेषु दृष्टाः ॥ ४८॥

तस्माद्वर्णा बहवो जातिधर्मास्
संसृज्यन्ते तस्य विपाक एषः ।
एकं साम यजुरेकमृगेका
विप्रश्चैको नियतस्तेषु दृष्टः ॥ ४९॥

1. क-ख—यज्ञैस्ते

अत्र गाथाः पुरा गीताः कीर्तयन्ति पुराविदः ।
वैखानसानां राजेन्द्र मुनीनां यष्टुमिच्छताम् ॥ ५०॥

उदितेऽनुदिते वाऽपि श्रद्दधानो जितेन्द्रियः ।
वह्निं जुहोति धर्मेण श्रद्धा वै कारणं महत् ॥ ५१॥

यत् स्कन्नमस्य तत् पूर्वं यदस्कन्नं तदुत्तरम् ।
बहूनि यज्ञरूपाणि नानाकर्मफलानि च ॥ ५२॥

तानि यस्स विजानाति ज्ञाननिश्चितनिश्चयः ।
द्विजातिश्श्रद्धयोपेतस् स यष्टुं पुरुषोऽर्हति ॥ ५३॥

स्तेनो वा यदि वा पापो यदि वा पापकृत्तमः ।
यष्टुमिच्छति यज्ञं यस् साधुमेव वदन्ति तम् ॥ ५४॥

ऋषयस्तं प्रशंसन्ति साधु चैतदसंशयम् ।
सर्वथा सर्ववर्णैश्च यष्टव्यमिति निश्चयः ॥ ५५॥

न हि यज्ञसमं किञ्चित् त्रिषु लोकेषु विद्यते ॥ ५६

तस्माद्यष्टव्यमित्याहुः पुरुषेणानसूयुना ।
श्रद्धापवित्रमाश्रित्य यथाशक्ति प्रयच्छता ॥ ५७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
॥ ८३ ॥ राजधर्मपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥
[अस्मिन्नध्याये ५७ श्लोकाः]

## ॥ पञ्चपञ्चाशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति आश्रमचतुष्टयधर्मकथनम् ॥

भीष्मः—

आश्रमाणां महाबाहो शृणु सत्यपराक्रम ।
चतुर्णां नामधेयानि कर्माणि च युधिष्ठिर ॥ १

वानप्रस्थं भैक्षचर्यां तथा गार्हस्थ्यमाश्रमम् ।
ब्रह्मचर्याश्रमं प्राहुश् चतुर्थं ब्राह्मणैरितम् ॥ २

चूडाकरणसंस्कारं द्विजातित्वमवाप्य च ।
आधानादीनि कर्माणि प्राप्य वेदानधीत्य च ॥ ३

सदारो वाऽप्यदारो वा विनीतस्संयतेन्द्रियः ।
वानप्रस्थाश्रमं गच्छेत् कृतकृत्यो गृहाश्रमात् ॥ ४

तत्रारण्यकशास्त्राणि समधीत्य स धर्मवित् ।
ऊर्ध्वरेताः प्रजा हित्वा गच्छत्यक्षरसात्मताम् ॥ ५

एतान्येव निमित्तानि मुनीनामूर्ध्वरेतसाम् ।
कर्तव्यानीह विप्रेण राजन्नादौ विपश्चिता ॥ ६

चरितब्रह्मचर्यस्य ब्राह्मणस्य विशां पते ।
भैक्षचर्यास्वधीकारः प्रशस्तो देहमोक्षणे ॥ ७

[1]यत्रास्तमितशायी स्यान्निरग्निरनिकेतनः ।
यथालब्धोपजीवी स्यान्मुनिर्दान्तो जितेन्द्रियः ॥ ८

निराशीर्निर्नमस्कारो निर्भारो निर्विकारवान् ।
विप्रः क्षेमाश्रमं प्राप्तो गच्छत्यक्षरसाम्यताम् ॥ ९

अधीत्य वेदान् कृतसर्वकृत्यस्
सन्तानमुत्पाद्य सुखानि भुक्त्वा ।
समाहितः प्रचरेद्दुश्चरं तं
गार्हस्थ्यधर्मं मुनिधर्मदृष्टम् ॥ १०

स्वदारतुष्टस्त्वृतुकालगामी
नियोगसेवी न शठो न जिह्मः ।
मिताशनो दैवपरः कृतज्ञस्
सत्यो मृदुश्चानृशंसः क्षमावान् ॥ ११

दान्तो विधेयो हव्यकव्याप्रमत्तो
ह्यन्नस्य दाता सततं द्विजेभ्यः ।
अमत्सरी सर्वलिङ्गप्रदाता
वैताननित्यश्च गृहाश्रमी स्यात् ॥ १२

अथात्र नारायणगीतमाहुर्
महर्षयस्तात महानुभावाः ।

---

1. अ—नास्तीदमर्धम्

महार्थमत्यर्थतपःप्रयुक्तं
तदुच्यमानं हि मया निबोध ॥ १३

सत्यार्जवं चातिथिपूजनं च
धर्मस्तथाऽर्थश्च रतिस्स्वदारे ।
निषेव्यमाणानि सुखानि लोके
ह्यस्मिन् परे चैव मतं ममैतत् ॥ १४

भरणं पुत्रदाराणां वेदानां चानुपालनम् ।
सेवतामाश्रमं श्रेष्ठं वदन्ति परमर्षयः ॥ १५

एवंविधो ब्राह्मणो यज्ञशीलो
गार्हस्थ्यमध्यावसते यथावत् ।
गृहस्थवृत्तिं प्रविगाह्य सम्यक्
स्वर्गे विशुद्धं फलमश्नुते सः ॥ १६

तस्य देहं परित्यज्य इष्टकामाः क्षमा मताः ।
आनन्त्यायोपकल्पन्ते सर्वतोक्षिशिरोमुखाः ॥ १७

वसन्नेको जपन्नेकस् सर्वान् वेदान् युधिष्ठिर ।
एकस्मिन्नेव चाचार्ये शुश्रूषुर्मलपङ्कवान् ॥ १८

ब्रह्मचारी व्रती नित्यं नित्यं दीक्षापरो वशी ।
गुरुच्छायानुगो नित्यम् अधीयानस्सुयन्त्रितः ॥ १९

अविचाल्यव्रतोपेतं कृत्यं कुर्वन् [1]वशे सदा ।
शुश्रूषां सततं कुर्वन् गुरोस्सम्प्रणतेन च ॥ २०

षट्कर्मस्वनिवृत्तश्च न प्रवृत्तश्च सर्वतः ।
नाचरत्यधिकारेण सेवते द्विषतो न च ॥ २१

एषो श्रमपदस्तात ब्रह्मचारिण इष्यते ॥ २१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥
॥ ८६ ॥ राजधर्मपर्वणि षोडशोऽध्यायः ॥ १६ ॥
[ अस्मिन्नध्याये २१॥ श्लोकाः ]



## ॥ षट्पञ्चाशोऽध्यायः ॥



युधिष्ठिरं प्रति भीष्मेण ब्राह्मणधर्मकथनम् ॥

युधिष्ठिरः—

पुनरिशवान् महोदर्कान् अहिंस्राँल्लोकसम्मतान् ।
ब्रूहि धर्मान् सुखोपायान् मद्विधानां सुखावहान् ॥ १

भीष्मः—

ब्राह्मणस्येह चत्वार आश्रमा विहिताः प्रभो ।
वर्णा[2]स्तनानुवर्तन्ते त्रयो भरतसत्तम ॥ २

1. ख-ध—वसेत् सदा 2. अ—स्तान्नानुवर्तन्ते

उक्तानि कर्माणि बहूनि राजन्
स्वर्ग्याणि राजन्यपरायणानि ।
शास्त्रस्य सर्वस्य विधौ स्मृतानि
क्षात्रे हि सर्वं विहितं परं यत् ॥ ३

क्षात्राणि वैश्यानि च सेवमानश्
शौद्राणि कर्माणि च ब्राह्मणस्सन् ।
अस्मिँल्लोके निन्दितो मन्दचेताः
परे च लोके निरयं प्रयाति ॥ ४

या संज्ञा विहिता लोके दासे शुनि वृके पशौ ।
विकर्मणि स्थिते विप्रे तां संज्ञां कुरु पाण्डव ॥ ५

षट्कर्मसम्प्रवृत्तस्य आश्रमेषु चतुर्ष्वपि ।
सर्वधर्मोपपन्नस्य तद्भूतस्य कृतात्मनः ॥ ६

ब्राह्मणस्य विशुद्धस्य तपस्यभिरतस्य च ।
निराशिषो वदान्यस्य लोका ह्यक्षरसंज्ञकाः ॥ ७

यो यस्मिन् कुरुते कर्म यादृशं येन च प्रभो ।
तादृशं तादृशेनैव सगुणं प्रतिपद्यते ॥ ८

वृद्ध्या कृषिवणिक्त्वेन जीवसञ्जीवनेन च ।
वेत्तुमर्हसि राजेन्द्र स्वाध्यातमगुणितेन च ॥ ९

कालसञ्चोदितः काले कालपर्यायनिश्चितः ।

उत्तमाधममध्यानि कर्माणि कुरुतेऽवशः ॥ १०

अन्तवन्ति प्रदानानि परं श्रेयस्कराणि च ।
अकर्मविहितो लोको ह्यक्षरस्सर्वतोमुखः ॥ ११

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
॥ ८६ ॥ राजधर्मपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
[ अस्मिन्नध्याये ११ श्लोकाः ]

---

## ॥ सप्तपञ्चाशोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति ब्राह्मणैस्त्याज्यधर्मकथनम् ॥ १ ॥ तथा क्षत्रियादिधर्मकथनपूर्वकं राजधर्मप्रशंसनम् ॥ २ ॥

---

भीष्मः—

ज्याकर्षणं शत्रुनिबर्हणं च
कृषिर्वणिज्या पशुपालनं च ।
शुश्रूषणं चापि तथाऽर्थहेतोर्
अकार्यमेतत् परमं द्विजस्य ॥ १

सेव्यं तु ब्रह्म षट्कर्म गृहस्थेन मनीषिणा ।
कृतकृत्यस्य चारण्ये वासो विप्रस्य शस्यते ॥ २

राजप्रेष्यं कृषिधनं जीवनं च वणिक्क्रिया ।
कौटिल्यं कौलटेयं च ब्राह्मणस्य विगर्हितम् ॥ ३

शूद्रो राजन् भवति ब्रह्मबन्धुर्
दुश्चारित्रो यश्च धर्मादपेतः ।
वृषलीपतिः पिशुनो नर्तनश्च
ग्रामप्रेष्यो यश्च भवेद्विकर्मा ॥ ४

एवंविधो ब्राह्मणः कौरवेन्द्र
वृत्तापेतो यो भवेन्मन्दचेताः ।
जपन् वेदानजपंश्चापि राजन्
समश्शूद्रैर्दासवच्चोपभोज्यः ॥ ५

एते सर्वे शूद्रसमा भवन्ति
राजन्नेतान् वर्जयेद्देवकृत्ये ॥ ५॥

निर्मर्यादे वाक्छले क्रूरवृत्ते
हिंसाकामे त्यक्तवृत्तस्वधर्मे ।
हव्यं कव्यं यानि चान्यानि राजन्
देयान्यदेयानि भवन्ति तस्मिन् ॥ ६॥

तस्माद्धर्मो विहितो ब्राह्मणस्य
दमश्शौचं चार्जवं चापि राजन् ।
तथा विप्रस्याश्रमास्सर्व एव
पुरा राजन् ब्रह्मणा सन्निसृष्टाः ॥ ७॥

यस्याद्दान्तस्सोमपा आर्यशीलस्
सानुक्रोशस्सर्वसहो निराशीः ।
ऋजुर्मृदुरनृशंसः क्षमावान्
स वै विप्रो नेतरः पापकर्मा ॥ ८॥

विप्रं वैश्यं राजपुत्रं च राजन्
लोकास्सर्वे संश्रिता धर्मकामाः ।
तस्माद्वर्णाञ्जातिधर्मेषु सक्ताञ्
जेतुं विष्णुर्नेच्छते पाण्डुपुत्र ॥ ९॥

लोकश्चायं सर्वलोकस्य न स्याच्
चातुर्वर्ण्यं वेदवादाश्च न स्युः ।
सर्वाश्चेज्यास्सर्वलोकक्रियाश्च
सद्यस्सर्वे चाश्रमाश्चैव न स्युः ॥ १०॥

यश्च त्रयाणां वर्णानाम् इच्छेदाश्रमसेवनम् ।
कर्तुमाश्रमदृष्टांश्च धर्मास् ताञ् शृणु पाण्डव ॥ ११॥

शुश्रूषोः कृतकार्यस्य कृतसन्तानकर्मणः ।
अभ्यनुज्ञाप्य राजानं शूद्रस्य जगतीपते ॥ १२॥

अल्पान्तरगतस्यापि देशधर्मगतस्य वा ।
आश्रमा विहितास्सर्वे वर्जयित्वा निराशिषम् ॥ १३॥

भैक्षचर्यां न चैवाहुस् तस्य तद्धर्मवादिनः ।

तथा वैश्यस्य राजेन्द्र राजपुत्रस्य चैव ह ।। १४।।

कृतकृत्यो वयोतीतो राज्ञः कृतपरिश्रमः ।
वैश्यो गच्छेदनुज्ञातो नृपेणाश्रमसंश्रयम् ।। १५।।

वेदानधीत्य धर्मेण राजशास्त्राणि चैव ह ।
सन्तानादीनि कर्माणि कृत्वा सोमं निषेव्य च ।। १६।।

पालयित्वा प्रजास्सर्वा धर्मेण वदतां वर ।
राजसूयाश्वमेधादीन् मखानन्यांस्तथैव च ।। १७।।

आनयित्वा यथाचारं विप्रेभ्यो दत्तदक्षिणः ।
सङ्ग्रामे विजयं प्राप्य तथाऽल्पं यदि वा बहु ।। १८।।

स्थापयित्वा प्रजापालः पुत्रं राज्ये च पाण्डव ।
अन्यगोत्रं प्रशस्तं वा क्षत्रियं क्षत्रियर्षभ ।। १९।।

अर्चयित्वा पितॄन् श्राद्धैः पितृयज्ञैर्यथाविधि ।
देवान् यज्ञैरृषीन् वेदैर् अर्चयित्वा च यत्नतः ।। २०।।

अन्तकाले च सम्प्राप्ते य इच्छेदाश्रमान्तरम् ।
सो नु पूर्वाश्रमान् राजन् गत्वा सिद्धिमवाप्नुयात् ।। २१।।

राजर्षित्वेन राजेन्द्र भैक्ष्यचर्याद्यसेवया ।
अपेतगृह[1]धर्मोऽपि चरेज्जीवितकाम्यया ।। २२।।

1. घ—धर्मोऽपि

न चैतन्नैष्ठिकं कर्म त्रयाणां भूरिदक्षिण ।
चतुर्णां राजशार्दूल प्राहुराश्रमवासिनाम् ॥ २३॥

बाह्वायत्तं क्षत्रियैर्मानवानां
लोकश्रेष्ठं धर्ममासेवमानैः ।
सर्वे धर्मास्सोपधर्मास्त्रयाणां
राज्ञो धर्मे नीति[1]शास्त्रं शृणोमि ॥ २४॥

यथा राजन् हस्तिपदे पदानि
संलीयन्ते सर्वसत्त्वोद्भवानि ।
एवं धर्मान् राजधर्मेषु सर्वान्
सर्वावस्थान् सम्प्रलीनान् निबोध ॥ २५॥

अल्पाश्रयानल्पफलान् वदन्ति
धर्मानन्यान् धर्मविदस्सदैव ।
महाश्रयं बहुकल्याणरूपं
क्षात्रं धर्मं नेतरं प्राहुरार्याः ॥ २६॥

सर्वे धर्मा राजधर्मप्रधानास्
सर्वे वर्णाः पाल्यमाना भवन्ति ।
सर्वे धर्मा राजधर्मेषु दृष्टास्
सर्वा विद्या राजधर्मेषु चोक्ताः ॥ २७॥

1. ख-ब—शास्त्रे

सर्वे भोगा राजधर्मेषु राजंस्
त्यागं चाहुर्धर्ममग्र्यं पुराणम् ॥ २८

मज्जेत्त्रयी दण्डनीतौ हतायां
सर्वे धर्माः प्राद्रवेयुर्विरुद्धाः ।
सर्वे धर्माश्चाश्रमाणां हतास्स्युः
क्षात्रे नष्टे राजधर्मे प्रविष्टाः ॥ २९

[1]सर्वे भोगा राजधर्मेषु दृष्टास्
सर्वा दीक्षा राजधर्मेषु चोक्ताः ।
सर्वा विद्या राजधर्मेषु युक्तास्
सर्वे लोका राजधर्मे प्रविष्टाः ॥ ३०

[2]तस्माद्धर्मो राजधर्माद्विशिष्टो
नान्यो लोके विद्यतेऽजातशत्रो ॥ ३०॥

सर्वाण्येतानि कर्माणि क्षात्रे भरतसत्तम ।
भवन्ति जीवलोकश्च क्षत्रधर्मे प्रतिष्ठितः ॥ ३१॥

यथा जीवः प्रकृतौ साध्यमानो
धर्मश्रुतीनामुपपीडनाय ।

---

1. क-ख-ब—अर्धद्वयं नास्ति
2. ख—सर्वे त्यागा राजधर्मेषु दृष्टास्
सर्वा दीक्षा राजधर्मेषु दृष्टाः ।
सर्वे योगा राजधर्मेषु चोक्तास्
सर्वे धर्मा राजधर्मे प्रविष्टाः ॥ [अधिकः पाठः]

एवं धर्मा राजधर्मैर्वियुक्तास्
सञ्छिन्त्यन्ते नाद्रियन्ते स्वधर्माः ॥ ३२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
॥ ८६ ॥ राजधर्मपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥
[ अस्मिन्नध्याये ३२॥ श्लोकाः ]

---

## ॥ अष्टपञ्चाशोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति राजधर्मप्रशंसकेन्द्रमान्धातृसंवादानुवादः ॥

---

भीष्मः—

चातुराश्रमधर्माश्च राजधर्माश्च पाण्डव ।
[1]लोकवेदोत्तराश्चैव धर्माः क्षात्रे समर्पिताः ॥ १

अप्रत्यक्षं बहुफलं धर्ममाश्रमवासिनाम् ।
प्ररूपयन्ति तद्भावम् आगमैरेव शाश्वतम् ॥ २

अपरे वचनैः पुण्यैर् वादिनो लोकनिश्चयम् ।
अनिश्चयज्ञा धर्माणाम् अदृष्टान्ते परे रताः ॥ ३

प्रत्यक्षं फलभूयिष्ठम् आत्मसाक्षिकमच्छलम् ।
सर्वलोकहितं धर्मं क्षत्रियेषु प्रतिष्ठितम् ॥ ४

1. क-ख-घ—लोकालोकोत्तराश्चैव

धर्माश्रमाध्यवसिनां ब्राह्मणानां युधिष्ठिर ।
यथा त्रयाणां वर्णानां सङ्ख्यातोपश्रुतिः पुरा ॥ ५

अनुलोमा राजधर्मा लोके सुचरितैरिह ।
उदाह्रियन्ते राजेन्द्र यथा विष्णुं महौजसम् ॥ ६

सर्वभूतेश्वरं देवं ब्राह्मं नारायणं पुरा ।
जग्मुस्सुबहवश्शूरा राजानो दण्डनीतये ॥ ७

एकैकमात्मनः कर्म तुलयित्वाऽऽश्रमे पुरा ।
राजानः पर्युपासन्त दृष्टान्तवचने स्थिताः ॥ ८

साध्या देवा वसवश्चाश्विनौ च
रुद्राश्च विश्वे मरुतां गणाश्च ।
सृष्टाः पुरा चादिदेवेन देवाः
क्षात्रे धर्मे वर्तयन्ति स्म सिद्धाः ॥ ९

अत्र ते वर्तयिष्यामि धर्ममर्थविनिश्चये ।
निर्मर्यादे वर्तमाने दानवैकार्णवे पुरा ॥ १०

बभूव राजा राजेन्द्र मान्धाता नाम वीर्यवान् ।
पुरा वसुमतीपालो यज्ञं चक्रे दिदृक्षया ॥ ११

अनादिनिधनं देवं शिवं नारायणं प्रभुम् ।
स राजा राजशार्दूल मान्धाता परमेश्वरम् ॥ १२

जगाम शिरसा यज्ञे पादौ विष्णोर्महात्मनः ।
दर्शयामास तं विष्णू रूपमास्थाय वासवम् ॥ १२

स पार्थिवो नृपैस्सार्धम् अर्चयामास तं प्रभुम् ॥ १३॥

तस्य पार्थिवसङ्घस्य तस्य चैव महात्मनः ।
संवादोऽयं महानासीद् विष्णुं प्रति महामते ॥ १४॥

इन्द्रः—

किमिष्यसे धर्मभृतां वरिष्ठ
यं द्रष्टुकामोऽसि तमप्रमेयम् ।
अनन्तमायामिततत्त्ववीर्यं
नारायणं ह्यादिदेवं पुराणम् ॥ १५॥

नासौ देवो विश्वरूपो मया हि
शक्यो द्रष्टुं ब्रह्मणा वाऽपि साक्षात् ।
येऽन्ये कामास्तव राजन् हृदिस्था
तांस्ते दास्ये त्वं हि मर्त्येषु राजा ॥ १६॥

सत्ये स्थितो धर्मपरो जितेन्द्रियश्
शूरो दृढं प्रीतिकरस्सुराणाम् ।
बुद्ध्या भक्त्या चोत्तमश्श्रद्धया च
ततस्तेऽहं दद्मि वरं यथेष्टम् ॥ १७॥

मान्धाता—

असंशयं भगवानादिदेवो
वक्ष्यामि त्वां शिरसा सम्प्रसाद्य ।
त्यक्त्वा भोगान् धर्मकामो ह्यरण्यम्
इच्छे गन्तुं सत्पथं साधुजुष्टम् ॥ १८॥

क्षात्राद्धर्माद्विपुलादप्रमेया-
ल्लोकाः प्राप्तास्स्थापितं स्वं यशश्च ।
धर्मो योऽसावादिदेवात् प्रवृत्तो
[1]लोकज्येष्ठं तं न जानामि कर्तुम् ॥ १९॥

इन्द्रः—

[2]असैनिका धर्मपराश्च सर्वे
परां गतिं न [3]नयन्ते ह्ययुक्ताः ।
क्षात्रो धर्मो ह्यादिदेवानुसृष्टः
पश्चादन्ये शेषभूतास्तु धर्माः ॥ २०॥

शेषास्सृष्टा ह्यन्तवन्तो ह्यनन्तास्
सुप्रस्थानः क्षात्रधर्मो विशिष्टः ।
अस्मिन् धर्मे सर्वधर्माः प्रविष्टाः
क्षात्रं धर्मं श्रेष्ठतमं वदन्ति ॥ २१॥

---

1. ख—पश्चादन्ये शेषभूतास्तु धर्माः

2. ख—नास्त्यर्धद्वयम् 3. क-ख—यतन्ते

कर्मणैव पुरा देवा ऋषय[1]श्चामितौजसः ।
त्रातास्सर्वे प्रसह्यारीन् क्षत्रधर्मेण विष्णुना ॥ २२॥

यदि ह्यसौ भगवान् नाहनिष्यद्
रिपून् सर्वान् वसुमानप्रमेयः ।
न च ब्रह्मा नैव लोकादिकर्ता
सन्तो धर्माश्चादिधर्माश्च न स्युः ॥ २३॥

इमामुर्वी नाजयद्विक्रमेण
देवश्रेष्ठस्सासुरामादिदेवः ।
चातुर्वर्ण्यं चातुराश्रम्यधर्मास्
सर्वे न स्युर्ब्राह्मणानां विनाशात् ॥ २४॥

न स्युर्धर्माश्शतशश्शाश्वतास्ते
क्षात्रेण धर्मेण पुनः प्रवृत्ताः ।
युगे युगे ह्यादिधर्माः प्रवृत्ता
लोकज्येष्ठं क्षात्रधर्मं वदन्ति ॥ २५॥

आत्मत्यागस्सर्वभूतानुकम्पा
लोकज्ञानं पालनं मोक्षणं च ।
विषण्णानां मोक्षणं पीडितानां
क्षात्रे धर्मे विद्यते पार्थिवानाम् ॥ २६॥

1. क-ख-घ—श्च महौजसः

निर्मर्यादाः काममन्युप्रवृत्ता
भीता राज्ञो नाधिगच्छन्ति पापम् ।
शिष्टाश्चान्ये सर्वधर्मोपपन्नास्
साध्वाचारास्साधुधर्मं वदन्ति ॥ २७॥

पुत्रवत् पाल्यमानानि धर्मलिङ्गानि पार्थिवैः ।
लोके सर्वाणि भूतानि चरन्त्यत्र न संशयः ॥ २८॥

सर्वधर्मपरं क्षात्रं लोकज्येष्ठं सनातनम् ।
शश्वदक्षरपर्यन्तम् अक्षरं सर्वतोमुखम् ॥ २९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥
॥ ८६ ॥ राजधर्मपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
[अस्मिन्नध्याये २९॥ श्लोकाः]

## ॥ एकोनषष्टितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति इन्द्ररूपहरिणा मान्धातारं प्रत्युक्तराजधर्मादिकथनम् ॥

इन्द्रः—

एवंवीर्यस्सर्वधर्मोपपन्नः
क्षात्रश्श्रेष्ठस्सर्वधर्मेषु धर्मः ।
पाल्यो युष्माभिर्लोकपालैरुदारैर्
विपर्यये स्यादभवः प्रजानाम् ॥ १

[1]भूसंस्कारं धर्मसंस्कारयोग्यं
दीक्षाचर्यां पालनं च प्रजानाम् ।
विद्याद्राज्ञस्सर्वभूतानुकम्पां
देहत्यागं चाहवे धर्ममग्र्यम् ॥ २

त्यागं ज्येष्ठं मुनयो वै वदन्ति
सर्वज्येष्ठं यच्छरीरं त्यजन्ति ।
नित्यं व्यक्तं राजधर्मेषु सर्वं
प्रत्यक्षं ते भूमिपालास्तथैते ॥ ३

[2]बहुश्रुत्या गुरुशुश्रूषया वा
परस्य वा संहननाद्वदन्ति ।

1. घ—अर्धद्वयं नास्ति 2. क-ख-घ—बाहुश्रुत्यं गुरुशुश्रूषणं वा

नित्यं धर्मं क्षत्रियो ब्रह्मचारी
चरेदेको ह्याश्रमं धर्मकामः ॥ ४

सामान्यार्थे व्यवहारे प्रवृत्ते
प्रियाप्रिये वर्जयंश्चैव यत्नात् ।
चातुर्वर्ण्यस्थापनात् पालनाच्च
तैस्तैर्योगैर्नियमैरौषधैश्च ॥ ५

[1]सर्वोद्योगैराश्रमं धर्म्यमाहुः
क्षात्रं श्रेष्ठं सर्वधर्मोपपन्नम् ।
स्वं स्वं धर्मं येन चरन्ति वर्णास्
तांस्तान् वर्णान् ये यथा स्थापयन्ति ॥ ६

निर्मर्यादे नित्यमर्थे विनष्टे
न सा चिन्ता पशुभूते मनुष्ये ।
यथा नीतिर्गमयत्यर्थयोगाच्
छ्रेयांस्तस्मादाश्रमः क्षत्रियाणाम् ॥ ७

त्रैविद्यानां या गतिर्ब्राह्मणानां
ये चैवोक्तास्त्वाश्रमा ब्राह्मणानाम् ।
एतत् सर्वं क्षत्रियस्याहुरग्र्यम्
अन्यत् कुर्वञ् छूद्रवत्तत्र वर्ज्यः ॥ ८

1. क-ख—सर्वैर्योगै

चातुराश्रम्यधर्माश्च वेदवादाश्च पार्थिव ।
ब्राह्मणैरनुगन्तव्या नान्यो विद्यात् कथञ्चन ॥ ९

अन्यथा वर्तमानस्य न सा वृत्तिः प्रकल्प्यते ।
कर्मणा त्यज्यते धर्मो यथैव श्वा तथैव सः ॥ १०

यो विकर्मस्थितो विप्रो न स सन्मानमर्हति ।
कर्म स्वमप्रयुञ्जानम् अविश्वास्यं हि तं विदुः ॥ ११

एते वर्णास्सर्वधर्मैश्च हीना
उत्क्रोष्टव्याः क्षत्रियैरेव धर्मे ।
तस्माच्छ्रेष्ठो राजधर्मो न चान्यो
वीर्यश्रेष्ठा राजधर्मा मता मे ॥ १२

मान्धाता—

यवनाः किराता गान्धाराश् चीनाश्शबरबर्वराः ।
शकास्तुहारा गुह्याश्च पह्लवाश्चान्ध्रमद्रकाः ॥ १३

उष्ट्राः पुलिन्दा आरट्टाः काचा म्लेच्छाश्च सर्वशः ।
ब्रह्मक्षत्रप्रसूताश्च वैश्याश्शूद्राश्च मानवाः ॥ १४

कथं धर्मं चरिष्यन्ति सर्वे विषयवासिनः ।
मद्विधैश्च कथं स्थाप्यास् सर्वे ते दस्युजीविनः ॥ १५

एतदिच्छाम्यहं श्रोतुं मघवंस्त्वं ब्रवीहि मे ।
त्वं बन्धुभूतो ह्यस्माकं क्षत्रियाणां सुरेश्वर ॥ १६

इन्द्रः—

मातापित्रोर्हि शुश्रूषा कर्तव्या सर्वदस्युभिः ।
आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनाम् ॥ १७

भूमिपानां च शुश्रूषा कर्तव्या सर्वदस्युभिः ।
देशधर्मक्रियाश्चापि तेषां धर्मो विधीयते ॥ १८

पितृयज्ञास्तथा कूपाः प्रपाश्च शयनानि च ।
दानानि च यथाकालं दातव्यानि द्विजातिषु ॥ १९

अहिंसा सत्यमक्रोधो वृत्तिर्दायानुपालनम् ।
भरणं पुत्रदाराणां शौचमद्रोह एव च ॥ २०

दक्षिणा सर्वयज्ञानां दातव्या धर्ममिच्छता ।
पाकयज्ञा महार्हाश्च दातव्यास्सर्वदस्युभिः ॥ २१

एतान्येवम्प्रकाराणि विहितानि पुराऽनघ ।
सर्वलोकस्य कर्माणि कर्तव्यानीह पार्थिव ॥ २२

मान्धाता—

दृश्यन्ते मानुषे लोके सर्ववर्णेषु दस्यवः ।
लिङ्गान्तरे वर्तमाना आश्रमेषु तथैव च ॥ २३

इन्द्रः—

विनष्टायां दण्डनीत्यां राजधर्मे विनाकृते ।
सम्प्रमुह्यन्ति भूतानि राजदौरात्म्यतोऽनघ ॥ २४

असङ्ख्याता भविष्यन्ति भिक्षवो लिङ्गिनस्तथा ।
आश्रमाणां विकल्पाश्च वृत्तेऽस्मिन् वै कृते युगे ॥ २५

अशृण्वानाः पुराणानां धर्माणां शतशो नराः ।
उत्पथं प्रतिपत्स्यन्ते काममन्युसमीरिताः ॥ २६

यदा निवर्त्यते पापो दण्डनीत्या महामते ।
तदा धर्मो न चलते सम्भूतश्शाश्वतः पुरा ॥ २७

सर्वलोकगुरुं चैव राजानं योऽवमन्यते ।
न तस्य दत्तं न कृतं न श्रुतं फलति क्वचित् ॥ २८

मानवानामधिपतिं देवरूपं महाद्युतिम् ।
देवाश्च बहुमन्यन्ते धर्मकामं जनेश्वरम् ॥ २९

प्रजापतिर्हि भगवान् यस्सर्वमसृजज्जगत् ।
स प्रवृत्तिनिवृत्त्यर्थं धर्माणां क्षत्रमिच्छति ॥ ३०

प्रवृत्तस्य हि धर्मस्य बुद्ध्या यस्स्मरते गतिम् ।
स च मान्यश्च पूज्यश्च स च क्षत्रे प्रतिष्ठितः ॥ ३१

भीष्मः—

एवमुक्त्वा स भगवान् मरुद्गणवृतः प्रभुः ।
जगाम भवनं विष्णुर् अक्षरं शाश्वतं परम् ॥ ३२

एवं प्रवर्तिते धर्मे पुरा सुचरितेऽनघ ।
कः क्षत्रमतिवर्तेत चेतयानो बहुश्रुतः ॥ ३३

अन्यायेन प्रवृत्तानि निवृत्तानि तथैव च ।
अन्तरा विलयं यान्ति यथा पथि विचक्षुषः ॥ ३४

आदौ प्रवर्तिते चक्रे तथैवादिपरायणे ।
वर्तस्व पुरुषव्याघ्र संविजानामि तेऽनघ ॥ ३५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥
॥ ८६ ॥ राजधर्मपर्वणि विंशोऽध्यायः ॥ २० ॥
॥ अस्मिन्नध्याये ३५ श्लोकाः ॥

---

## ॥ षष्टितमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति वर्णाश्रमधर्मकथनम् ॥

---

युधिष्ठिरः—

श्रुता मे कथिताः पूर्वं चत्वारो मानवाश्रमाः ।
व्याख्यानमेषामाचक्ष्व पृच्छतो मे पितामह ॥ १

भीष्मः—

विदितास्सर्व एवेह धर्मास्तव युधिष्ठिर ।
यथा मम महाबाहो विदितास्साधुसम्मताः ॥ २

यत्तु लिङ्गान्तरगतं पृच्छसे मां युधिष्ठिर ।
धर्मं धर्मभृतां श्रेष्ठ तन्निबोध नराधिप ॥ ३

सर्वाण्येतानि कौन्तेय विद्यन्ते भरतर्षभ ।
साध्वाचारप्रवृत्तानां चातुराश्रमकर्मणाम् ॥ ४

अकामद्वेषसंयुक्तो दण्डनीत्या युधिष्ठिर ।
समदर्शी च भूतेषु भैक्षाश्रमपदो भवेत् ॥ ५

वेत्ति दानानि सर्गं च निग्रहानुग्रहौ तथा ।
यथोक्तवृत्तो वीरस्य दीक्षाश्रमपदो भवेत् ॥ ६

[1]ज्ञातिसम्बन्धिमित्राणि व्यापन्नानि युधिष्ठिर ।
समभ्युद्धरमाणस्य दीक्षाश्रमपदो भवेत् ॥ ७

आह्निकं पितृयज्ञांश्च भूतयज्ञान् समानुषान् ।
कुर्वतः पार्थ विपुलान् वन्याश्रमपदो भवेत् ॥ ८

संविभागाच्च भूतानाम् अतिथीनामथार्चनात् ।
देवयज्ञैश्च कौन्तेय वन्याश्रमपदो भवेत् ॥ ९

पालनात् सर्वभूतानां स्वराष्ट्रपरिपालनात् ।
दीक्षा बुद्धिमतां राज्ञां वन्याश्रमपदो भवेत् ॥ १०

लोकमुख्येषु सत्कारं लिङ्गमुख्येषु चानघ ।
कुर्वतस्तस्य कौन्तेय वन्याश्रमपदो भवेत् ॥ ११

मर्दनं सर्वराष्ट्राणां शिक्षार्थं राजसत्तम ।
कुर्वतः पुरुषव्याघ्र वन्याश्रमपदो भवेत् ॥ १२

1. ख—अर्धद्वयं नास्ति

वेदाध्ययननित्यत्वं क्षमाऽथाचार्यपूजनम् ।
तथोपाध्यायशुश्रूषा ब्रह्माश्रमपदो भवेत् ॥ १३

आह्निकाञ्जपमानस्य देवान् पूजयतस्सदा ।
धर्मेण पुरुषव्याघ्र वन्याश्रमपदो भवेत् ॥ १४

वानप्रस्थेषु विप्रेषु त्रैविद्येषु च भारत ।
प्रयच्छतोऽर्थान् विपुलान् वन्याश्रमपदो भवेत् ॥ १५

मृत्युर्वा रक्षणं वेति यस्य राज्ञो विनिश्चयः ।
प्राणद्यूते व्यवस्थाप्य ब्रह्माश्रमपदो भवेत् ॥ १६

अजिह्ममशठं मार्गं वर्तमानस्य भारत ।
सर्वदा सर्वभूतेषु ब्रह्माश्रमपदो भवेत् ॥ १७

सर्वभूतेष्वनुक्रोशं कुर्वतस्तव भारत ।
[1]आनृशंस्ये प्रवृत्तस्य नियतः पुण्यसञ्चयः ॥ १८

बालवृद्धेषु कौरव्य सर्वावस्थं युधिष्ठिर ।
अनुक्रोशक्रिया पार्थ धर्म एव सनातनः ॥ १९

बालातुरेषु भूतेषु परित्राणं कुरूद्वह ।
शरणागतेषु भूतेषु परं कारुण्यमाचर ॥ २०

भरणं सर्वभूतानां रक्षणं चापि सर्वशः ।
अर्हपूजात्मपूजां च कुर्वन् गार्हस्थ्यमावसेत् ॥ २१

---

1. अ-क-घ—अर्धद्वयं नास्ति

ज्येष्ठानुज्येष्ठपत्नीनां भ्रातॄणां पुत्रनप्तृणाम् ।
निग्रहानुग्रहौ पार्थ गार्हस्थ्यममितं तपः ॥ २२

साधूनामर्चनीयानां पूजासु विदितात्मनाम् ।
पालनं पुरुषव्याघ्र गृहाश्रमपदो भवेत् ॥ २३

आश्रमस्थानि सर्वाणि यस्य वेश्मनि भारत ।
भुञ्जते विपुलं भोज्यं तद्गार्हस्थ्यं युधिष्ठिर ॥ २४

यस्स्थितः पुरुषो धर्मे धात्रा सृष्टे यथार्थवत् ।
आश्रमाणां स सर्वेषां फलमाप्नोत्यनुत्तमम् ॥ २५

यस्मिन् न नश्यति गुणः कौन्तेय पुरुषे सदा ।
आश्रमस्थं तमप्याहुर् नरश्रेष्ठं युधिष्ठिर ॥ २६

स्थानमानं वयोमानं कुलमानं तथैव च ।
कुर्वन् वसति [1]सर्वेषु ह्याश्रमेषु युधिष्ठिर ॥ २७

देशधर्मांश्च कौन्तेय कुलधर्मांस्तथैव च ।
पालयन् पुरुषव्याघ्र राजा भवति सोऽश्रमी ॥ २८

कुलेऽतिभूतिं भूतानाम् उपहारानथापि च ।
अर्हयन् पुरुषव्याघ्र साधूनां च सदाश्रमे ॥ २९

देशधर्मकृतं चापि यो धर्मं प्रत्यवेक्षते ।
सर्वलोकस्य कौन्तेय राजा भवति सोऽश्रमी ॥ ३०

1. क-ख-ब—धर्मेषु

ये धर्मकुशला लोके धर्मं कुर्वन्ति भारत ।
पालिता यस्य विषये पादांशस्तस्य भूपतेः ॥ ३१

धर्मारामान् धर्मपरान् ये न रक्षन्ति मानवान् ।
पार्थिवाः पुरुषव्याघ्र तेषां पापं हरन्ति ते ॥ ३२

ये च रक्षासहायास्स्युः पार्थिवानां युधिष्ठिर ।
ते चैवांशहरास्सर्वे धर्मे परकृतेऽनघ ॥ ३३

सर्वाश्रमपदेष्वाहुर् गार्हस्थ्यं दीप्तनिर्णयम् ।
पावनं पुरुषव्याघ्र यद्वयं पर्युपास्महे ॥ ३४

आत्मोपमस्तु भूतेषु यो वै भवति मानवः ।
न्यस्तदण्डो जितक्रोधस् स प्रेत्य लभते सुखम् ॥ ३५

धर्मोच्छ्रिता सत्यजला शीलयष्टिर्दमध्वजा ।
त्यागवाताध्वगा शीघ्रा नौस्तया सन्तरिष्यति ॥ ३६

यदा सर्वत्र निर्मुक्तः कामो नास्य हृदि स्थितः ।
यदा सत्यान्वितो वृत्तैस् तदा ब्रह्म समश्नुते ॥ ३७

सुप्रसन्नस्तु भावेन योगेन च नराधिप ।
धर्मं पुरुषशार्दूल प्राप्स्यसे पालने रतः ॥ ३८

वेदाध्ययनशीलानां विप्राणां साधुकर्मणाम् ।
पालने यत्नमातिष्ठ सर्वलोकस्य चानघ ॥ ३९

यं वने चरते धर्मम् आश्रमेषु नराधिप ।

रक्षया शतभागेन तद्धर्मं प्राश्नुते नृपः ॥ ४०

एष ते विविधो धर्मः पाण्डवश्रेष्ठ कीर्तितः ।
युधिष्ठिर त्वमेतं वै पूर्वं दृष्टं सनातनम् ॥ ४१

चातुराश्रममेकाग्रं चातुर्वर्ण्यं च पाण्डव ।
धर्मं पुरुषशार्दूल प्राप्स्यसे पालने रतः ॥ ४२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥
॥ ८६ ॥ राजधर्मपर्वणि एकविंशोऽध्यायः ॥ २१ ॥
[ अस्मिन्नध्याये ४२ श्लोकाः ]

## ॥ एकषष्टितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति लोकस्य सराजकत्वाराजकत्वाभ्यां गुणदोषनिरूपणम् ॥

युधिष्ठिरः—

चातुराश्रम्यमुक्तं मे चातुर्वर्ण्यं तथैव च ।
राष्ट्रस्य यत् कृत्यतमं तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

राष्ट्रस्य यत् कृत्यतमं राज्ञ एवाभिषेचनम् ।
अनिन्द्रमबलं राष्ट्रं दस्यवोऽभिभवन्त्युत ॥ २

अराजकेषु राष्ट्रेषु न धर्मो व्यवतिष्ठते ।

परस्परं च खादन्ते सर्वथा धिगराजकम् ॥ ३
इन्द्रमेव प्रणमते यद्राजानमिति श्रुतिः ।
यथैवेन्द्रस्तथा राजा सम्पूज्यो भूतिमिच्छता ॥ ४
नाराजकेषु राष्ट्रेषु वस्तव्यमिति वैदिकम् ।
नाराजकेषु राष्ट्रेषु हव्यं वहति पावकः ॥ ५
अथ चेदभिवर्तेत राज्यार्थं बलवत्तरः ।
अराजकाणि राष्ट्राणि हतराज्यानि वा पुनः ॥ ६
प्रत्युद्गम्याभिपूज्यस्स्याद् एतदत्र सुमन्त्रितम् ।
न हि राज्यान् प्राप्ततरम् अस्ति किञ्चिदराजकात् ॥ ७
स चेत् समनुपश्येत समग्रं कुशलं भवेत् ।
बलवान् वै प्रकुपितः कुर्यान्निश्शेषतामिह ॥ ८
भूयांसं लभते क्लेशं या गौर्भवति दुर्दुघा ।
अथ वा सुदुघा या गौस् तां नैव विनयन्त्यपि ॥ ९
यदतप्तं प्रणमते न तत् सन्तापयन्त्युत ।
यत् स्वयं नमते दारु नैव तन्नमयन्त्यपिं ॥ १०
एतयोपमया धीरस् सन्नमेत बलीयसे ।
इन्द्राय स प्रणमते नमते यो बलीयसे ॥ ११
तस्माद्राजैव कर्तव्यस् सततं भूतिमिच्छता ।
न धनार्थो न दारार्थस् तेषां येषामराजकम् ॥ १२

ह्रियते हि चरन् पापं परवित्तमराजके ।
यदस्य तद्धरन्त्यन्ये तदा राजानमिच्छति ॥ १३

पापा ह्यपि सदा क्षेमं न लभन्ते कथञ्चन ।
एकस्य तु द्वौ हरतो द्वयोश्च बहवोऽपरे ॥ १४

अदासः क्रियते दासो ह्रियन्ते च बलात् स्त्रियः ।
एतस्मात् कारणाद्देवाः प्रजापालं प्रचक्रिरे ॥ १५

राजा चेन्न भवेल्लोके पृथिव्या दण्डधारकः ।
जले मत्स्यानिवाभक्ष्यन् दुर्बलं बलवत्तराः ॥ १६

अराजकाः प्रजाः पूर्वं विनेशुरिति नश्श्रुतम् ।
परस्परं भक्षयन्तो मत्स्या मत्स्यानिवाबलान् ॥ १७

तास्समेत्य मिथश्चक्रुस् समयानिति नश्श्रुतम् ॥ १७॥

यः क्रूरो दण्डपरुषो यश्च स्यात् पारदारिकः ।
यश्च नस्समयं भिन्द्यात् त्याज्या नस्तादृशा इति ॥ १८॥

विश्वासनार्थं सर्वेषां वर्णानामविशेषतः ।
तास्तथा समयं कृत्वा समयेनावतस्थिरे ॥ १९॥

सहितास्तास्समाजग्मुर् असुखार्ताः पितामहम् ।
अनीश्वरा विनश्यामो भगवन्नीश्वरं दिश ॥ २०॥

सम्भूय यं पूजयेम यश्च नः परिपालयेत् ।

ताभ्यो मतुं व्यादिदेश मनुर्नाभिननन्द ताः ॥ २१॥

मनुः—

बिभेति कर्मणः क्रूराद् राज्यं हि भृशदुष्करम् ।
विशेषतो मनुष्येषु मिथ्यावृत्तेषु नित्यदा ॥ २२॥

भीष्मः—

तमब्रुवन् प्रजा मा भैर् विधास्यामो धनं तव ।
पशूनामपि पञ्चांशं हिरण्यानां तथैव च ॥ २३॥

धान्यस्य दशमं भागं दद्म ते कोशवर्धनम् ॥ २४

मुख्येन शस्त्रपत्रेण ये मनुष्याः प्रधानतः ।
भवन्तं तेऽनुयास्यन्ति महेन्द्रमिव देवताः ॥ २५

स त्वं जातबलो राजन् दुष्प्रधर्षः प्रतापवान् ।
सुखे धास्यसि नस्सर्वान् कुबेर इव नैर्ऋतान् ॥ २६

यं च धर्मं चरिष्यन्ति प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य धर्मस्य त्वत्संस्थं नो भविष्यति ॥ २७

तेन धर्मेण महता सुखलब्धेन भावितः ।
पाह्यस्मान् सर्वतो राजन् देवानिव शतक्रतुः ॥ २८

विजयं याहि निर्याहि प्रतपन् रश्मिमानिव ।
मानं विधम शत्रूणां धर्मं जनय नस्सदा ॥ २९

स निर्ययौ महातेजा बलेन महता वृतः ।

महाभिजनसम्पन्नस् तेजसा प्रज्वलन्निव ॥ ३०

तस्य तां महिमां दृष्ट्वा महेन्द्रस्येव देवताः ।
अथ तत्रासिरे सर्वे स्वे स्वे धर्मे दधुर्मनः ॥ ३१

वर्णिनश्चाश्रमाश्चैव म्लेच्छास्सर्वे च दस्यवः ॥ ३१॥

ततो महीं परिययौ पर्जन्य इव वृष्टिमान् ।
शमयन् सर्वपापान् स स्वकर्मसु च योजयन् ॥ ३२॥

एवं ये भूतिमिच्छेयुः पृथिव्यां मानवाः क्वचित् ।
कुर्यू राजानमेवाग्रे प्रजानुग्रहकारणात् ॥ ३३॥

नमस्येयुश्च त भक्त्या शिष्या इव गुरुं सदा ।
देवा इव सहस्राक्षं नरा राजानमन्तिकात् ॥ ३४॥

सत्कृतं स्वजनेनेह परोऽपि बहुमन्यते ।
स्वजनेन त्ववज्ञातं परे परिभवन्त्युत ॥ ३५॥

राज्ञः परैः परिभवस् सर्वेषामसुखावहः ॥ ३६

तस्मा[1]च्छत्रं च पत्रं च वासांस्याभरणानि च ।
भोजनानि च पानानि राज्ञे दद्युर्गृहाण्युत ॥ ३७

आसनान्यथ शय्याश्च सर्वोपकरणानि च ॥ ३७॥

गुप्तात्मा स्याद् दुराधर्षस् स्मितपूर्वाभिभाषिता ।

---

1. ख—च्छत्रं

आभाषितश्च मधुरं प्रत्याभाषेत मानवान् ॥ ३८॥

कृतज्ञो दृढभक्तिस्स्यात् संविभागी जितेन्द्रियः ।
ईक्षितः प्रतिवीक्षेत मृदु चर्जु च वल्गु च ॥ ३९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥
॥ ८६ ॥ राजधर्मपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
[अस्मिन्नध्याये ३९॥ श्लोकाः]

---

## ॥ द्विषष्टितमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति वसुमनसे बृहस्पत्युक्तराजगुणानुवर्णनम् ॥

---

युधिष्ठिरः—

किमाहुर्दैवतं विप्रा राजानं भरतर्षभ ।
मनुष्याणामधिपतिं तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
बृहस्पतिं वसुमना यथा पप्रच्छ भारत ॥ २

राजा वसुमना नाम कौसल्यो धीमतां वरः ।
महर्षिं परिपप्रच्छ कृतप्रज्ञो बृहस्पतिम् ॥ ३

सर्वं वैनयिकं कृत्वा विनयज्ञो बृहस्पतिम् ।

दक्षिणानन्तरो भूत्वा प्रणम्य विधिपूर्वकम् ॥ ४

विधिं पप्रच्छ राज्यस्य सर्वलोकहितं परम् ।

प्रजानां हितमन्विच्छन् धर्म[1]मूलं विशां पते ॥ ५

वसुमनाः—

केन भूतानि वर्धन्ते क्षयं गच्छन्ति केन वा ।

कमर्चन्तो महाभागास् सुखमक्षय्यमाप्नुयुः ॥ ६

एतन्मे शंस देवर्षे धर्मकामार्थसंशयम् ॥ ६॥

भीष्मः—

एवं पृष्टो महाप्राज्ञः कौसल्येनामितौजसा ।

राजसत्कारमव्यग्रो राज्यस्य च विवर्धनम् ॥ ७॥

दण्डनीतिं समाश्रित्य शशंसास्मै बृहस्पतिः ॥ ८

बृहस्पतिः—

राजमूलो महाराज धर्मो लोकस्य लक्ष्यते ।

प्रजा राजभयादेव न खादन्ति परस्परम् ॥ ९

राजा ह्येवाखिलं लोकं समुदीर्णं समुत्सुकम् ।

प्रसादयति धर्मेण प्रसाद्य च विरोचते ॥ १०

यथा ह्यनुदये राजन् भूतानि शशिसूर्ययोः ।

अन्धे तमसि मज्जेर[2]न्नगोपाः पशवो यथा ॥ ११

---

1. अ—शीलं

2. ख—न्नपश्यन्तः परस्परम्

यथा चानुदके मत्स्यान् आददाना विहङ्गमाः ।
विहरेयुर्यथाकामम् अभिसृत्य पुनः पुनः ॥ १२

विमथ्यातिक्रमेयुश्च निहन्युश्च परस्परम् ।
अभावमचिरेणैव गच्छेयुर्नात्र संशयः ॥ १३

एवमेव विना राज्ञा विनश्येयुरिमाः प्रजाः ।
अन्धे तमसि मज्जेरन्नगोपाः पशवो यथा ॥ १४

हरेयुर्बलवन्तो हि दुर्बलानां परिग्रहान् ।
हन्युर्व्यायच्छमानांश्च राजा यदि न पालयेत् ॥ १५

ममेदमिति लोकेऽस्मिन् न भवेत् स्वपरिग्रहः ।
न दारा न च पुत्रस्स्यान्न धनं न परिग्रहः ॥ १६

विधिलोपः प्रवर्तेत यदि राजा न पालयेत् ॥ १६॥

यानं वस्त्राण्यलङ्कारान् रत्नानि विविधानि च ।
हरेयुस्सहसा पापा यदि राजा न पालयेत् ॥ १७॥

मातरं पितरं वृद्धम् आचार्यमतिथिं गुरुम् ।
अश्नीयुरपि हिंस्युर्वा यदि राजा न पालयेत् ॥ १८॥

अन्धांश्च क्रोशतो हिंस्युर् लोकोऽयं [1]दस्युवद्भवेत् ।
[2]पतेद्बहुविधं राज्यं यदि राजा न पालयेत् ॥ १९॥

---

1. घ—दस्युसाद्
2. अ—नासीदमर्थम्

पतेद्बहुविधं शस्त्रं बहुधा धर्मचारिषु ।
अधर्मः प्रगृहीतस्स्याद् यदि राजा न पालयेत् ॥ २०॥

[1]वधबन्धपरिक्लेशो नित्यमर्थवतां भवेत् ।
ममत्वं च न विन्देयुर् यदि राजा न पालयेत् ॥ २१॥

न योनिपोषो वर्तेत न कृषिर्न वणिक्पथः ।
मज्जेद्धर्मस्त्रयी न स्याद् यदि राजा न पालयेत् ॥ २२॥

न यज्ञास्सम्प्रवर्तेरन् विधिवत् स्वाप्तदक्षिणाः ।
न विवाहास्समाजो वा यदि राजा न पालयेत् ॥ २३॥

न वृषास्सम्प्रपद्येरन् न मथ्येरंश्च [2]गर्भराः ।
घोषाः प्रणाशं गच्छेयुर् यदि राजा न पालयेत् ॥ २४॥

त्रस्तमुद्विग्नहृदयं हाहाभूतमचेतनम् ।
क्षणेन विनशेत् सर्वं यदि राजा न पालयेत् ॥ २५॥

[3]न संवत्सरसत्राणि तिष्ठेयुरकुतोभयाः ।
विधिवद्दक्षिणावन्ति यदि राजा न पालयेत् ॥ २६॥

ब्राह्मणाश्चतुरो वेदान् नाधीयीरंस्तपस्विनः ।
विद्यास्नाता व्रतस्नाता यदि राजा न पालयेत् ॥ २७॥

न भवेद्धर्मसंसेवी मोहविप्रहतो जनः ।

---

1. अ-क-घ—नास्तीदमर्धद्वयम् 2. क—गर्गराः
3. अ—अर्धचतुष्टयं नास्ति

कर्ता स्वस्थेन्द्रियो गच्छेद् यदि राजा न पालयेत् ॥ २८॥

हस्तो हस्तं परिमृशेद् भिद्येरन् सर्वसेतवः ।
भयार्तं विद्रवेत् सर्वं यदि राजा न पालयेत् ॥ २९॥

अनयास्सम्प्रवर्तेरन् भवेद्वै वर्णसङ्करः ।
दुर्भिक्षमाविशेद्राष्ट्रं यदि राजा न पालयेत् ॥ ३०॥

विवृत्य हि यथाकामं गृहद्वाराणि शेरते ।
मनुष्या रक्षिता राज्ञा समन्तादकुतोभयाः ॥ ३१॥

नाक्रुष्टं सहते कश्चित् कुतो हस्तस्य लङ्घनम् ।
यदि राजा मनुष्येषु त्राता भवति धार्मिकः ॥ ३२॥

स्त्रियश्च पुरुषा मार्गं सर्वालङ्कारभूषिताः ।
निर्भयाः प्रतिपद्यन्ते यदि रक्षति भूमिपः ॥ ३३॥

धर्ममेव प्रपद्यन्ते न हिंसन्ति परस्परम् ।
अनुगृह्णन्ति चान्योन्यं यदा रक्षति भूमिपः ॥ ३४॥

यजन्ते च महायज्ञैस् त्रयो वर्णाः पृथग्विधाः ।
युक्ताश्चाधीयते वेदान् यदा रक्षति भूमिपः ॥ ३५॥

वार्तामूलो ह्ययं लोकस् तया वै धार्यते जगत् ।
तत् सर्वं वर्तते सम्यग् यदा रक्षति भूमिपः ॥ ३६॥

यदा राजा धुरं श्रेष्ठाम् आदाय वहति प्रजाः ।

महता [1]बलयोगेन तदा लोको न सीदति ॥ ३७॥

यस्याभावेन भूतानाम् अभावस्स्यात् समन्ततः ।
भावे च भावो नित्यं स्यात् कस्तं न प्रतिपूजयेत् ॥ ३८॥

तस्य यो वहते भारं सर्वलोकसुखावहम् ।
तिष्ठेत् प्रियहिते राज्ञ उभौ लोकाविमौ जयेत् ॥ ३९॥

यस्तस्य पुरुषः पापं मनसाऽप्यनुचिन्तयेत् ।
असंशयमिह क्लिष्टः प्रेत्यापि नरकं व्रजेत् ॥ ४०॥

न हि जात्ववमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ ४१॥

कुरुते पञ्चरूपाणि कालयुक्तानि यस्सदा ।
भवत्यग्निस्तथाऽऽदित्यो मृत्युर्वैश्रवणो यमः ॥ ४२॥

यदा ह्यासीदतः पापान् दहत्युग्रेण तेजसा ।
मिथ्योपचरितो राजा तदा भवति पावकः ॥ ४३॥

यदा पश्यति चारेण सर्वभूतानि भूमिपः ।
क्षेमं च कृत्वा व्रजति तदा भवति भास्करः ॥ ४४॥

अशुचींस्तु यदा क्रुद्धः क्षिणोति शतशो नरान् ।
सपुत्रपौत्रान् सामात्यांस् तदा भवति सोऽन्तकः ॥ ४५॥

---

1. ख—बलवेगेन

यदा त्वधार्मिकान् सर्वांस् तीक्ष्णैर्दण्डैर्नियच्छति ।
धार्मिकांश्चानुगृह्णाति भवत्यथ यमस्तदा ॥ ४६॥

यदा तु धनधाराभिस् तर्पयत्युपकारिणम् ।
आच्छिनत्ति च वित्तानि विविधान्यपकारिणाम् ॥ ४७॥

श्रियं ददाति कस्मैचित् कस्माच्चिदपकर्षति ।
तदा वैश्रवणो राजा लोके भवति भूमिपः ॥ ४८॥

तस्योपदेशे स्थातव्यं दक्षेणाक्लिष्टकर्मणा ।
धर्ममाकाङ्क्षता लोके ईश्वरस्यानसूयता ॥ ४९॥

न हि राज्ञः प्रतीपानि कुर्वन् सुखमवाप्नुयात् ।
पुत्रो भ्राता वयस्यो वा यद्यप्यात्मसमो भवेत् ॥ ५०॥

कुर्यात् कृष्णगतिश्शेषं ज्वलितोऽनिलसारथिः ।
न तु राज्ञाऽभिपन्नस्य शेषः क्वचन [1]दृश्यते ॥ ५१॥

तस्य सर्वाणि रक्ष्याणि दूरतः परिवर्जयेत् ।
मृत्योरिव जुगुप्सेत राजस्वहरणान्नरः ॥ ५२॥

वध्येदभिमृशन् सद्यो मृगः कूटमिव स्पृशन् ।
आत्मस्वमिव संरक्षेद् राजस्वमिह बुद्धिमान् ॥ ५३॥

महान्तं नरकं घोरम् अप्रतिष्ठमचेतसः ।
पतन्ति चिररात्राय राजवित्तापहारिणः ॥ ५४॥

---

1. अ—विद्यते

राजा भोजो विराट् सम्राट् क्षत्रियो भूपतिर्नृपः ।
य एभिस्स्तूयते शब्दैः कस्तं नार्चितुमर्हति ॥ ५५॥

तस्माद्बुभूषुर्नियतो जितात्मा संयतेन्द्रियः ।
मेधावी धृतिमान् दक्षस् संश्रयेत महीपतिम् ॥ ५६॥

[1]कृतज्ञं प्राज्ञमक्षुद्रं दृढभक्तिं जितेन्द्रियम् ।
धर्मनित्यं स्थितं [2]स्थाने मन्त्रिणं पूजये[3]न्नरः ॥ ५७॥

दृढभक्तिं [4]जितप्रज्ञं धर्मज्ञं संयतेन्द्रियम् ।
शूरमक्षुद्रकर्माणं प्रसिद्धं जनमाश्रयेत् ॥ ५८॥

राजा प्रगल्भं पुरुषं करोति
राजा भृशं बृंहयते मनुष्यम् ।
राजाभिपन्नस्य कुतस्सुखानि
राजाऽभ्युपेतं सुखिनं करोति ॥ ५९॥

राजा प्रजानां प्रथमं शरीरं
प्रजाश्च राज्ञोऽप्रतिमं शरीरम् ।
राज्ञा विहीना न भवन्ति देशा
देशैर्विहीना न नृपा भवन्ति ॥ ६०॥

राजा प्रजानां हृदयं गरीयो
राजा प्रतिष्ठा सुखमुत्तमं च ।

1. घ—क्षतज्ञं
2. ख-घ—ज्ञाने
3. ख—न्नृपः
4. ख—कृत

यमाश्रिता लोकमिमं परं च
जयन्ति सम्यक् पुरुषा नरेन्द्र ॥ ६१॥

नराधिपश्चाप्यनुशिष्य मेदिनीं
दमेन सत्येन च सौहृदेन ।
महद्भिरिष्ट्वा क्रतुभिर्महायशास्
त्रिविष्टपे स्थानमुपैति [1]सत्कृतः ॥ ६२॥

भीष्मः—

स एवमुक्तोऽङ्गिरसा कौसल्यो राजसत्तमः ।
प्रयत्नात् कृतवान् वीरः प्रजापालनमुत्तमम् ॥ ६३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥
॥ ८६ ॥ राजधर्मपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
[अस्मिन्नध्याये ६३॥ श्लोकाः]

1. ख—सत्कृतम्

## ॥ त्रिषष्टितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति राजनीतिकथनम् ॥ १ ॥ भीष्मेण युधिष्ठिरं प्रति कृतादियुगचतुष्टयगुणनिरूपणम् ॥ २ ॥

युधिष्ठिरः—

पार्थिवेन विशेषेण किं कार्यमवशिष्यते ।
कथं रक्ष्या जनपदाः कथं वध्याश्च शत्रवः ॥ १

कथं चारान् प्रयुञ्जीत वर्णान् विश्वासयेत् कथम् ।
कथं भृत्यान् कथं दारान् कथं पुत्रांश्च भारत ॥ २

भीष्मः—

राजवृत्तं महाराज शृणुष्वावहितोऽखिलम् ।
यत् कार्यं पार्थिवेनादौ पार्थिव[1]प्रकृतेन वा ॥ ३

आत्मा जेयस्सदा राज्ञा ततो जेयाश्च शत्रवः ।
अजितात्मा नरपतिर् विजयेत कथं रिपून् ॥ ४

एतावानात्मविजयः पञ्चवर्गविनिग्रहः ।
जितेन्द्रियो नरपतिर् बाधितुं शक्नुयाद्रिपून् ॥ ५

न्यसेच्च गुल्मान् दुर्गेषु सन्धौ च कुरुनन्दन ।
नगरोपवने चैव पुरोद्याने तथैव च ॥ ६

1. अ—प्राकृतेन

संस्थानेषु च सर्वेषु [1]पुटेषु नगरस्य च ।
मध्ये च नरशार्दूल तथा राजनिवेशने ॥ ७

प्रणिधींश्च ततः कुर्याज् जडान्धबधिराकृतीन् ।
पुरुषान् परीक्षितान् [2]राज्ञः क्षुत्पिपासाश्रमक्षमान् ॥ ८

अमात्येषु च सर्वेषु मित्रेषु त्रिविधेषु च ।
पुत्रेषु च महाराज प्रणिदध्यात् समाहितः ॥ ९

पुरे जनपदे चैव तथा सामन्तराजसु ।
यथा न विद्युरन्योन्यं प्रणिधेयास्तथा हि ते ॥ १०

चारांश्च विद्यात् प्रहितान् परेण भरतर्षभ ।
आपणेषु विवाहेषु समवायेषु वीथिषु ॥ ११

आरामेषु तथोद्याने पण्डितानां समागमे ।
[3]वेशेषु चत्वरे चैव सभास्वावसथेषु च ॥ १२

एवं विहन्याच्चारेण पर[4]द्वारं विचक्षणः ।
चारे च विहतं सर्वं हतं भवति भारत ॥ १३

यदा तु हीनं नृपतिर् विद्यादात्मानमात्मना ।
अमात्यैस्सह सम्मन्त्र्य सन्धिं कुर्याद् बलीयसा ॥ १४

विद्वांसः क्षत्रिया वैश्या ब्राह्मणाश्च बहुश्रुताः ।

---

1, ब—पुरेषु नगरस्य वा 2. क-ब—प्राज्ञः
3. ब—देशेषु 4. ख—द्वारा ब—चारं

दण्डनीतौ तु निष्पन्ना मन्त्रिणः पृथिवीपते ॥ १५

प्रष्टव्यो ब्राह्मणः पूर्वं नीतिशास्त्रस्य तत्त्ववित् ।
पश्चात् पृच्छेत भूपालः क्षत्रियं नीतिकोविदम् ॥ १६

वैश्यशूद्रौ तथा भूयश् शास्त्रज्ञौ हितकारिणौ ॥ १६॥

अज्ञायमानो हीनस्तु सन्धिं कुर्यात् परेण वै ।
लिप्सेद्वा कञ्चिदेवार्थं त्वरमाणो विचक्षणः ॥ १७॥

गुणवन्तो महोत्साहा धर्मज्ञास्साधवश्च ये ।
सन्दधीत नृपस्तैश्च राष्ट्रं धर्मेण पालयन् ॥ १८॥

उच्छिद्यमानमात्मानं ज्ञात्वा राजा महामतिः ।
पूर्वापकारिणो हन्याल्लोकद्विष्टांश्च सर्वशः ॥ १९॥

यो नोपकर्तुं शक्नोति नापकर्तुं महीपतेः ।
अशक्यरूपश्चोद्धर्तुम् उपेक्षेत् तादृशं नृपः ॥ २०॥

यात्रां यायादविज्ञातम् अनाक्रान्तमनन्तरम् ।
व्यासक्तं च प्रमत्तं च दुर्बलं च विचक्षणः ॥ २१॥

यात्रामाज्ञापयेद्वीरः कल्यः पुष्टबलस्सुखी ।
पूर्वं कृत्वा विधानं च यात्रायां नगरे तथा ॥ २२॥

[1]अन्तःपुरे च राष्ट्रे च अध्यक्षेषु च सर्वशः ।
न च वध्यो भवेदस्य नृपो यश्च न वीर्यवान् ॥ २३॥

1. अ-ख—नास्तीदमर्धम्

हीनश्च बलवीर्याभ्यां [1]कर्शयेत् तं परं रिपुम् ॥ २४
राष्ट्रं च पीडयेत् तस्य शस्त्राग्निविषमूर्च्छनैः ।
अमात्यवल्लभानां च विवादांस्तस्य कारयेत् ॥ २५
वर्जनीयं सदा युद्धं राज्यकामेन धीमता ।
उपायैस्त्रिभिरादानम् अर्थस्याह बृहस्पतिः ॥ २६
सान्त्वेनानुप्रदानेन भेदेन च नराधिप ।
यमर्थं शक्नुयात् प्राप्तुं तेन तुष्येत पण्डितः ॥ २७
आददीत बलिं चैव प्रजाभ्यः कुरुनन्दन ।
षड्भागममितप्रज्ञस् तासामेवाभिगुप्तये ॥ २८
दशाधर्म[2]गतेभ्यो यद् वसु बह्वल्पमेव वा ।
तन्नाददीत सहसा पौराणां रक्षणाय वै ॥ २९
यथा पुत्रास्तथा पौरा द्रष्टव्यास्ते न संशयः ।
भक्तिश्चैषु न कर्तव्या व्यवहारप्रदर्शने ॥ ३०
सूतं च विन्यसेद्राजा प्राज्ञं सर्वार्थदर्शिनम् ।
व्यवहारेषु सततं तत्र राज्यं प्रतिष्ठितम् ॥ ३१
आकरे लवणे शुल्के बले नागवने तथा ।
न्यसेदमात्यान् नृपतिस् स्वाप्तान् वा पुरुषान् हितान् ॥ ३२
सम्यग्दण्डधरो नित्यं राजा धर्ममवाप्नुयात् ।

1. क-ख-घ—कर्शयन्तं 2. ख—हृतेभ्यो

नृपस्य सततं धर्मस् सम्यग्दण्डः प्रशस्यते ॥ ३३
वेदवेदाङ्गवित् प्राज्ञस् सुतपस्वी नृपो भवेत् ।
दानशीलश्च सततं यज्ञशीलश्च भारत ॥ ३४

एते गुणास्समस्तास्स्युर् नृपस्य सततं [1]स्थिताः ।
व्यवहारस्य लोपेन कुतस्स्वर्गः कुतो जयः ॥ ३५

यदा तु पीडितो राजा भवेद्राज्ञा बलीयसा ।
त्रिधा तु कृत्वा मित्राणि विधानमुपकल्पयेत् ॥ ३६

घोषान् न्यसेत मार्गेषु ग्रामानुत्थापयेदपि ।
प्रवेशयेच्च तान् सर्वाञ् शाखानगरकेष्वपि ॥ ३७

ये दुर्गाश्चैव गुप्ताश्च देशास्तेषु प्रवेशयेत् ।
धनिनो बलमुख्यांश्चेत् सान्त्वयित्वा पुनः पुनः ॥ ३८

सस्याभिहारं कुर्वीत स्वयमेव नराधिपः ।
असम्भवे प्रवेशस्य दाहयेदग्निना भृशम् ॥ ३९

क्षेत्रस्थेषु च सर्वेषु शत्रोरुपजपेन्नरान् ।
विनाशयेद्वा तत् सर्वं बलेनाथ स्वकेन वै ॥ ४०

नदीमार्गेषु च तथा सङ्क्रमानवसादयेत् ।
जलं निस्रावयेत् सर्वम् अनिस्राव्यं च दूषयेत् ॥ ४१

तदात्वेनायतीभिश्च निर्वपेद्भूम्यनन्तरम् ।

1. अ—स्थिराः

प्रतिघातं परस्यादौ युद्धकालेऽप्युपस्थिते ॥ ४२

दुर्गाणां त्वभितो राजा मूलच्छेदं प्रयोजयेत् ।
सर्वेषां क्षुद्रवृक्षाणां चैत्यवृक्षान् [1]विसर्जयेत् ॥ ४३

प्रवृद्धानां द्रुमाणां च शाखां प्रच्छेदयेत् तथा ।
चैत्यानां सर्वथा वर्ज्यम् अपि पत्रस्य पातनम् ॥ ४४

देवाना[2]माश्रमाश्चैत्या यक्षराक्षसभोगिनाम् ।
पिशाचपन्नगानां च गन्धर्वाप्सरसामपि ॥ ४५

रौद्राणां चैव भूतानां तस्मात् तान् परिवर्जयेत् ॥ ४५॥

श्रूयते हि निकुम्भेन सौदासस्य बलं हतम् ।
महेश्वरगणेशेन वाराणस्यां नराधिप ॥ ४६॥

प्रकुण्डं कारयेत् सम्यग् आकाशमवनिं तदा ।
आपूरयेच्च परिखास् स्थाणुनक्रझषाकुलाः ॥ ४७॥

कुलिकद्वारकाणि स्युर् उच्छ्वासार्थे पुरस्य च ।
तेषां च द्वारवद्गुप्तिः कार्या सर्वात्मना भवेत् ॥ ४८॥

द्वारेषु च गुरूण्येव यन्त्राणि स्थापयेत् सदा ।
आरोपयेच्छतघ्नीश्च स्वाधीनाश्चैव कारयेत् ॥ ४९॥

काष्ठानि निर्हरेच्चैव तथा कूपांश्च खानयेत् ।
संशोधयेत् तथा कूपान् कृतान् पूर्वं पयोर्थिभिः ॥ ५०॥

---

1. ख-ध—विवर्जयेत् 2. ख-ध—माश्रया

तृणच्छन्नानि वेश्मानि पङ्केनाथ प्रलेपयेत् ।
निर्वपेच्च तृणं मासे चैत्रे वह्निभयात् पुरा ॥ ५१॥

नक्तमेव च भक्तानि पाचयेत नराधिपः ।
न दिवाऽग्निर्ज्वलेद्गेहे वर्जयित्वाऽग्निहोत्रिणाम् ॥ ५२॥

यथासम्भवशैलानि चेष्टकानि च कारयेत् ।
मृण्मयानि च कुर्वीत ज्ञात्वा देशे बलाबलम् ॥ ५३॥

कर्मारारिष्टशालासु ज्वलेदग्निस्सुरक्षितः ।
गृहाणि च प्रवेश्याथ [1]विचेयस्स्याद्धुताशनः ॥ ५४॥

महादण्डश्च तस्य स्याद् यस्याग्निर्वै दिवा भवेत् ।
प्रघोषयेदथैवं च रक्षणार्थं पुरस्य वै ॥ ५५॥

भिक्षुकांश्च यतींश्चैव क्लीबोन्मत्तान् कुशीलवान् ।
बाह्यान् कुर्यान्नरश्रेष्ठ दोषाय स्युर्हि ते शठाः ॥ ५६॥

चत्वरेष्वथ तीर्थेषु सभास्वावसथेषु च ।
यथार्थवर्णं प्रणिधिं कुर्यात् सर्वत्र पार्थिवः ॥ ५७॥

विशालान् राजमार्गांश्च कारयेत नराधिपः ।
प्रपाश्च विपणीश्चैव यथोद्देशं समादिशेत् ॥ ५८॥

भाण्डागारायुधागारान् धान्यागारांश्च सर्वशः ।
अश्वागारान् गजागारान् बलाधिकरणानि च ॥ ५९॥

---

1. अ-ख—विधेयः

परिघाश्चैवं कौरव्य प्रतोलीसङ्कटानि च ।
न जातु कश्चित् पश्येत गुह्यमेतद्युधिष्ठिर ॥ ६०॥
अथ सन्निचयं कुर्याद् राजा परवलार्दितः ।
तैलं मधु घृतं सस्यम् औषधानि च सर्वशः ॥ ६१॥
अङ्गारकुशमुञ्जानां पालाशशरपर्णिनाम् ।
यवसेन्धनदुग्धानां कारयेत च सञ्चयान् ॥ ६२॥
आयुधानां च सर्वेषां शक्त्यृष्टिप्रासचर्मणाम् ।
सञ्चयानेवमादीनां कारयेत नराधिपः ॥ ६३॥
औषधानि च सर्वाणि मूलानि च फलानि च ।
चतुर्विधांश्च वैद्यान् वै सङ्गृह्णीयाद्विशेषतः ॥ ६४॥
नटाश्च नर्तकाश्चैव मल्ला मायाविनस्तथा ।
शोभयेयुः पुरवरं मोदयेयुश्च सर्वशः ॥ ६५॥
यतश्शङ्का भवेच्चापि भृत्यतो वाऽथ मन्त्रितः ।
पौरेभ्यो नृपतेर्वाऽथ स्वाधीनान् कारयेत तान् ॥ ६६॥
कृते कर्मणि राजा तान् पूजयेद्धनसञ्चयैः ।
माननेन यथार्हेण सान्त्वेन विविधेन च ॥ ६७॥
निर्वेदयित्वा तु परं हत्वा वा कुरुनन्दन ।
गतानृण्यो भवेद्राजा यथा शास्त्रेषु दर्शनम् ॥ ६८॥
राज्ञा सप्तैव रक्ष्याणि तानि चैव निबोध मे ॥ ६९

आत्माऽमात्यश्च कोशश्च दण्डो मित्राणि चैव ह ।
तथा जनपदश्चैव पुरं च कुरुनन्दन ॥ ७०
एतत् सप्तात्मकं राज्यं परिपाल्यं प्रयत्नतः ॥ ७०॥

षाड्गुण्यं च त्रिवर्गं च त्रिवर्गपरमं तथा ।
यो वेत्ति पुरुषव्याघ्र स भुङ्क्ते पृथिवीमिमाम् ॥ ७१॥

षाड्गुण्यमिति यत् प्रोक्तं तन्निबोध युधिष्ठिर ।
सन्धायासनमित्येव यात्रासन्धानमेव च ॥ ७२॥

विगृह्यासनमित्येवं यात्रां सम्परिगृह्य च ।
द्वैधीभावस्तथाऽन्येषां संश्रयोऽथ परस्य च ॥ ७३॥

त्रिवर्गश्चापि यः प्रोक्तस् तमिहैकमनाश्शृणु ॥ ७४

क्षयस्स्थानं च वृद्धिश्च त्रिवर्गः परमस्तथा ।
धर्मश्चार्थश्च कामश्च त्रिवर्गो वै सनातनः ॥ ७५

मन्त्रश्चैव प्रभावश्च उत्साहश्चैव तान्त्रिकः ।
शक्तित्रयं समाख्यातं त्रिवर्गस्य ततः परम् ॥ ७६

कार्यं च कारणं चैव कर्ता च परिकीर्तितः ।
एतत् परतरं विद्युस् त्रिवर्गादपि भारत ॥ ७७

सर्वेषां च क्षये राजन् यस्त्रिवर्गस्सनातनः ।
सत्त्वं रजस्तमश्चैव त्रिवर्गः कारणं स्मृतम् ॥ ७८

तेनात्यन्तविमुक्तश्च मुक्तः पुरुष उच्यते ॥ ७८॥

कार्यस्य सर्वथा नाशो मोक्ष इत्यभिधीयते ॥ ७९

तेन मोक्षपरश्चैव देवदेवः पितामहः ।
तुष्ट्यर्थस्य त्रिवर्गस्य रक्षामाह नराधिप ॥ ८०

जगतो लौकिकी यात्रा यत्र नित्यं प्रतिष्ठिता ।
धर्मोऽर्थश्चैव कामश्च सेवितव्यास्स्वकालतः ॥ ८१

सेवा धर्मस्य कर्तव्या सततं भूतितत्परैः ।
पुरुषैर्नरशार्दूल तन्मूलास्सर्वथा क्रियाः ॥ ८२

धर्मेण च महीपालश्_ चिरं रक्षति मेदिनीम् ।
यः कश्चिद्धार्मिको राजा स विपन्नोऽपि भूपतिः ॥ ८३

अर्थकामविहीनोऽपि चिरं पालयते महीम् ॥ ८३॥

अस्मिन्नर्थेऽपि द्वौ श्लोकौ गीतावङ्गिरसा स्वयम् ।
यादवीपुत्र भद्रं ते श्रोतुमर्हसि तावपि ॥ ८४॥

कृत्वा [1]कार्याणि धर्मेण सम्यक् सम्पाल्य मेदिनीम् ।
पालयित्वा तथा पौरान् परत्र सुखमेधते ॥ ८५॥

किं तस्य तपसा राज्ञः किञ्च तस्याध्वरैः कृतैः ।
सुपालिताः प्रजा यस्य सर्वधर्मकृदेव सः ॥ ८६॥

1. ख—कर्माणि

श्लोकाश्चोशनसा गीतास् तान् निबोध युधिष्ठिर ॥ ८७

दण्डनीतेश्च यन्मूलं त्रिवर्गस्य च भूपते ।
भार्गवाङ्गिरसं कर्म षोडशाङ्गं च यद्बलम् ॥ ८८

विषं माया च दैवं च पौरुषं चार्थसिद्धये ।
प्रागुदक्प्रवणं दुर्गं समासाद्य महीपते ॥ ८९
त्रिवर्गं यत्र सम्पूर्णम् उपादाय तमुद्वहेत् ॥ ८९॥

षट् पञ्च च विनिर्जित्य दश चाष्टौ च भूपतिः ।
त्रिवर्गैर्दशभिर्युक्तस् सुरैरपि न जीर्यते ॥ ९०॥

न बुद्धिं परिगृह्णीत स्त्रीणां मूर्खजनस्य च ।
दैवोपहतबुद्धीनां ये च [1]वेदैर्विवर्जिताः ॥ ९१॥

न तेषां शृणुयाद्राजा बुद्धिस्तेषां पराङ्मुखी ॥ ९२

स्त्रीप्रधानानि राज्यानि विद्वद्भिर्वर्जितानि च ।
मूर्खामात्यप्रतप्तानि शुष्यन्ते जलबिन्दुवत् ॥ ९३

विद्वांसः प्रथिता ये च ये चाप्तास्सर्वकर्मसु ।
युद्धेषु दृष्टकर्माणस् तेषां च शृणुयान्नृपः ॥ ९४

दैवं पुरुषकारं च त्रिवर्गं च समाश्रितः ।
दैवतानि च विप्रांश्च प्रणम्य विजयी भवेत् ॥* ९५

---

1. क-ख—देवै
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

युधिष्ठिरः—

दण्डनीतिश्च राजा च समस्तौ तावुभावपि ।
तत्र किं कुर्वतस्सिद्धिस् तन्मे ब्रूहि पितामह ॥ ९६

भीष्मः—

माहात्म्यं दण्डनीत्यास्तु साध्यं शब्दैस्सहेतुकैः ।
शृणु मे शंसतो राजन् यथावदिह भारत ॥ ९७

दण्डनीतिस्स्वधर्मेषु चातुर्वर्ण्यं नियच्छति ।
प्रयुक्ता स्वामिना सम्यग् अधर्मेभ्यश्च यच्छति ॥ ९८

चातुर्वर्ण्ये स्वधर्मस्थे मर्यादानामसङ्करे ।
दण्डनीतिकृते क्षेमे प्रजानामकुतोभये ॥ ९९

सोमे प्रयत्नं कुर्वन्ति त्रयो वर्णा यथाविधि ।
तस्मादेव मनुष्याणां सुखं विद्धि समाहितम् ॥ १००

कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो माभूद् राजा कालस्य कारणम् ॥ १०१

दण्डनीत्यां यदा राजा सम्यक् कार्त्स्न्येन वर्तते ।
भवेत् कृतयुगे धर्मो नाधर्मो विद्यते क्वचित् ॥ १०२
सर्वेषामेव वर्णानां नाधर्मे रमते मनः ॥ १०२॥

योगक्षेमाः प्रवर्तन्ते प्रजानां नात्र संशयः ।
वैदिकानि च कर्माणि भवन्त्यधिगुणान्युत ॥ १०३॥

ऋतवश्च सुखास्सर्वे भवन्त्यथ निरामयाः ।
प्रसीदन्ति नराणां च स्वरवर्णमनांसि च ॥ १०४॥

व्याधयो न भवन्त्यत्र नाल्पायुर्दृश्यते नरः ।
विधवा न भवन्त्यत्र नृशंसो नात्र जायते ॥ १०५॥

अकृष्टपच्या पृथिवी भवन्त्योषधयस्तथा ।
त्वक्पत्रफलमूलानि वीर्यवन्ति भवन्ति च ॥ १०६॥

अधर्मो विद्यते नात्र धर्म एव तु केवलः ।
इति कार्तयुगानेतान् गुणान् विद्धि युधिष्ठिर ॥ १०७॥

दण्डनीत्या यदा राजा त्रीनंशाननुवर्तते ।
चतुर्थमंशमुत्सृज्य तदा त्रेता प्रवर्तते ॥ १०८॥

अधर्मस्य चतुर्थांशस् त्रीनंशाननुवर्तते ।
कृष्टपच्यैव पृथिवी भवन्त्योषधयस्तथा ॥ १०९॥

अर्धं त्यक्त्वा यदा राजा नीत्यर्धमनुवर्तते ।
ततस्तु द्वापरं नाम स कालस्सम्प्रवर्तते ॥ ११०॥

अशुभस्य यदा त्वर्धे द्वावंशावनुवर्तते ।
कृष्टपच्यैव पृथिवी [1]भवत्यर्धफला तथा ॥ १११॥

दण्डनीतिं परित्यज्य यदा कार्त्स्न्येन भूपतिः ।
प्रजाः क्लिश्नात्ययोगेन प्रवर्तेत तदा कलिः ॥ ११२॥

1. ख—भवत्यल्प

कलावधर्मो भूयिष्ठो धर्मो भवति न क्वचित् ।
सर्वेषामेव वर्णानां स्वधर्माच्च्यवते मनः ॥ ११३॥

शूद्रा भैक्षेण जीवन्ति ब्राह्मणाः परिचर्यया ।
योगक्षेमस्य नाशाच्च वर्तन्ते [1]वर्णसङ्कराः ॥ ११४॥

वैदिकानि च कर्माणि भवन्ति विगुणान्युत ।
ऋतवो न सुखास्सर्वे भवन्त्यामयिनस्तथा ॥ ११५॥

ह्रसन्ति च मनुष्याणां स्वरवर्णमनांस्युत ।
व्याधयश्च भवन्त्यत्र म्रियन्ते चाशतायुषः ॥ ११६॥

विधवाश्च भवन्त्यत्र नृशंसा जायते प्रजा ।
क्वचिद्वर्षति पर्जन्यः क्वचित् सस्यं प्ररोहति ॥ ११७॥

रसास्सर्वे क्षयं यान्ति यदा नेच्छति भूमिपः ।
प्रजास्संरक्षितास्सम्यग् दण्डनीत्या समाहिताः ॥ ११८॥

राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च ।
युगस्य च चतुर्थस्य राजा भवति कारणम् ॥ ११९॥

कृतस्य करणाद्राजा स्वर्गमत्यन्तमश्नुते ।
त्रेतायाः करणाद्राजा स्वर्गं नात्यन्तमश्नुते ॥ १२०॥

प्रवर्तनाद्द्वापरस्य यथाभागमुपाश्नुते ।
कलेः प्रवर्तनाद्राजा पापमत्यन्तमश्नुते ॥ १२१॥

1. क-घ—सर्वे

ततो वसति दुष्कर्मा नरके शाश्वतीस्समाः ।
प्रजानां कल्मषे मग्नोऽकीर्तिं पापं च विन्दति ॥ १२२॥
योगक्षेमाः प्रवर्तन्ते प्रजानां नात्र संशयः ॥ १२३
दण्डनीतिं पुरस्कृत्य क्षत्रियेण विजानता ।
लिप्सितव्यमलब्धं च लब्धं रक्ष्यं च भारत ॥ १२४
[1]एष एव परो धर्मो यद्राजा दण्डनीतिमान् ॥ १२४॥
तस्माद्धर्मेण कौरव्य प्रजाः पालय नीतिमान् ।
एवंवृत्तः प्रजा रक्षन् स्वर्गं जेतासि दुर्जयः ॥ १२५॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥
॥ ८६ ॥ राजधर्मपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
[अस्मिन्नध्याये १२५॥ श्लोकाः]

---

1. ख—लोकस्य सीमन्तकरी मर्यादा लोकभावनी ।
सम्यङ्नीता दण्डनीतिर् यथा माता यथा पिता ॥
यस्यां भवन्ति भूतानि तद्विद्धि भरतर्षभ ।　　[अधिकः पाठः]

## ॥ चतुष्षष्टितमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति राजनयानुवर्णनम् ॥

युधिष्ठिरः—

केन वृत्तेन वृत्तज्ञ वर्तमानो महीपतिः ।
सुखेनार्थान् सुखोदर्कान् इह च प्रेत्य चाश्नुते ॥ १

भीष्मः—

इयं गुणानां षट्त्रिंशी षट्त्रिंशद्[1]द्विगुणान्विता ।
यान् गुणांस्तु गुणोपेतः कुर्वन् गुणमवाप्नुयात् ॥ २

चरेद्धर्मं नरः कोपं मुञ्चेत् [2]स्नेहं न नास्तिकः ।
अनृशंसश्चरेदर्थं चरेत् काममनुद्धतः ॥ ३

प्रियं ब्रूयान्न कृपणश् शूरस्स्यान्न विकत्थनः ।
दाता नापात्रवर्षी स्यात् प्रगल्भस्स्यादनिष्ठुरः ॥ ४

सन्दधीत न चानार्यैर् विगृह्णीयाच्च शत्रुभिः ।
नानाप्तैश्चारयेच्चारं कुर्यात् कार्यं न लीलया ॥ ५

प्रहरेन्न त्वविज्ञाय हत्वा शत्रून् न शेषयेत् ।
सान्त्वयेन्न च शत्रूंश्च गृह्णीयान्नैव चाक्षिपेत् ॥ ६

सेवेत प्रणयं हित्वा दक्षस्स्यान्न त्वकालवित् ।
क्रोधं कुर्याच्च नाकस्मान्मृदुस्स्यान्नापराधिपु ॥ ७

1. ख-ब—त्रिगुणान्विता 2. ख-घ—कोपं

अर्थान् ब्रूयान्न चासत्सु गुणान् ब्रूयान्न चात्मनः ।
आदद्याच्च न साधुभ्यो नासत्पुरुषमाश्रयेत् ॥ ८

नापरीक्ष्य नयेद्दण्डं न च मन्त्रं प्रकाशयेत् ।
विसृजेन्न च लुब्धेभ्यो विश्वसेन्नापकारिषु ॥ ९

अनीर्ष्यो गुप्तदारस्स्यान्नोग्रस्स्यान्न घृणी नृपः ।
स्त्रीश्चा सेवेत नात्यर्थं मृष्टं भुञ्जीत नाहितम् ॥ १०

अस्तब्धः पूजयेन्मान्यान् गुरून् सेवेदमायया ।
अर्चेद्देवानदम्भेन श्रियमिच्छेदकुत्सिताम् ॥ ११

एवं चरस्व राज्यस्थो यदि श्रेय इहेच्छसि ।
अतोऽन्यथा नरपतिर् भयं गच्छत्यनुत्तमम् ॥ १२

इति सर्वान् गुणानेतान् यथोक्तान् योऽनुवर्तते ।
अनुभूयेह भद्राणि प्रेत्य स्वर्गे महीयते ॥ १३

वैशम्पायनः—

इदं वचश्शान्तनवस्य शुश्रुवान्
युधिष्ठिरः पार्थिवमुख्यसंवृतः ।
तदा ववन्दे च पितामहं नृपो
यथोक्तमेवं च चकार बुद्धिमान् ॥ १४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥
॥ ८६ ॥ राजधर्मपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥
[अस्मिन्नध्याये १४ श्लोकाः]

## ॥ पञ्चषष्टितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति राजधर्मकथनम् ॥

युधिष्ठिरः—

कथं राजा प्रजा रक्षन् नातिबन्धेन युज्यते ॥
धर्मे च नापराध्नोति तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

समासेनैव ते तात धर्मान् वक्ष्यामि निश्चितान् ।
विस्तरेण हि धर्माणां न जात्वन्तमवाप्नुयात् ॥ २
धर्मनिष्ठाञ् श्रुतवतो वेदवृत्तसमाहितान् ।
अर्चितान् वासयेथास्त्वं गृहे गुणवतो द्विजान् ॥ ३
प्रत्युत्थायोपसङ्गृह्य चरणावभिवाद्य च ।
अथ सर्वाणि कुर्वीथाः कार्याणि सपुरोहितः ॥ ४
धर्मकार्याणि निर्वर्त्य मङ्गलानि प्रयुज्य च ।
ब्राह्मणान् [1]वाचयेथास्त्वम् अर्थसिद्धिजयाशिषः ॥ ५
आर्जवेनैव सम्पन्नो धृत्या बुद्ध्या च भारत ।
धर्मार्थौ परिगृह्णीयात् कामक्रोधौ विवर्जयेत् ॥ ६
कामक्रोधौ पुरस्कृत्य योऽर्थं राजाऽनुतिष्ठति ।

1 व—नर्चयेथास्

न च धर्मं न चाप्यर्थं प्रतिगृह्णाति बालिशः ॥ ७

मा स्म लुब्धांश्च मूर्खांश्च कामादर्थेषु योजयेत् ।
अलुब्धान् बुद्धिसम्पन्नान् सर्वकर्मसु योजयेत् ॥ ८

मूर्खो ह्यधिकृतोऽर्थेषु कार्याणामविशारदः ।
प्रजाः क्लिश्नात्ययोगेन कामद्वेषसमन्वितः ॥ ९

बलिषष्ठेन शुल्केन दण्डेनाथापराधिनाम् ।
शास्त्रनीतेन लिप्सेथा वेतनेन धनागमम् ॥ १०

दापयित्वा करं धर्म्यं राष्ट्रं नीत्या यथाविधि ।
अथैषां कल्पयेद्राजा योगक्षेममतन्द्रितः ॥ ११

गोपायितारं दातारं धर्मनित्यमतन्द्रितम् ।
अकामद्वेषसंयुक्तम् अनुरज्यन्ति मानवाः ॥ १२

तस्माद्धर्म्येण लाभेन लिप्सेथास्त्वं धनागमम् ।
धर्मार्थौ च ध्रुवौ तस्य योऽपि शास्त्रधनो भवेत् ॥ १३

अपशास्त्रधनो राजा सञ्चयं नाधिगच्छति ।
अस्थाने चास्य तद्वित्तं सर्वमेव विनश्यति ॥ १४

अर्थमूलं हि हिंसां च कुरुते स्वयमात्मनः ।
करैरशास्त्रदृष्टैर्हि लोभात् सम्पीडयन् प्रजाः ॥ १५

ऊधश्छिन्द्याद्धि यो धेन्वाः क्षीरार्थी न लभेत् पयः ।

एवं राष्ट्रमयोगेन पीडितं न च वर्धते ॥ १६

यवसोदकमादाय सान्त्वेन विनयेन च ।
यो हि दोग्ध्रीमुपास्ते च स नित्यं विन्दते पयः ॥ १७
एवं राष्ट्रमुपायेन भुञ्जानो लभते फलम् ॥ १७॥

अथ राष्ट्रमुपायेन भुज्यमानं सुरक्षितम् ।
जनयत्यतुलां नित्यं कोशवृद्धिं युधिष्ठिर ॥ १८॥

दोग्ध्री धान्यं हिरण्यं च मही राज्ञा सुरक्षिता ।
नित्यं स्वेभ्यः परेभ्यश्च तृप्ता माता यथा पयः ॥ १९॥

मालाकारोपमो राजन् भव माऽऽङ्गारिकोपमः ।
तथा युक्तश्चिरं राष्ट्रं भोक्तुं शक्ष्यसि पालयन् ॥ २०॥

परचक्राभियानेन यदि ते स्याद्धनक्षयः ।
अथ साम्नैव लिप्सेथा धनमब्राह्मणेषु यत् ॥ २१॥

मा स्म ते ब्राह्मणं दृष्ट्वा धनिनं प्रचलेन्मनः ।
अन्त्यायामप्यवस्थायां किमु स्फीतस्य भारत ॥ २२॥

धनानि तेभ्यो दद्यास्त्वं यथाशक्ति यथार्हतः ।
सान्त्वयन् परिरक्षंश्च स्वर्गमेष्यसि दुर्जयम् ॥ २३॥

एवं धर्म्येण वृत्तेन प्रजास्त्वं परिपालय ।
स्वर्ग्यं पुण्यं यशोऽनन्तं प्राप्स्यसे कुरुनन्दन ॥ २४॥

धर्मेण व्यवहारेण प्रजाः पालय पाण्डव ।
युधिष्ठिर तथायुक्तो नाधिबन्धेन योक्ष्यसे ॥ २५॥

एष एव परो धर्मो यद्राजा रक्षति प्रजाः ।
भूतानां हि यदा धर्मो रक्षणे हि दया परा ॥ २६॥

तस्मादेतत् परं धर्मं मन्यन्ते धर्मकोविदाः ।
यद् राजा रक्षणे युक्तो भूतेषु कुरुते दयाम् ॥ २७॥

यदह्ना कुरुते पापम् अरक्षन् भयतः प्रजाः ।
राजा वर्षसहस्रेण तस्यान्तं नाधिगच्छति ॥ २८॥

यदह्ना कुरुते पुण्यं प्रजा धर्मेण पालयन् ।
दशवर्षसहस्राणि तस्य भुङ्क्ते फलं दिवि ॥ २९॥

स्विष्टस्स्वधीतस्सुतपा लोकाञ्जयति यावतः ।
क्षणेन तानवाप्नोति लोकान् धर्मेण पालयन् ॥ ३०॥

एवं धर्मं प्रयत्नेन कौन्तेय परिपालय ।
इह पुण्यफलं लब्ध्वा नानुबन्धेन योक्ष्यसे ॥ ३१॥

स्वर्गे च लोके महतीं श्रियं प्राप्स्यसि पाण्डव ।
अविप्लवश्च धर्माणाम् ईदृशानां सुराजसु ॥ ३२॥

तस्माद्राजैव नान्योऽस्ति यो महत् फलमाप्नुयात् ॥ ३३

स्वराज्यमृद्धिमत् प्राप्य प्रजा धर्मेण पालय ।
इन्द्रं तर्पय सोमेन कामैश्च सुहृदो जनान् ॥ ३४

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥
॥ ८६ ॥ राजधर्मपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
[ अस्मिन्नध्याये ३४ श्लोकाः ]

---

## ॥ षट्षष्टितमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति ब्राह्मणस्य श्रैष्ठ्योपपादनपूर्वकं चातुर्वर्ण्यधर्मकथनम् । ऐलवायुसंवादानुवादश्च ॥

---

युधिष्ठिरः—

कीदृशो ब्राह्मणो राज्ञां कार्याकार्यविचारणे ।
[1]क्षेमं कर्तुं समर्थो वा तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

य एव तु सतो रक्षेद् असतश्च निबर्हयेत् ।
स एव राज्ञा कर्तव्यो राजन् राजपुरोहितः ॥ २

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
पुरूरवस ऐलस्य संवादं [2]मातरिश्वना ॥ ३

---

1. ख—क्षमः घ—क्षमं
2. घ—मातरिश्वनः

ऐलः—

कुतस्स्विद्ब्राह्मणो जातो वर्णा वाऽथ कुतस्त्रयः ।
कस्माच्च भवति श्रेयान् एतद्वायो प्रचक्ष्व मे ॥ ४

वायुः—

ब्राह्मणो मुखतस्सृष्टो ब्रह्मणा राजसत्तम ।
बाहुभ्यां क्षत्रियस्सृष्ट ऊरुभ्यां वैश्य उच्यते ॥ ५

वर्णानां परिचर्यार्थं त्रयाणां भरतर्षभ ।
वर्णश्चतुर्थः पश्चात्तु शूद्रः पद्भ्यां विनिर्मितः ॥ ६

ब्राह्मणो जायमानो हि पृथिवीमन्वजायत ।
ईश्वरस्सर्वभूतानां धर्मकोशस्य गुप्तये ॥ ७

सर्वस्वं ब्राह्मणस्येदं यत् किञ्चिदिह दृश्यते ।
धर्मयुक्तं प्रशस्तं च जगत्यस्मिन् नृपात्मज ॥ ८

ततः पृथिव्या [1]गोप्तारं क्षत्रियं दण्डधारकम् ।
द्वितीयं वर्णमकरोत् प्रजानामनुगुप्तये ॥ ९

वैश्यस्तु धनधान्येन त्रीन् वर्णान् बिभृयादिमान् ।
शूद्रो ह्येनान् परिचरेद् इति ब्रह्मानुशासनम् ॥ १०

ऐलः—

द्विजस्य क्षत्रबन्धोर्वा कस्येयं पृथिवी भवेत् ।

1. अ—यन्तारं

धर्मतस्सह वित्तेन सम्यग्वायो प्रचक्ष्व मे ॥ ११

वायुः—

विप्रस्य सर्वमेवैतद् यत् किञ्चिज्जगतीगतम् ।
धनं धान्यं हिरण्यं च स्त्रियो रत्नानि वाहनम् ॥ १२

मङ्गलं च प्रशस्तं च यच्चान्यदपि विद्यते ।
ज्येष्ठेनाभिजनेनेह तं धर्मं कुशला विदुः ॥ १३

स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च ।
गुरुर्हि सर्ववर्णानां ज्येष्ठश्श्रेष्ठश्च वै द्विजः ॥ १४

पत्यलाभे यथैव स्त्री देवरं कुरुते पतिम् ।
आनन्तर्यात् तथा क्षत्त्रं पृथिवी कुरुते पतिम् ॥ १५

एष ते प्रथमः कल्प आपद्यन्यो भवेद्यतः ॥ १५॥

भीष्मः—

यदि स्वर्गे परं स्थानं धर्मतः परिमार्गय ॥ १६

यः कश्चिद्विजयेद् भूमिं ब्राह्मणाय निवेदयेत् ।
श्रुतवृत्तोपपन्नाय धर्मज्ञाय तपस्विने ॥ १७

स्वधर्मपरितृप्ताय यो न वित्तपरो भवेत् ।
यो राजानं नयेद्बुद्ध्या सर्वतः परिपूर्णया ॥ १८

ब्राह्मणो हि कुले जातः कृतप्रज्ञो विनीतवान् ।
श्रेयो नयति राजानं ब्रुवंश्चित्रां सरस्वतीम् ॥ १९

राजा चरति यं धर्मं ब्राह्मणेन विदर्शितम् ।
शुश्रूषुरनहंवादी क्षत्रधर्मव्रते स्थितः ॥ २०

यावता [1]सत्कृतप्रज्ञश् चरन् धर्मेऽवतिष्ठति ।
तस्य धर्मस्य सर्वस्य भागी राजपुरोहितः ॥ २१

एवमेव प्रजास्सर्वा राजानमभिसंश्रिताः ।
ब्राह्मणं च सुविद्वांसं राजशास्त्रविपश्चितम् ॥ २२

सम्यग्वृत्तास्स्वधर्मस्था न कुतश्चिद्भयान्विताः ।
राष्ट्रे चरन्ति यं धर्मं राज्ञा साध्वभिरक्षिताः ॥ २३
चतुर्थं तस्य तं धर्मं राजा भागं हि विन्दति ॥ २३॥

देवा मनुष्याः पितरो गन्धर्वोरगराक्षसाः ।
यज्ञमेवोपजीवन्ति नास्ति यष्टा ह्यराजके ॥ २४॥

इतो दत्तेन जीवन्ति देवताः पितरस्तथा ।
राजन्येवास्य धर्मस्य योगक्षेमः प्रतिष्ठितः ॥ २५॥

छायायामप्सु वायौ च सुखमुष्णेऽधिगच्छति ।
अग्नौ [2]वाससि सूर्ये च सुखं शीतेऽधिगच्छति ॥ २६॥

शब्दे स्पर्शे तथा रूपे गन्धे च रमते मनः ।
तेषु सर्वेषु भोगेषु भीतो न लभते सुखम् ॥ २७॥

---

1. अ—सत्कृतः प्राज्ञः 2. ग—चा शशिसूर्ये च

अभयस्यैव यो दाता तस्यैव सुमहत् फलम् ।
न हि प्राणसमं दानं त्रिषु लोकेषु विद्यते ॥ २८॥

इन्द्रो राजा यमो राजा धर्मो राजा तथैव च ।
राजा बिभर्ति [1]भूतानि राज्ञा सर्वमिदं धृतम् ॥ २९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥
॥ ८६ ॥ राजधर्मपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
[अस्मिन्नध्याये २९॥ श्लोकाः]

## ॥ सप्तषष्टितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति पुरोहितलक्षणादिवर्णनम्। ऐलकाश्यपसंवादानुवादश्च ॥

युधिष्ठिरः—

राज्ञा पुरोहितः कार्यः कीदृशो वर्णतो भवेत् ।
पुरोधा यादृशः कार्यः कथयस्व पितामह ॥ १

भीष्मः—

गौरो वा लोहितो वाऽपि श्यामो वा नीरुजस्सुखी ।
अक्रोधनो ह्यचपलस् सर्वतश्च जितेन्द्रियः ॥ २

राज्ञा पुरोहितः कार्यो भवेद्विद्वान् बहुश्रुतः ।

1. अ—भीतानि

उभौ समीक्ष्य धर्मार्थावप्रमेयावनन्तरम् ॥ ३

धर्मात्मा धर्मविद्येषां राज्ञां राजन् पुरोहितः ।
तेषामर्थश्च कामश्च धर्मश्चेति विनिश्चयः ॥ ४

श्लोकांश्चोशनसा गीतांस् तान् निबोध युधिष्ठिर ।
उच्छिष्टस्स भवेद्राजा यस्य नास्ति पुरोहितः ॥ ५

रक्षसामसुराणां च पिशाचोरगपक्षिणाम् ।
शत्रूणां च भवेद्वध्यो यस्य नास्ति पुरोहितः ॥ ६

ब्रह्मत्वं सर्वयज्ञेषु कुर्वीताथर्वणो द्विजः ।
राज्ञश्चाथर्ववेदेन सर्वकर्माणि कारयेत् ॥ ७

ब्रूयात् [1]कार्याणि सततं महोत्पाता[2]नि यानि च ।
इष्टमङ्गलयुक्तानि तथाऽऽन्तःपुरिकाणि च ॥ ८

गीतनृत्ताधिकारेषु सम्मतेषु महीपतेः ।
कर्तव्यं करणीयं वै वैश्वदेवबलिस्तथा ॥ ९

पक्षसन्धिषु कुर्वीत महाशान्तिं पुरोहितः ।
रौद्रहोमसहस्रं च स्वस्य राज्ञः प्रियं हितम् ॥ १०

राज्ञः पापमलास्सप्त यानृच्छति पुरोहितः ।
अमात्याश्च कुकर्माणो मन्त्रिणश्चाप्युपेक्षकाः ॥ ११

चौर्यमव्यवहारश्च व्यवहारोपसेविनाम् ।

---

1. ख—गर्ह्याणि 2. ख-घ—न्यघानि च

अदण्ड्यदण्डनं चैव दण्ड्यानां चाप्यदण्डनम् ॥ १२

हिंसा चान्यत्र सङ्ग्रामाद् यज्ञाच्च मल उच्यते ।
कुभृत्यैस्तु प्रजानाशस् सप्तमस्तु महामलः ॥ १३

रौद्रैर्होमैर्महाशान्त्या घृतकम्बलकर्मणा ।
भृग्वङ्गिरोविधिज्ञो वै पुरोधा निर्णुदेन्मलान् ॥ १४

एतान् हित्वा दिवं याति राजा सप्त महामलान् ।
सामात्यस्सपुरोधाश्च प्रजानां पालने रतः ॥ १५

एतस्मिन्नेव कौरव्य पौरोहित्ये महामते ।
श्लोकानाह महेन्द्रस्य गुरुर्देवो बृहस्पतिः ॥ १६

तान् निबोध महाभाग महीपालहिताञ् शुभान् ।
ऋग्वेदे सामवेदे च यजुर्वेदे च वाजिनाम् ॥ १७

न निर्दिष्टानि कर्माणि त्रिषु स्थानेषु भूभृताम् ।
शान्तिकं पौष्टिकं चैव अनिष्टानां च शातनम् ॥ १८

शप्तास्ते याज्ञवल्क्येन यज्ञानां हितमीहता ।
ब्रह्मिष्ठानां वरिष्ठेन ब्रह्मणस्सम्मते विभोः ॥ १९

बह्वृचं सामगं चैव वाजिनं च विवर्जयेत् ॥ १९॥

बह्वृचो राष्ट्रनाशाय राजनाशाय सामगः ।
अध्वर्युर्बलनाशाय प्रोक्तो वाजसनेयकः ॥ २०॥

अब्राह्मणेषु वर्णेषु मन्त्रान् वाजसनेयकान् ।
शान्तिके पौष्टिके चैव नित्यं कर्मणि वर्जयेत् ॥ २१॥

ब्राह्मणस्य महीपस्य सर्वथा न विरोधिनः ।
वेदाश्चत्वार इत्येते ब्राह्मणा ये च तद्विदुः ॥ २२॥

पौरोहित्ये प्रमाणं तु ब्राह्मणश्च महीपतेः ।
जात्या न क्षत्रियः प्रोक्तः क्षतत्राणं करोति यः ॥ २३॥

चातुर्वर्ण्यबहिष्ठोऽपि स एव क्षत्रियस्स्मृतः ।
भार्गवाङ्गिरसैर्मन्त्रैस् तेषां कर्म विधीयते ॥ २४॥

वैतानं कर्म यच्चैव गृह्यकर्म च यत् स्मृतम् ।
द्विजातीनां त्रयाणां तु सर्वकर्म विधीयते ॥ २५॥

राजधर्मप्रवृत्तानां हितार्थं त्रीणि कारयेत् ।
शान्तिकं पौष्टिकं चैव तथाऽभिचरणं च यत् ॥ २६॥

अग्निष्टोममुखैर्यज्ञैर् दूषिता भूपकर्मभिः ।
न सम्यक् फलमृच्छन्ति ये यजन्ति द्विजातयः ॥ २७॥

पौरोहित्यं तु कुर्वाणा नाशं यास्यन्ति भूभृताम् ।
यज्ञकर्माणि कुर्वाणा ऋत्विजस्तु विरोधिनः ॥ २८॥

ब्रह्मक्षत्रविशस्सर्वे पौरोहित्ये विवर्जिताः ।
तदभावे च पारक्यं निर्दिष्टं राजकर्मसु ॥ २९॥

ऋषिणा याज्ञवल्क्येन तत् तथा न तदन्यथा ॥ ३०

भार्गवाङ्गिरसां वेदे कृतविद्यष्षडङ्गवित् ।
यज्ञकर्मविधिज्ञश्च विधिज्ञः पौष्टिकेषु च ॥ ३१

अष्टादशविकल्पानां विधिज्ञश्शान्तिकर्मणाम् ।
सर्वरोगविहीनश्च संयतस्संयतेन्द्रियः ॥ ३२

श्वित्रकुष्ठक्षयक्षीणैर् ग्रहापस्मारदूषितैः ।
अशस्तैर्वातदुष्टैश्च दूरस्थैस्संवदेन्नृपः ॥ ३३

रोगिणं ऋत्विजं चैव [1]वर्जयेच्च पुरोहितम् ॥ ३३॥

न चान्यस्य कृतं येन पौरोहित्यं कदाचन ।
यस्य याज्यो मृतश्चैव भ्रष्टः प्रव्रजितोऽथवा ॥ ३४॥

युद्धे पराजितश्चैव सर्वांस्तान् वर्जयेन्नृपः ॥ ३५

नक्षत्रस्यानुकूल्येन यस्सञ्जातो नरेश्वरः ।
राजशास्त्रविनीतश्च श्रेयान् राज्ञः पुरोहितः ॥ ३६

[2]अथान्यानां निमित्तानाम् उत्पातानामथार्थवित् ।
शत्रुपक्षक्षयज्ञश्च श्रेयान् राज्ञः पुरोहितः ॥ ३७

वाजिनं तदभावे च चरकाध्वर्यवानथ ।
बहृचं सामगं चैव नीतिशास्त्रकृतश्रमान् ॥ ३८

कृतिनोऽथर्वणो वेदे स्थापयेत्तु पुरोहितान् ॥ ३८॥

---

1. घ—इतष्षट् पादा न सन्ति 2. ख-घ—अधन्यानां

हिंसालिङ्गा हि निर्दिष्टा मन्त्रा वैतानिकैर्द्विजैः ।
न तानुच्चारयेत् प्राज्ञः क्षात्रधर्मविरोधिनः ॥ ३९॥

प्रजागुणाः पुरोधाश्च पुरोहितगुणाः प्रजाः ।
राजा वै सगुणो येषां कुशलं तेषु सर्वतः ॥ ४०॥

उभौ प्रजा वर्धयेते देवान् पूर्वापरान् पितॄन् ।
यौ भवेतां स्थितौ धर्मे श्रद्धेयौ सुतपस्विनौ ॥ ४१॥

परस्परस्य सुहृदौ सम्मतौ समचेतसौ ।
ब्रह्मक्षत्रियसम्मानात् प्रजास्सुखमवाप्नुयुः ॥ ४२॥

विमाननात्तयोरेव प्रजा नश्येयुरेव हि ।
ब्रह्म क्षत्रं हि सर्वासां प्रजानां मूलमुच्यते ॥ ४३॥

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
ऐलकाश्यपसंवादं तं निबोध युधिष्ठिर ॥ ४४॥

ऐलः—

यदा हि ब्रह्म प्रजहाति क्षत्रं
क्षत्रं यदा वा प्रजहाति ब्रह्म ।
अन्वग्बलं कतमेऽस्मिन् भजन्ते
तथा बलं कतमेऽस्मिन्[1] ह्रियन्ते ॥ ४५॥

---

1. ख-ब—भ्रियन्ते

काश्यपः—

द्विधा हि राष्ट्रं भवति क्षत्रियस्य
ब्रह्म क्षत्रं यत्र विरुध्यतीह ।
अन्वग्बलं दस्यवस्तद्भजन्ते
तथा बलं तद् ध्रियन्ते च सन्तः ॥ ४६॥

नैषा[1]मुक्षा वर्धते जातु गेहे
नाधीयते तत् प्रजा नो यजन्ते ।
अपध्वस्ता दस्युभूताश्चरन्ति
ये ब्राह्मणान् क्षत्रियास्सन्त्यजन्ति ॥ ४७॥

एतौ नित्यं सुसंयत्तावितरेतरधारिणौ ।
क्षत्रं वै ब्रह्मणो योनिर् योनिः क्षत्रस्य वै द्विजः ॥ ४८॥

उभौ च तौ नित्यमभिप्रपन्नौ
सम्प्रापतुर्महतीं श्रीप्रतिष्ठाम् ।
तयोस्सन्धिर्भिद्यते चेत् परेण
ततस्सर्वं भवति हि सम्प्रमूढम् ॥ ४९॥

नात्र [2]प्लवं लभते पारगामी
महोदधौ नौरिव सम्प्रभिन्ना ।

1. अ—मर्थो 2. अ—पूर्वं

चातुर्वर्ण्यं भवति हि सम्प्रमूढं
ततः प्रजाः क्षयसंस्था भवन्ति ॥ ५०॥

ब्रह्मवृक्षो रक्ष्यमाणो मधु हेम च वर्षति ।
अरक्ष्यमाणस्सततं मांसं चापं च वर्षति ॥ ५१॥

अब्रह्मचारी चरणादपेतो
यदा ब्रह्माब्रह्मणस्त्राणमिच्छेत् ।
[1]आश्चर्यतो वर्षति तत्र देवस्
तत्राभीक्ष्णं दुष्प्रभाश्चाविशन्ति ॥ ५२॥

स्त्रियं हत्वा ब्राह्मणं वाऽपि पापस्
सभायां यो लभते साधुवादम् ।
राज्ञस्सकाशे न बिभेति चापि
ततो भयं [2]ज्ञायते क्षत्रियस्य ॥ ५३॥

पापैः पापे क्रियमाणेऽतिवेलं
ततो रुद्रो जायते देव एषः ।
पापैः पापान् सञ्जनयन्ति रुद्रस्
ततस्सर्वान् साध्वसाधून् हिनस्ति ॥ ५४॥

ऐलः—

कुतो रुद्रः कीदृशश्चापि रुद्रस्
सत्त्वैस्सत्त्वं दृश्यते वध्यमानम् ।

---

1. ख-घ—आश्चर्यभूता 2. ख-घ—जायते

एतद्विद्वन् काश्यप मे प्रचक्ष्व
यतो रुद्रो जायते रुद्र एषः ॥ ५५॥

काश्यपः—

आत्मा रुद्रो हृदये मानवानां
स्वकं देहं परदेहं च हन्ति ।
वातोत्पातैस्सदृशं रुद्रमाहुर्
देवं जीमूतैस्सदृशं रूपमस्य ॥ ५६॥

ऐलः—

न वै वातं प्रवृणोतीह कश्चि-
न्न जीमूतो वर्षति तत्र देवः ।
नैवं युक्तो दृश्यते मानवेषु
कामद्वेषान्मुच्यते बध्यते वा ॥ ५७॥

काश्यपः—

यथैकगेहाज्जातवेदाः प्रदीप्तः
कृत्स्नं गेहं दहते स त्वरावान् ।
विमोहनं कुरुते देव एष
ततस्सर्वं स्पृश्यते पुण्यपापैः ॥ ५८॥

ऐलः—

यदि दण्डस्स्पृशते पुण्यपापैः
पुण्ये पापे क्रियमाणेऽविशेषात् ।

[1]कस्य हेतोस्सुकृतं नाम कुर्याद्
दुष्कृतं वा कस्य हेतोर्न कुर्यात् ॥　　५९॥

काश्यपः—

असन्त्यागात् पापकृता[2]मपापस्
तुल्यो दण्डस्स्पृशते [3]मिश्रभावात् ।
शुष्केणार्द्रं दह्यते सम्प्रयोगा-
न्न मैत्री स्यात् पापकृद्भिः कदाऽपि ॥　　६०॥

ऐलः—

साध्वसाधून् धारयतीह भूमिस्
साध्वसाधूंस्तापयतीह सूर्यः ।
साध्वसाधूंश्चालयतीह वायुर्
आपस्तथा साध्वसाधून् वहन्ति ॥　　६१॥

काश्यपः—

एवमस्मिन् वर्तते तात लोके
नामुत्रैवं वर्तते राजपुत्र ।
प्रेत्यैतयोरन्तरावान् विशेषो
यो वै पुण्यं चरते यश्च पापम् ॥　　६२॥
पुण्यस्य लोको मधुमान् घृतार्चिर्
हिरण्यज्योतिरमृतस्य नाभिः ।

1. क-ख—तत्कस्य हेतोस्सुकृन्नाम　घ—तत्कात्स्म्यंहेतो स्सुकृतं नाम
2. ख-ब—मपापांस्
3. अ-क-घ—मिश्र

तत्र प्रेत्य मोदते धर्मचारी
न तत्र मृत्युर्न जरा न दुःखम् ॥ ६३॥

पापस्य लोको निरयोऽप्रकाशो
नित्यं दुःखं शोकभूयिष्ठ एव ।
तत्रात्मानं शोचति पापकर्मा
बह्वीस्समाः प्रतपन्नप्रतिष्ठः ॥ ६४॥

मिथो भेदाद्ब्राह्मणक्षत्रियाणां
प्रजा दुःखं दुस्सहं चाविशन्ति ।
एवं ज्ञात्वा कार्य एवेह विद्वान्
पुरोहितो नैकविद्यो नृपेण ॥ ६५॥

तं चैव लब्ध्वाऽभिषिञ्चेत् तथा धर्मो विधीयते ।
[1]अग्रं हि ब्राह्मणाः प्रोक्तास् सर्वस्यैवेह धर्मतः ॥ ६६॥

पूर्वं हि ब्राह्मणस्सृष्ट इति [2]ब्रह्मविदो विदुः ।
ज्येष्ठेनाभिजनेनास्य प्राप्तं सर्वं यदुत्तमम् ॥ ६७॥

तस्मान्मान्यश्च पूज्यश्च ब्राह्मणः प्रसृताग्रभुक् ।
सर्वं श्रेष्ठं विशिष्टं च निवेद्यं तस्य धीमतः ॥ ६८॥

अवश्यमेतत् कर्तव्यं राज्ञा बलवताऽपि च ।

---

1. अ—अग्र्या
2. ख-ग—धर्म

ब्रह्म वर्धयति क्षत्रं क्षत्रतो ब्रह्म वर्धते ॥ ६९॥
राज्ञस्सर्वस्य चान्यस्य स्वामी राज्ञः पुरोहितः ॥ ७०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
॥ ८६ ॥ राजधर्मपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
[अस्मिन्नध्याये ७० श्लोकाः]

---

## ॥ अष्टषष्टितमोऽध्यायः ॥

---

भीष्मेण युधिष्ठिरं प्रति मुचुकुन्दचरितदृष्टान्तीकरणेन क्षत्रस्य ब्रह्माधीनत्वसमर्थनम् ॥

---

युधिष्ठिरः—

ब्रह्मक्षत्रस्य सामर्थ्यं कथितं ते पितामह ।
पुरोहितप्रभावश्च लक्षणं च पुरोधसः ॥ १

इदानीं श्रोतुमिच्छामि ब्रह्मक्षत्रविनिर्णयम् ।
ब्रह्म क्षत्रं हि सर्वस्य कारणं जगतः परम् ॥ २

योगक्षेमो हि राष्ट्रस्य ताभ्यामायत्त एव हि ।
योगक्षेमो हि राष्ट्रस्य राजन्यायत्त उच्यते ॥ ३

भीष्मः—

योगक्षेमो हि [1]राज्ञश्च समायत्तः पुरोहिते ॥ ३॥

---

1. ब—राष्ट्रस्य

यत्रादृष्टं भयं ब्रह्म प्रजानां शमयत्युत ।
दृष्टं च राजा बाहुभ्यां तद्राष्ट्रं सुखमेधते ॥ ४॥

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
मुचुकुन्दस्य संवादं राज्ञो वैश्रवणस्य च ॥ ५॥

मुचुकुन्दो विजित्यैतां पृथिवीं पृथिवीपतिः ।
जिज्ञासमानस्स बलम् अभ्ययादलकाधिपम् ॥ ६॥

ततो वैश्रवणो राजा रक्षांस्यवसृजत् तदा ।
ते बलान्यथ मृद्नन्तः प्रचरन्त्यथ नैर्ऋताः ॥ ७॥

स हन्यमाने सैन्ये स्वे मुचुकुन्दो नराधिपः ।
गर्हयामास विद्वांसं पुरोहितमरिन्दम ॥ ८॥

तत उग्रं तपस्तप्त्वा वसिष्ठो धर्मवित्तमः ।
रक्षांस्युदवधीत् तत्र पन्थानं चाप्यविन्दत ॥ ९॥

ततो वैश्रवणो राजा मुचुकुन्दमगर्हयत् ।
वध्यमानेषु सैन्येषु वचनं चेदमब्रवीत् ॥ १०॥

कुबेरः—

बलवन्तस्त्वया पूर्वे राजानस्सपुरोहिताः ।
न चैवं समवर्तन्त यथा त्वमिह वर्तसे ॥ ११॥

ते खल्वपि कृतास्त्राश्च बलवन्तश्च भूमिपाः ।
आगम्य पर्युपासन्ते मामीशं सुखदुःखयोः ॥ १२॥

यद्यस्ति बाहुवीर्यं ते तद्दर्शयितुमर्हसि ।
किं ब्राह्मणबलेन त्वम् अतिमात्रेण वर्तसे ॥ १३॥

भीष्मः—

मुचुकुन्दस्ततः क्रुद्धः प्रत्युवाच धनेश्वरम् ।
न्यायपूर्वमसंरब्धम् असम्भ्रान्तमिदं वचः ॥ १४॥

मुचुकुन्दः—

ब्रह्मक्षत्रमिदं सृष्टम् एकयोनि स्वयम्भुवा ।
पृथग्बलविधानं च तल्लोकं परिरक्षति ॥ १५॥

तपोमन्त्रबलं नित्यं ब्राह्मणेषु प्रतिष्ठितम् ।
[1]अस्त्रबाहुबलं नित्यं क्षत्रियेषु प्रतिष्ठितम् । १६॥

ताभ्यां सम्भूय कर्तव्यं प्रजानां परिपालनम् ।
तथाऽपि मां प्रवर्तन्तं किं गर्हस्यलकाधिप ॥ १७॥

भीष्मः—

ततोऽब्रवीद्वैश्रवणो राजानं सपुरोहितम् ॥ १८

कुबेरः—

नाहं राज्यमनिर्दिष्टं कस्मैचिद्विदधाम्युत ।
नाच्छिन्दे वाऽप्यनिर्दिष्टम् इति जानीहि पार्थिव ॥ १९
प्रशाधि पृथिवीं वीर मद्दत्तामखिलामिमाम् ॥ १९॥

1. अ-क-ब—नास्तीदमर्धम्

मुचुकुन्दः—

नाहं राज्यं भवद्दत्तं भोक्तुमिच्छामि पार्थिव ।
बाहुवीर्यार्जितं राज्यम् अश्नीयामिति कामये ॥ २०॥

भीष्मः—

ततो वैश्रवणो राजा विस्मयं परमं ययौ ।
एवं यो ब्रह्मविद्राजा ब्रह्मपूर्वं प्रवर्तते ॥ २१॥
स भुङ्क्ते विजितामुर्वीं यशश्च महदश्नुते ॥ २२

नित्योदको ब्राह्मणस्यान्नित्यशस्त्रश्च क्षत्रियः ।
तयोर्हि सर्वमायत्तं यत् किञ्चिज्जगतीगतम् ॥ २३

यशश्च तेजश्च महीं च कृत्स्नां
[1]प्राप्नोषि राजन् विपुलां च कीर्तिम् ।
प्रधानधर्मं नृपते नियच्छ
तथा च धर्मस्य चतुर्थमंशम् ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
॥ ८६ ॥ राजधर्मपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥
[अस्मिन्नध्याये २४ श्लोकाः]

1. ख-घ—प्राप्नोति

## ॥ एकोनसप्ततितमोऽध्यायः ॥



राज्यस्वीकारे अधर्माशङ्किनं युधिष्ठिरं प्रति भीष्मेण तस्य धार्मिकत्व-समर्थनेन तद्विधानम् ॥

---

युधिष्ठिरः—

यया वृत्त्या महीपालो विवर्धयति मानवान् ।
पुण्यॉंल्लोकाञ्जयति च तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

दानशीलो भवेद्राजा यज्ञशीलश्च भारत ।
उपवासतपश्शीलः प्रजानां पालने रतः ॥ २

सर्वाश्चैव प्रजा नित्यं राजा धर्मेण पालयेत् ।
उत्थानेन प्रदानेन पूजयेच्चापि धार्मिकान् ॥ ३

राज्ञा हि पूजितो धर्मस् ततस्सर्वत्र पूज्यते ।
यद्यदाचरते राजा तत् प्रजानां स्म रोचते ॥ ४

नित्यमुद्यतदण्डश्च भवेन्मृत्युरिवारिषु ।
निहन्यात् सर्वतो दस्यून् न राज्ञो दस्युषु क्षमा ॥ ५

यं हि धर्मं चरन्तीह प्रजा राजसुरक्षिताः ।
चतुर्थं तस्य धर्मस्य राजा भागं च विन्दति ॥ ६

यदधीते यद्यजते यद्ददाति यदर्चति ।

राजा चतुर्थभाक् तस्य प्रजा धर्मेण पालयेत् ॥ ७

यद्राष्ट्रेऽकुशलं किञ्चिद् राज्ञोऽरक्षयतः प्रजाः ।
चतुर्थं तस्य पापस्य राजा भारत विन्दति ॥ ८

अप्याहुस्सर्वमेवेति भूयोऽर्धमिति निश्चयः ।
कर्मणा पृथिवीपाल नृशंसोऽनृतवागपि ॥ ९

तादृशात् किल्बिषाद्राजा शृणु येन प्रमुच्यते ॥ ९॥

प्रत्याहर्तुमशक्तस्स्याद् वनं चोरैर्हृतं यदि ।
स्वात् कोशात्तत् प्रदेयं स्याद् अशक्तेनोपजीवता ॥ १०॥

सर्ववर्णैस्सदा रक्ष्यं ब्रह्मस्वं ब्राह्मणैस्तथा ।
न स्थेयं विषये तेन योऽपकुर्याद्द्विजातिषु ॥ ११॥

ब्रह्मस्वे रक्ष्यमाणे हि सर्वं भवति रक्षितम् ।
तेषां प्रसादे निर्वृत्ते कृतकृत्यो भवेन्नृपः ॥ १२॥

पर्जन्यमिव भूतानि महाद्रुममिव द्विजाः ।
नरास्तमुपजीवन्ति नृपं सर्वार्थसाधकम् ॥ १३॥

न हि कामात्मना राज्ञा सततं शठबुद्धिना ।
नृशंसेनातिलुब्धेन शक्याः पालयितुं प्रजाः ॥ १४॥

युधिष्ठिरः—

नाहं राज्यसुखान्वेषी राज्यमिच्छाम्यपि क्षणम् ।
धर्मार्थं रोचयेद् राज्यं धर्मश्चात्र न विद्यते ॥ १५॥

तदलं मम राज्येन यत्र धर्मो न विद्यते ।
वनमेव गमिष्यामि तस्माद्धर्मचिकीर्षया ॥ १६॥

तत्र मेध्येष्वरण्येषु न्यस्तदण्डो जितेन्द्रियः ।
धर्ममाराधयिष्यामि मुनिर्मूलफलाशनः ॥ १७॥

भीष्मः—

वेदाहं तव या बुद्धिर् आनृशंस्यगुणैव सा ।
न च नित्यं नृशंसेन शक्यं धर्ममुपासितुम् ॥ १८॥

सर्वदा त्वां मृदुं प्राज्ञम् अत्यार्यमतिधार्मिकम् ।
क्लीबं धर्मघृणायुक्तं न लोको वहुमन्यते ॥ १९॥

राजधर्ममवेक्षस्व पितृपैतामहोचितम् ।
नैतद्राज्ञामथो वृत्तं यथा त्वं स्थातुमिच्छसि ॥ २०॥

न हि वैक्लब्यसंसृष्टम् आनृशंस्यमिहास्थितः ।
प्रजापालनसम्भूतं प्राप्तो धर्मफलं ह्यसि ॥ २१॥

न ह्येतामाशिषं पाण्डुर् न च कुन्त्यभ्यभाषत ।
विचित्रवीर्यो धर्मात्मा चित्रवीर्यो नराधिपः ॥ २२॥

शन्तनुश्च महीपालस् सर्वक्षत्रस्य पूजितः ।
तवैतां प्राज्ञतां तात यया चरसि मेधया ॥ २३॥

शौर्यं बलं च सत्त्वं च पिता तव सदाऽब्रवीत् ।
महत्त्वं बलमौदार्यं भवतः कुन्त्यभ्यभाषत ॥ २४॥

नित्यं स्वाहा स्वधा नित्यम् उभे मानुषदैवते ।
पुत्रेष्वाशासते नित्यं पितरो दैवतानि च ॥ २५॥

दानमध्ययनं यज्ञं प्रजानां परिपालनम् ।
धर्म्यमेवमधर्म्यं वा जन्मनैवाभ्यजायथाः ॥ २६॥

कुले धुरि च युक्तानां वहतां भारमीदृशम् ।
सीदतामपि कौन्तेय कीर्तिर्न परिहीयते ॥ २७॥

समन्ततो विनीतो यो वहत्यस्खलितो हि सः ।
निर्दोषकर्मवचनात् सिद्धिः कर्मण एव वा ॥ २८॥

नैकान्ते विनिपातेऽपि विहरेदिह कश्चन ।
धर्मी गृही च राजा वा ब्रह्मचार्यथवा द्विजः ॥ २९॥

अल्पं तु सारभूयिष्ठं [1]यत् कर्मोदारमेव तत् ।
कृतमेवाकृताच्छ्रेयो न पापीयो ह्यकर्मणः ॥ ३०॥

यदा कुलीनो धर्मज्ञः प्राप्नोत्यैश्वर्यमुत्तमम् ।
योगक्षेमस्तथा राज्ञः कुशलायैव कल्पते ॥ ३१॥

दानेनान्यद् बलेनान्यद् अन्यत् सूनृतया गिरा ।
सर्वतः परिगृह्णीयाद् राज्यं प्राप्येह धार्मिकः ॥ ३२॥

यं हि वैद्यकुले जाता अवृत्तिभयपीडिताः ।
प्राप्य तृप्ताः प्रतिष्ठन्ति धर्मे कोऽभ्यधिकस्ततः ॥ ३३॥

---

1. ख—स्वकर्मो

युधिष्ठिरः—

किं न्वतः परमं स्वर्गं का न्वतः प्रीतिरुत्तमा ।
किं न्वतः परमैश्वर्यं ब्रूहि मे यदि पश्यसि ॥ ३४॥

भीष्मः—

यस्मिन् भयार्दितास्सन्तः क्षेमं विन्दन्त्यपि क्षणम् ।
स स्वर्गजित्तमोऽस्माकं सत्यमेतद्ब्रवीमि ते ॥ ३५॥

त्वमेव प्रीतिमांस्तस्मात् कुरूणां कुरुसत्तम ।
भव राजा जय स्वर्गं सतो रक्षासतो जहि ॥ ३६॥

अनु त्वां तात जीवन्तु सुहृदस्साधुभिस्सह ।
पर्जन्यमिव भूतानि स्वादुद्रुममिवाण्डजाः ॥ ३७॥

धृष्टं शूरं प्रहर्तारम् अनृशंसं जितेन्द्रियम् ।
वत्सलं संविभक्तारम् उपजीवन्तु बान्धवाः ॥ ३८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥
॥ ८६ ॥ राजधर्मपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
[अस्मिन्नध्याये ३८॥ श्लोकाः]

## ॥ सप्ततितमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति ब्राह्मणानां निषिद्धकर्मकथनम् राजधर्मकथनं च ॥



युधिष्ठिरः—

व्याख्याता क्षत्रधर्मेण वृत्तिरापत्सु भारत ।
कार्पण्याद्वैश्यवृत्त्या तु जीवतु ब्राह्मणो न वा ॥ १

स्वकर्मण्यपरे युक्तास् तथैवान्ये विकर्मणि ।
तेषां विशेषमाचक्ष्व ब्राह्मणानां पितामह ॥ २

भीष्मः—

अभावे क्षत्रधर्माणां वैश्यधर्मेण वर्तयेत् ।
कृषिगोरक्ष्यमास्थाय व्यसने वृत्तिसङ्क्षये ॥ ३

विद्यालक्षणसम्पन्नास् सर्वत्राम्नायदर्शिनः ।
एते ब्रह्मसमा राजन् ब्राह्मणाः परिकीर्तिताः ॥ ४

ऋत्विगाचार्यसम्पन्नास् स्वेषु कर्मस्ववस्थिताः ।
एते देवसमा राजन् ब्राह्मणानां भवन्त्युत ॥ ५

ऋत्विक् पुरोहितो दूतो मन्त्री चार्थानुशासकः ।
एते क्षत्रसमा राजन् ब्राह्मणानां भवन्त्युत ॥ ६

गोऽजाविमहिषाणां च बडबानां च पोषकाः ।

वृत्त्यर्थमभिपद्यन्ति तान् वैश्यान् सम्प्रचक्षते ॥ ७

ऐश्वर्यकामा ये चापि सामिषार्थाश्च भारत ।
निग्रहानुग्रहरतांस् तान् द्विजान् क्षत्रियान् विदुः ॥ ८

अश्वारोहा गजारोहा रथिनोऽथ पदातयः ।
एते वैश्यसमा राजन् ब्राह्मणानां भवन्त्युत ॥ ९

[1]जन्मकर्मविहीना ये कदर्या ब्रह्मबन्धवः ।
एते शूद्रसमा राजन् ब्राह्मणानां भवन्त्युत ॥ १०

अश्रोत्रियास्सर्व एते सर्वे चानाहिताग्नयः ।
तान् सर्वान् धार्मिको राजा बलिं [2]विष्टिं च कारयेत् ॥ ११

आह्वायका देवलका नक्षत्रग्रामयाजकाः ।
एते ब्राह्मणचाण्डाला महापथिकपञ्चमाः ॥ १२

म्लेच्छदेशास्तु ये केचित् पापैरध्युषिता नरैः ।
गत्वा तु ब्राह्मणस्तांश्च चण्डालः प्रेत्य चेह च ॥ १३

व्रात्यान् म्लेच्छांश्च शूद्रांश्च याजयित्वा द्विजाधमः ।
अकीर्तिमिह सम्प्राप्य नरकं प्रतिपद्यते ॥ १४

महाबृन्दसमुद्राभ्यां पर्यायेणैकविंशतिम् ।
ब्राह्मणो ऋग्यजुस्साम्नां मूढः कृत्वा तु विप्लवम् ॥ १५

कल्पमेकं कृमिस्सोऽथ नानाविष्ठासु जायते ॥ १५॥

---

1. अ-क-घ—अर्धद्वयं नास्ति　　2. घ—व्युष्टिं च

आत्ये म्लेच्छे तथा शूद्रे तस्करे पतितेऽशुचौ ।
कुदेशे च सुरापे च ब्रह्मघ्ने वृषलीपतौ ॥ १६॥

अनधीतिषु सर्वत्र भुञ्जाने यत्र तत्र वा ।
बालस्त्रीवृद्धहन्तुश्च मातापित्रोर्गुरोस्तथा ॥ १७॥

मित्रद्रुहि कृतघ्ने च गोघ्ने चैव कथञ्चन ।
पुत्रघातिनि शत्रौ च न मन्त्रान् योजयेद्द्विजः ॥ १८॥

स तेषां विप्लवः प्रोक्तो मन्त्रविद्भिस्सनातनैः ॥ १९

यदि विप्रो विदेशस्थस् तीर्थयात्रां गतोऽथ वा ।
यदि भीतः प्रपन्नो वा कुदेशं शौचवर्जितम् ॥ २०

सुसंयतश्शुचिर्भूत्वा मन्त्रानुच्चारयेद्द्विजः ।
आर्तश्चोच्चारयेन्मन्त्रम् आर्तत्राणपरोऽथवा ॥ २१

[1]तत्त्ववित्तरते पापं शीलवान् संयतेन्द्रियः ।
हीनेष्वपि प्रयुञ्जानो नासौ विप्लावकस्स्मृतः ॥ २२

क्रूरकर्मा विकर्मा वा कर्मभिर्वञ्चितोऽथ वा ।
तत्त्ववित्तरते पापं शीलवान् संयतेन्द्रियः ॥ २३

एतेभ्यो बलिमादद्याद् वीतकोशो महीपतिः ।
[2]ऋते ब्रह्मसमेभ्यश्च देवकल्पेभ्य एव च ॥ २४

अब्राह्मणानां वित्तस्य स्वामी राजेति नश्श्रुतिः ।

---

1. ख-ब—नास्तीदमर्धम्   2. ब—एतेषां च समेभ्यश्च

ब्राह्मणानां च ये केचिद् विकर्मस्था इति श्रुतिः ॥ २५
प्रागुक्तांश्चाप्यनुक्तांश्च सर्वांस्तान् दापयेत् करान् ॥ २५॥

विकर्मस्थास्तु नोपेक्ष्या विप्रा राज्ञा कथञ्चन ।
नियम्यास्संविभज्याश्च धर्मानुग्रहकाम्यया ॥ २६॥

यस्य स्म विषये राज्ञस् स्तेनो भवति वै द्विजः ।
राज्ञ एवापराधं तं मन्यन्ते तद्विदो जनाः ॥ २७॥

अवृत्त्या यो भवेत् स्तेनो वेदवित् स्नातकस्तथा ।
राज्ञा राजन् स भर्तव्य इति धर्मविदो विदुः ॥ २८॥

स चेन्नापि निवर्तेत कृतवृत्तिः परन्तप ।
स निर्वासयितव्यस्स्यात् तस्माद्देशात् सबान्धवः ॥ २९॥

यज्ञश्श्रुतमपैशुन्यम् अहिंसाऽतिथिपूजनम् ।
दमस्सत्यं तपो दानम् एतद्ब्राह्मणलक्षणम् ॥ ३०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥
॥ ८६ ॥ राजधर्मपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
[ अस्मिन्नध्याये ३०॥ श्लोकाः ]

## ॥ एकसप्ततितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति केकयराजोपाख्यानकथनम् ॥

युधिष्ठिरः—

केषां प्रभवते राजा वित्तस्य भरतर्षभ ।
कया च वृत्त्या वर्तेत तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

अब्राह्मणानां वित्तस्य स्वामी राजेति वैदिकम् ।
ब्राह्मणानां च ये केचिद् विकर्मस्था भवन्त्युत ॥ २
विकर्मस्थो हि नोपेक्ष्यो भवेद् राज्ञा कथञ्चन ।
इति राज्ञः पुरावृत्तम् अभिजल्पन्ति साधवः ॥ ३
यस्य स्म विषये राज्ञस् स्तेनो भवति वै द्विजः ।
राज्ञ एवापराधं तं मन्यन्ते किल्बिषं नृप ॥ ४
अभिशस्तमिवात्मानं मन्यन्ते तेन कर्मणा ।
तस्माद्राजर्षयस्सर्वे ब्राह्मणानन्वपालयन् ॥ ५
अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
गीतं केकयराजेन ह्रियमाणेन रक्षसा ॥ ६
केकयानामधिपतिं रक्षो जग्राह दारुणम् ।
स्वाध्यायेनान्वितं राजन्नरण्ये संशितव्रतम् ॥ ७

राजा—

नास्ति स्तेनो जनपदे न कदर्यो न मद्यपः ।
नानाहिताग्निर्नायज्वा मामकान्तरमाविभः ॥ ८

न च मे ब्राह्मणोऽविद्वान् नाव्रती नाप्यसोमपः ।
द्विजातिर्विषये मह्यं मामकान्तरमाविभः ॥ ९

नानाप्तदक्षिणैर्यज्ञैर् यजन्ते विषये मम ।
नाधीते चाव्रती कश्चिन्मामकान्तरमाविभः ॥ १०

अध्यापयन्त्यधीयन्ते यजन्ते याजयन्त्यपि ।
ददति प्रतिगृह्णन्ति षट्सु कर्मस्ववस्थिताः ॥ ११

पूजितास्संविभक्ताश्च ऋषयस्सत्यवादिनः ।
ब्राह्मणा मे स्वकर्मस्था मामकान्तरमाविभः ॥ १२

न याचन्ते प्रयच्छन्ति सत्यधर्मपरायणाः ।
नाध्यापयन्त्यधीयन्ते यजन्ते याजयन्ति न ॥ १३

ब्राह्मणान् परिरक्षन्ति सङ्ग्रामेष्वपलायिनः ।
क्षत्रिया मे स्वकर्मस्था मामकान्तरमाविभः ॥ १४

कृषिगोरक्षवाणिज्यम् उपजीवन्त्यमायया ।
अप्रमत्ताः क्रियावन्तस् सुवृत्तास्सत्यवादिनः ॥ १५

संविभागं दमं शौचं सौहृदं च व्यपाश्रिताः ।
तथा वैश्यास्स्वकर्मस्था मामकान्तरमाविभः ॥ १६

त्रीन् वर्णानुपतिष्ठन्ते यथावदनसूयकाः ।
मम शूद्रास्स्वकर्मस्था मामकान्तरमाविभः ॥ १७

कृपणानाथवृद्धानां दुर्बलातुरयोषिताम् ।
संविभक्ताऽस्मि सर्वेषां मामकान्तरमाविभः ॥ १८

कुलानुरूपधर्माणां प्रस्थितानां यथाविधि ।
अव्युच्छेत्ताऽस्मि सर्वेषां मामकान्तरमाविभः ॥ १९

तपस्विनो मे विषये पूजिताः परिपालिताः ।
संविभक्ताश्च सत्कृत्य मामकान्तरमाविभः ॥ २०

नासंविभज्य भोक्ताऽस्मि न विशामि परस्त्रियम् ।
स्वतन्त्रो जातु न क्रीडे मामकान्तरमाविभः ॥ २१

नाब्रह्मचारी भिक्षाशी भिक्षुर्वाऽब्रह्मचर्यवान् ।
नानृत्विजा हुतं मेऽस्ति मामकान्तरमाविभः ॥ २२

कृतं राज्यं मया सर्वं राज्यस्थेनापि कार्यवत् ।
नाहं व्युत्क्रामितस्सत्यान्मामकान्तरमाविभः ॥ २३

नावजानाम्यहं वृद्धान् न वैद्यान् न तपस्विनः ।
राष्ट्रे स्वपति जागर्मि मामकान्तरमाविभः ॥ २४

शुक्लकर्माऽस्मि सर्वत्र न दुर्गतिभयं मम ।
धर्मचारी गृहस्थश्च मामकान्तरमाविभः ॥ २५

वेदाध्ययनसम्पन्नस् तपस्वी सत्यधर्मवित् ।
स्वामी सर्वस्य राज्यस्य स्वामी मम पुरोहितः ॥ २६

दानेन दिव्यानभिवाञ्छामि लोकान्
　सत्येनाथ ब्राह्मणानां च गुप्त्या ।
शुश्रूषया चापि गुरूनुपैमि
　न मे भयं विद्यते राक्षसेभ्यः ॥ २७

न मे राष्ट्रे विधवा ब्रह्मबन्धुर्
　न ब्राह्मणः कृपणो नोत चोरः ।
न पापकारी न च पापवक्ता
　न मे भयं विद्यते राक्षसेभ्यः ॥ २८

न मे शस्त्रैरनिर्भिन्नम् अङ्गं द्व्यङ्गुलमन्तरम् ।
धर्मार्थं युध्यमानस्य मामकान्तरमाविभः ॥ २९

गोब्राह्मणे च राष्ट्रे च नित्यं स्वस्त्ययनं नराः ।
आशंसन्ते हि राष्ट्रे मे मामकान्तरमाविभः ॥ ३०

राक्षसः—

नारीणां व्यभिचाराच्च अन्यायाच्च महीक्षिताम् ।
विप्राणां कर्मदोषाच्च प्रजानां जायते भयम् ॥ ३१

अवृष्टिर्मारको [1]रोगस् सततं क्षुद्भयानि च ।

---

1. ख—दोषस्

विग्रहश्च सदा तस्मिन् देशे भवति दारुणः ॥ ३२

यक्षरक्षःपिशाचेभ्यो नासुरेभ्यः कथञ्चन ।
भयमुत्पद्यते तत्र यत्र विप्रास्सुसंयताः ॥ ३३

गन्धर्वाप्सरसस्सिद्धाः पन्नगाश्च सरीसृपाः ।
मानवान् न जिघांसन्ति यत्र नार्यः पतिव्रताः ॥ ३४

ब्राह्मणाः क्षत्रिया वैश्या यत्र शूद्राश्च धार्मिकाः ।
नानावृष्टिभयं तत्र न दुर्भिक्षं न विभ्रमः ॥ ३५

धार्मिको यत्र भूपालो न तत्रास्ति पराभवः ।
उत्पाता न च दृश्यन्ते न दिव्या न च मानुषाः ॥ ३६

यस्मात् सर्वास्ववस्थासु धर्ममेवान्ववेक्षसे ।
तस्मात् प्राप्नुहि कैकेय गृहान् स्वस्ति व्रजाम्यहम् ॥ ३७

येषां गोब्राह्मणा रक्ष्याः प्रजा रक्ष्याश्च केकय ।
न रक्षोभ्यो भयं तेषां कुत एव तु पातकम् ॥ ३८

येषां पुरोगमा विप्रा येषां ब्रह्मबलं बलम् ।
सुरक्षितास्तथा विप्रास् ते वै स्वर्गजितो नृपाः ॥ ३९

भीष्मः—

तस्माद्द्विजातीन् रक्षेत ते रक्षन्तीह रक्षिताः ।
आशीरेषां भवेद्राजन् राज्ञां सम्यक् प्रवर्तताम् ॥ ४०

तस्माद्राज्ञा विशेषेण विकर्मस्था द्विजातयः ।

नियम्यास्संविभज्याश्च प्रजानुग्रहकारणात् ॥ ४१

एवं यो वर्तते राजा पौरजानपदेष्वपि ।
अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकताम् ॥ ४२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥
॥ ८६ ॥ राजधर्मपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
[अस्मिन्नध्याये ४२ श्लोकाः]

---

## ॥ द्विसप्ततितमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति ब्राह्मणादीनामापद्धर्मकथनम् ॥

---

युधिष्ठिरः—

व्याख्याता क्षत्रधर्मेण वृत्तिरापत्सु भारत ।
कथञ्चिद्वैश्यधर्मेण जीवेद्वा ब्राह्मणो न वा ॥ १

भीष्मः—

अशक्तः क्षत्रधर्मेण वैश्यधर्मेण वर्तयेत् ।
कृषिं गोरक्ष्यमास्थाय व्यसने वृत्तिसङ्क्षये ॥ २

युधिष्ठिरः—

कानि पण्यानि विक्रीणन् स्वर्गलोकान्न हीयते ।
ब्राह्मणो वैश्यधर्मेण वर्तयन् भरतर्षभ ॥ ३

भीष्मः—

सुरा लवणमित्येतत् तिलान् केसरिणः पशून् ।
वृषभान् मधुमांसं च कृतान्नं च युधिष्ठिर ॥ ४

सर्वास्ववस्थास्वेतानि ब्राह्मणः परिवर्जयेत् ।
[1]एतेषां विक्रयात् तात ब्राह्मणो नरके पतेत् ॥ ५

अजोऽग्निर्वरुणो मेषस् सूर्योऽश्वः पृथिवी विराट् ।
धेनुर्यज्ञश्च सोमश्च न विक्रेयाः कथञ्चन ॥ ६

पक्वेनामस्य निमयं न प्रशंसन्ति साधवः ।
निमयेत् पक्वमामेन भोजनार्थाय भारत ॥ ७

वयं सिद्धमशिष्यामो भवान् साधयतामिदम् ।
एवं समीक्ष्य समयं नाधर्मोऽस्ति कथञ्चन ॥ ८

अत्र ते वर्तयिष्यामि यथा धर्मस्सनातनः ।
व्यवहारप्रवृत्तानां तं निबोध युधिष्ठिर ॥ ९

भवतेऽहं ददानीदं भवानेतत् प्रतीच्छतु ।
उचिते वर्तते धर्मो न बलात् सम्प्रवर्तते ॥ १०

इत्येवं सम्प्रवर्तन्ते व्यवहाराः पुरातनाः ।
ऋषीणामितरेषां च साधु चैतदसंशयम् ॥ ११

युधिष्ठिरः—

अथ राजन् प्रजास्सर्वाश् शस्त्रमाददते यदा ।

1. क-ख-ग—एतस्य

व्युत्क्रमन्ते च धर्मेभ्यः क्षत्रस्य क्षीयते बलम् ॥ १२

तदा त्राता हि को नु स्यात् को धर्मः किं परायणम् ।
एतं मे संशयं ब्रूहि विस्तरेण पितामह ॥ १३

भीष्मः—

दानेन तपसा यज्ञैर् अद्रोहेण दमेन च ।
ब्राह्मणप्रमुखा वर्णाः क्षेममिच्छेयुरात्मनः ॥ १४

तेषां ये वेदबलिनस् त उत्थाय समन्ततः ।
राज्ञो बलं वर्धयेयुर् महेन्द्रस्येव देवताः ॥ १५

राज्ञो हि क्षीयमाणस्य ब्रह्मैवाहुः परायणम् ।
तस्माद्ब्रह्मबलेनैव समुत्थेयं विजानता ॥ १६

यदा तु विजयी राजा क्षेमं राष्ट्रेषु सन्दधेत् ।
तदा वर्णा यथाधर्मं निविशेयुस्स्वकर्मसु ॥ १७

निर्मर्यादे प्रवृत्ते तु दस्युभिस्सङ्करे कृते ।
सर्वे वर्णा न दुष्येयुश् शस्त्रवन्तो युधिष्ठिर ॥ १८

युधिष्ठिरः—

अथ चेत् सर्वथा क्षत्रं ब्राह्मणान् प्रतिबाधते ।
कस्तत्र ब्राह्मणांस्त्राता को धर्मः किं परायणम् ॥ १९

भीष्मः—

तपसा ब्रह्मचर्येण शस्त्रेण च बलेन च ।

अमायया मायया वा नियन्तव्यं तदा भवेत् ॥ २०

क्षत्रस्यातिप्रवृत्तस्य ब्राह्मणेषु विशेषतः ।
ब्रह्म वै सन्नियन्तृ स्यात् क्षत्रं हि ब्रह्मसम्भवम् ॥ २१

अद्भ्योऽग्निर्ब्रह्मतः क्षत्रम् अश्मनो लोहमुत्थितम् ।
तेषां सर्वगतं तेजस् स्वस्वयोनिषु शाम्यति ॥ २२

यदा छिनत्त्ययोऽश्मानम् अग्निश्चापोऽभिहन्ति च ।
क्षत्रं च ब्राह्मणं द्वेष्टि तदा शाम्यन्ति ते त्रयः ॥ २३

तस्माद्ब्रह्मणि शाम्यन्ति क्षत्रियाणां युधिष्ठिर ।
समुदीर्णान्यजेयानि तेजांसि च बलानि च ॥ २४

युधिष्ठिरः—

ब्रह्मवीर्ये मृदूभूते क्षत्रवीर्ये च दुर्बले ।
दुष्टेषु सर्ववर्णेषु ब्राह्मणान् प्रति भारत ॥ २५

ये तत्र युद्धं कुर्वन्ति त्यक्त्वा जीवितमात्मनः ।
ब्राह्मणान् परिरक्षन्ति तेषां लोका भवन्ति के ॥ २६

भीष्मः—

ब्राह्मणान् परिरक्षन्तो धर्ममात्मानमेव च ।
मनस्विनो मन्युमन्तः पुण्याँल्लोकान् व्रजन्त्यमी ॥ २७

ब्राह्मणार्थं हि सर्वेषां शस्त्रग्रहणमिष्यते ॥ २७॥

अतिस्विष्टं स्वधीतानां लोकानतितपस्विनाम् ।

अनाशकाम्याहितानां शूरा यान्ति परां गतिम् ॥ २८॥

एष एवात्मनस्त्यागो नान्यं धर्मं विदुर्बुधाः ।
तेभ्यो नमश्च भद्रं ते ये शरीराणि जुह्वति ॥ २९॥

ब्रह्मद्विषो जिघांसन्तस् तेषां नोऽस्तु सलोकता ॥ ३०

ब्रह्मलोकजितस्सर्वान् वीरांस्तान् मनुरब्रवीत् ।
यथाऽश्वमेधावभृथे स्नाताः पूता भवन्त्युत ॥ ३१

दुष्कृतस्सुकृतश्चैव तथा शस्त्रहता रणे ॥ ३१॥

भवत्यधर्मो धर्मो हि धर्मोऽधर्मो भवत्युत ।
कारणाद्देशकालस्य देशः कालस्स तादृशः ॥ ३२॥

मैत्राः क्रूराणि कुर्वन्तो जयन्ति स्वर्गमुत्तमम् ।
धर्म्याः पापानि कुर्वाणा गच्छन्ति परमां गतिम् ॥ ३३॥

युधिष्ठिरः—

ब्राह्मणस्त्रिषु लोकेषु शस्त्रं गृह्णन् न दुष्यति ।
आत्मत्राणे दस्युदोषे सर्वस्वहरणे तथा ॥ ३४॥

अभ्युद्यते दस्युबले क्षत्रार्थे वर्णसङ्करे ।
सम्प्रमूढेषु वर्णेषु यदन्योऽभिभवेद्बली ॥ ३५॥

ब्राह्मणो यदि वा वैश्यश् शूद्रो वा राजसत्तम ।
दस्युभ्यो यः प्रजा रक्षेद् दण्डं धर्मेण धारयेत् ॥ ३६॥

कार्यं कुर्यान्न वा कुर्यात् स वार्यो वा भवेन्न वा ॥ ३७

भीष्मः—

न स्म शस्त्रं गृहीतव्यम् अन्यत्र क्षत्रबन्धुतः ॥ ३७॥

अपारे यो भवेत् पारम् अप्लवे यः प्लवो भवेत् ।
शूद्रो वा यदि वा ह्यन्यस् सर्वथा मानमर्हति ॥ ३८॥

यमाश्रित्य नरा राजन् वर्तयेयुर्यथासुखम् ।
अनाथास्तप्यमानाश्च दस्युभिः परिपीडिताः ॥ ३९॥

तमेव पूजयेरंस्ते प्रीता स्वमिव बान्धवम् ।
महद्ध्यभीष्टं कौरव्य कर्ता सम्मानमर्हति ॥ ४०॥

किमनडुहा यो न वहेत् किं धेन्वा वाऽप्यदुग्धया ।
वन्ध्यया भार्यया कोऽर्थः कोऽर्थो राज्ञाऽप्यरक्षता ॥ ४१॥

यथा दारुमयो हस्ती यथा चर्ममयो मृगः ।
यथा ह्यदक्षः पुरुषः पथि क्षेत्रं यथोषरम् ॥ ४२॥

यथा ब्रह्मानधीयानो द्विजो राजाऽप्यरक्षकः ।
मेघो न वर्षते यश्च सर्व एव निरर्थकाः ॥ ४३॥

नित्यं यस्तु सतो रक्षेद् असतश्च निबर्हयेत् ।
स एव राजा कर्तव्यस् तेन सर्वमिदं धृतम् ॥ ४४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥
॥ ८६ ॥ राजधर्मपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
[ अस्मिन्नध्याये ४४॥ श्लोकाः ]

## ॥ त्रिसप्ततितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति ऋत्विग्लक्षणादिकथनम् ॥

युधिष्ठिरः—

क्व समर्थाः कथंशीला ऋत्विजस्स्युः पितामह ।
कथंविधाश्च राजेन्द्र तद्ब्रूहि वदतां वर ॥ १

भीष्मः—

[1]श्रुतिकर्मपरो राजन् ऋत्विक् तस्य विधीयते ।
छन्दस्सामादि विज्ञाय द्विजानां श्रुतमेव च ॥ २
वेदैकरतयो नित्यं धीमन्तः प्रियवादिनः ।
परस्परस्य सुहृदस् सम्मतास्समदर्शिनः ॥ ३
आनृशंस्यं सत्यवाक्यम् अहिंसा दम आर्जवम् ।
अद्रोहो नातिमानश्च ह्रीस्तितिक्षा दमश्शमः ॥ ४
यस्मिन्नेतानि दृश्यन्ते स पुरोहित उच्यते ॥ ४॥
[2]ह्रीमान् सत्यधृतिर्दान्तो भूतानामविहिंसकः ।
अकामद्वेषसंयुक्तस् त्रिभिश्शुक्लैस्समन्वितः ॥ ५॥
अहिंसको ज्ञानतृप्तस् स ब्रह्मासनमर्हति ॥ ६
एते महर्त्विजस्तात सर्वे मान्या यथातथम् ॥ ६॥

1. ख—अर्धपञ्चकं नास्ति	2. ख—श्री

युधिष्ठिरः—

यदिदं वेदवचनं दक्षिणासु विधीयते ।
इदं देयमिदं देयं न क्वचिद्व्यवतिष्ठते ॥ ७॥

देयं प्रति धनं शास्त्रम् आपद्धर्मो न शास्त्रतः ।
आज्ञा शास्त्रस्य घोरेयं न शक्तिं समवेक्षते ॥ ८॥

श्रद्धामालम्ब्य यष्टव्यम् इतीयं वैदिकी श्रुतिः ।
मिथ्योपेतस्य यज्ञस्य किमु श्रद्धा करिष्यति ॥ ९॥

भीष्मः—

न [1]वेदानां परिभवान्न शाठ्येन न मायया ।
कश्चिन्महदवाप्नोति मा ते भूद्बुद्धिरीदृशी ॥ १०॥

यज्ञानां [2]दक्षिणा तात मन्त्राणां परिबर्हणम् ।
न मन्त्रा दक्षिणाहीनास् तारयन्ति कथञ्चन ॥ ११॥

शक्तिस्तु पूर्णपात्रेण सम्मिता नावमा भवेत् ।
अवश्यं तात यष्टव्यं त्रिभिर्वर्णैर्यथाबलम् ॥ १२॥

सोमो राजा ब्राह्मणानाम् इत्येषा वैदिकी श्रुतिः ।
तं च विक्रेतुमिच्छन्ति न तथा वृत्तिरिष्यते ॥ १३॥

तेन क्रीतेन धर्मेण ततो यज्ञः प्रवर्तते ।
इत्येवं धर्ममाख्यातम् ऋषिभिर्धर्मकोविदैः ॥ १४॥

पुमान् यज्ञश्च सोमश्च न्यायवृत्तो यदा भवेत् ।

1. ख-घ—देवानां 2. क-घ—दक्षिणास्तात

अन्यायवृत्तः पुरुषो न परस्य न चात्मनः ॥ १५॥

शरीरं यज्ञपात्राणि इत्येषा श्रूयते श्रुतिः ।
[1]तानि सम्यक् प्रणीतानि ब्राह्मणानां महात्मनाम् ॥ १६॥

तपो यज्ञादपि श्रेष्ठम् इत्येषा परमा श्रुतिः ।
तत् ते तपः प्रवक्ष्यामि विद्वंस्तदपि मे शृणु ॥ १७॥

अहिंसा सत्यवचनम् आनृशंस्यं दमो घृणा ।
एतत् तपो विदुर्विप्रा न शरीरस्य शोषणम् ॥ १८॥

अप्रामाण्यं च वेदानां शास्त्राणां चातिलङ्घनम् ।
अव्यवस्था च सर्वत्र तद्वै नाशनमात्मनः ॥ १९॥

निबोध दशहोतॄणां विधानं पार्थ यादृशम् ।
चित्तिस्स्रुक् चित्तमाज्यं च पवित्रं ज्ञानमुत्तमम् ॥ २०॥

न शाठ्यं न च जिह्मत्वं कालो देशश्च ते दश ।
सर्वं जिह्मं मृत्युपदम् आर्जवं ब्रह्मणः पदम् ॥ २१॥

एतावाञ् ज्ञानविषयः किं प्रलापः करिष्यति ॥ २२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥
॥ ८६ ॥ राजधर्मपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
[ अस्मिन्नध्याये २२ श्लोकाः ]

---

1. अ-क-ब—अर्धद्वयं नास्ति

## ॥ चतुस्सप्ततितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति मित्रामित्रलक्षणकथनम् ॥

युधिष्ठिरः—

यदप्यल्पतरं कर्म तदप्येकेन दुष्करम् ।
पुरुषेणासहायेन किमु राज्यं पितामह ॥ १

किंशीलः किंसमाचारो राज्ञो यस्सचिवो भवेत् ।
कीदृशे विश्वसेद्राजा कीदृशे वा न विश्वसेत् ॥ २

भीष्मः—

चतुर्विधानि मित्राणि राज्ञां राजन् भवन्त्युत ।
सहार्थो भजमानश्च सहजः कृत्रिमस्तथा ॥ ३

धर्मात्मा पञ्चमं मित्रं स तु नैकस्य न द्वयोः ।
यतो धर्मस्ततो वा स्यान्मध्यस्थो वा ततो भवेत् ॥ ४

यो यस्यार्थो न रोचेत न तं तस्य प्रकाशयेत् ॥ ४॥
मित्राणां प्रकृतिर्नास्ति त्वमित्राणां च भारत ।
उपकाराद्भवेन्मित्रम् अपकाराद्भवेदरिः ॥ ५॥

यस्यैव हि मनुष्यस्य नरो मरणमिच्छति ।
तस्य पर्यागते काले पुनर्जीवितुमिच्छति ॥ ६॥

धर्माधर्मेण राजानश् चरन्ति विजिगीषवः ।

चतुर्णां मध्यमौ श्रेष्ठौ नित्यं शङ्क्यौ तथाऽपरौ ॥ ७॥
सर्वे नित्यं शङ्कितव्याः प्रत्यक्षं कार्यमात्मनः ॥ ८

न हि राज्ञा प्रमादो वै कर्तव्यो मित्ररक्षणे ।
प्रमादिनं हि राजानं लोकाः परिभवन्त्युत ॥ ९

असाधुस्साधुतामेति साधुर्भवति दारुणः ।
अरिस्तु मित्रं भवति मित्रं चापि प्रदुष्यति ॥ १०

अनित्यचित्तः पुरुषस् तस्मिन् को जातु विश्वसेत् ।
तस्मात् प्रधानं यत् कार्यं प्रत्यक्षं तत् समाचरेत् ॥ ११

एकान्तेन हि विश्वासः कृत्स्नो धर्मार्थनाशकः ।
अविश्वासश्च सर्वत्र मृत्युर्नापि विशिष्यते ॥ १२

अकालमृत्युर्विश्वासोऽविश्वसन् हि विपद्यते ।
यस्मिन् करोति विश्वासम् इच्छतस्तस्य जीवति ॥ १३

तस्माद्विश्वसितव्यं च शङ्कितव्यं च केषुचित् ।
एषा नीतिगतिस्तात लक्ष्मीश्चैषा सनातनी ॥ १४

[1]यं मन्येत ममाभावाद् एनमर्थागमस्स्पृशेत् ।
तस्मान्नित्यं शङ्कितव्यं तममित्रं विदुर्बुधाः ॥ १५

क्षेत्राद्यस्योदकं पार्थ क्षेत्रमन्यस्य गच्छति ।
न तत्रानिच्छतस्तस्य भिद्येरन् सर्वसेतवः ॥ १६

1. घ—यं मन्येत महाभागा नैनमर्थागमः

तथैवात्युदकाङ्क्षीतस् तस्य भेदनमिच्छति ।
यमेवंलक्षणं विद्युस् तममित्रं विदुर्बुधाः ॥ १७

यस्समृद्ध्या न तृप्येत क्षये दीनतरो भवेत् ।
एतदुत्तममित्रस्य निमित्तमभिचक्षते ॥ १८

यन्मन्येत ममाभावाद् अस्याभावो भवेदिति ।
तस्मिन् कुर्वीत विश्वासं यथा पितरि वै तथा ॥ १९
तं शक्त्या वर्धमानं च सर्वतः परिबृंहयेत् ॥ १९॥

नित्यं क्षताद्वारयति यो धर्मेष्वपि कर्मसु ।
क्षयाद्भीतं विजानीयाद् उत्तमं मित्रलक्षणम् ॥ २०॥

ये यस्य क्षयमिच्छन्ति ते तस्य रिपवस्स्मृताः ॥ २१

व्यसनान्नित्यभीतो वै समृद्ध्या न च तृप्यति ।
यत् स्यादेवंविधं मित्रं तदात्मसममुच्यते ॥ २२

रूपवर्णस्वरोपेतस् तितिक्षुरनसूयकः ।
कुलीनश्शीलसम्पन्नस् स ते स्यात् प्रत्यनन्तरः ॥ २३

मेधावी स्मृतिमान् दक्षः प्रकृत्या चानृशंस्यवान् ।
यो मानितोऽमानितो वा न सन्तुष्येत् कथञ्चन ॥ २४

ऋत्विग्वा यदि वाऽऽचार्यस् सखा वाऽत्यन्तसत्कृतः ।
गृहे वसेदमात्यस्ते स स्यात् परमपूजितः ॥ २५

संविद्याः परमं मित्रं प्रकृतिं चार्थधर्मयोः ।

विश्वासस्ते भवेत् तत्र यथा पितरि वै तथा ॥ २६

नैव द्वौ न त्रयः कार्या न मृष्येरन् परस्परम् ।
एकार्थहेतुभूतानां भेदो भवति सर्वदा ॥ २७

कीर्तिप्रधानो यश्च स्याद् यश्च स्यात् समये स्थितः ।
समर्थोऽन्यांश्च न द्वेष्टि समर्थान् कुरुते च यः ॥ २८

यो न कामाद्भयात् क्रोधाल्लोभाद्वा धर्ममुत्सृजेत् ।
दक्षः पर्याप्तवचनस् स ते स्यात् प्रत्यनन्तरः ॥ २९

कुलीनश्शीलसम्पन्नस् तितिक्षुरनसूयकः ।
स्थिरश्चार्यश्च विद्वांश्च प्रतिपत्तिविशारदः ॥ ३०

एते ह्यमात्याः कर्तव्यास् सर्वकर्मस्ववस्थिताः ॥ ३०॥

पूजितास्संविभक्ताश्च सुसहायास्स्वनुष्ठिताः ।
कृत्स्नमेते विनिक्षिप्ताः प्रतिरूपेषु कर्मसु ॥ ३१॥
युक्ता महत्सु कार्येषु श्रेयांस्युत्पादयन्त्युत ॥ ३२

एते कर्माणि कुर्वन्ति स्पर्धमाना मिथस्सदा ।
अनुतिष्ठन्ति चैवार्थान् आतिष्ठन्तः परस्परम् ॥ ३३

ज्ञातिभ्यो बिभियाच्चैव मृत्योरिव यतस्तदा ।
युवराजश्च राजर्धिं ज्ञातिर्न सहते सदा ॥ ३४

ऋजोर्मृदोर्वदान्यस्य ह्रीमतस्सत्यवादिनः ।
नान्यो ज्ञातेर्महाभाग विनाशमभिनन्दति ॥ ३५

अज्ञातयोऽप्यसुखदा ज्ञातयोऽपि सुखावहाः ।
अज्ञातिमन्तं पुरुषं परे परिभवन्त्युत ॥ ३६

निकृतस्य परैरन्यैर् ज्ञातिरेव परायणम् ।
नान्यैर्निकारं सहते ज्ञातिर्ज्ञातेः कदाचन ॥ ३७

आत्मानमिव जानाति निकृतं बान्धवं परैः ।
तेषु सन्ति गुणाश्चैव नैर्गुण्यं चैव लक्ष्यते ॥ ३८

नाज्ञातिरनुगृह्णाति नाज्ञातिर्वृद्धिमश्नुते ।
उभयं ज्ञातिमत्स्वेषु दृश्यते साध्वसाधु च ॥ ३९

तान् मानयेत् पूजयेच्च वाचा नित्यं च कर्मणा ।
कुर्याच्च प्रियमेतेभ्यो नाप्रियं किञ्चिदाचरेत् ॥ ४०

विश्वस्तवदविश्वस्तस् तेषु वर्तेत सर्वदा ।
न हि दोषो गुणो वेह निस्स्पृहस्स्वेषु दृश्यते ॥ ४१

तस्यैवं वर्तमानस्य पुरुषस्याप्रमादिनः ।
अमित्रास्सम्प्रसीदन्ति ततो मित्रं भवत्युत ॥ ४२

य एवं वर्तते नित्यं ज्ञातिसम्बन्धिमण्डले ।
मित्रेष्वमित्रेष्वैश्वर्ये चिरं यशांसि तिष्ठति ॥ ४३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥
॥ ८६ ॥ राजधर्मपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
[ अस्मिन्नध्याये ४३ श्लोकाः ]

## ॥ पञ्चसप्ततितमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति कृष्णनारदसंवादानुवादः॥

युधिष्ठिरः—

एवमग्राह्यके तस्मिञ् ज्ञातिसम्बन्धिमण्डले ।
मित्रेष्वमित्रेष्वपि च कथं भावो विभाव्यते ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
वासुदेवस्य संवादं महर्षेर्नारदस्य च ॥ २

श्रीभगवान्—

नासुहृत् परमं मन्त्रं नारदार्हति वेदितुम् ।
अपण्डितो वाऽपि सुहृत् पण्डितो वाऽप्यनात्मवान् ॥ ३

स ते सौहृदमास्थाय किञ्चिद्वक्ष्यामि नारद ।
कृत्स्नां बुद्धिं च ते प्रेक्ष्य सम्पृच्छे त्रिदिवङ्गम ॥ ४

दास्यमैश्वर्यवादेन ज्ञातीनां वै करोम्यहम् ।
अर्धभोक्ताऽस्मि भोगानां वाग्दुरुक्तानि च क्षमे ॥ ५

अरणीमग्निकामो वा मथ्नाति हृदयं मम ।
वाचा दुरुक्तं देवर्षे तन्मां दहति नित्यदा ॥ ६

बलं सङ्कर्षणे नित्यं सौकुमार्यं पुनर्गदे ।

रूपेण मत्तः प्रद्युम्नस् सोऽसहायोऽस्मि नारद ॥ ७

अन्ये हि सुमहाभागा वलवन्तो दुरासदाः ।
नित्योत्थानेन सम्पन्ना नारदान्धकवृष्णयः ॥ ८

यस्य न स्युर्न वै स स्याद् यस्य स्युः कृच्छ्रमेव तत् ।
द्वयोरेनं प्रचरिते वृणोम्येकतरं न च ॥ ९

स्यातां यस्याहुकाक्रूरौ किं नु कष्टतरं ततः ।
यस्य चापि न तौ स्यातां किं नु दुःखतरं ततः ॥ १०

सोऽहं कितवमातेव द्वयोरपि महामुने ।
नैकस्य जयमाशंसे द्वितीयस्य पराजयम् ॥ ११

ममैवं क्लिश्यमानस्य नारदोभयदर्शनात् ।
वक्तुमर्हसि यच्छ्रेयो ज्ञातीनामात्मनस्तथा ॥ १२

नारदः—

आपदो द्विविधाः कृष्ण वाह्याश्चाभ्यन्तराश्च ह ।
प्रादुर्भवन्ति वार्ष्णेय स्वकृता यदि वाऽन्यतः ॥ १३

सेयमात्मोद्भवा तुभ्यम् आपत् कृच्छ्रा स्वकर्मजा ।
अक्रूरभोजप्रभवास् सर्वे ह्येते तदन्वयाः ॥ १४

अर्थहेतोर्हि कामाद्वा वीर वीभत्सयाऽपि वा ।
आत्मना प्राप्तमैश्वर्यम् अन्यत्र प्रतिपादितम् ॥ १५

कृतमूलमिदानीं तद् राजशब्दसहायवत् ।

न शक्यं पुनरादातुं वान्तमन्नमिव स्वयम् ॥ १६

बभ्रूग्रसेनतो राज्यं शक्यं प्राप्तुं कथञ्चन ।
ज्ञातिभेदभयात् कृष्ण त्वया वाऽपि विशेषतः ॥ १७

तच्च सिध्येत् प्रयत्नेन कृत्वा कर्म सुदुष्करम् ।
महद्व्ययं क्षयं वा स्याद् विनाशो वा पुनर्भवेत् ॥ १८

अनायसेन शस्त्रेण मृदुना हृदयच्छिदा ।
जिह्वामुद्धर सर्वेषां परिमृज्यानुमृज्य च ॥ १९

श्रीभगवान्—

अनायसं मुने शस्त्रं मृदु विद्यामहं कथम् ।
येनैषामुद्धरे जिह्वां परिमृज्यानुमृज्य च ॥ २०

नारदः—

शक्त्याऽन्नदानं सततं तितिक्षा दम आर्जवम् ।
यथार्हं प्रतिपूजा च शस्त्रमेतदनायसम् ॥ २१

ज्ञातीनां वक्तुकामानां गुरूणि च लघूनि च ।
गिरा त्वं हृदयं वाचं शमयस्व मनांसि च ॥ २२

नामहापुरुषः कश्चिन्नानात्मा नासहायवान् ।
महतीं धुरमादाय समुद्यम्योरसा वहेत् ॥ २३

[1]सर्वे एव गुरुं भारम् अनड्वान् वहते समे ।

1. ख-घ—सर्वमेव

दुर्गे प्रतीतस्सुगवो भारं वहति दुर्वहम् ॥ २४

भेदाद्विनाशस्सङ्घानां सङ्घमुख्योऽपि केशव ।
यथा त्वां प्राप्य नोत्सीदेद् अयं सङ्घस्तथा कुरु ॥ २५

[1]नान्यत्र बुद्धिक्षान्तिभ्यां नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र धनसन्त्यागाद् गुणास्तिष्ठन्ति पूरुषे ॥ २६

धन्यं यशस्यमायुष्यं स्वपक्षोद्भावनं शुभम् ।
ज्ञातीनां न विनाशस्स्याद् यथा कृष्ण तथा कुरु ॥ २७

आयत्यां च तदात्वे च न तेऽस्त्यविदितं प्रभो ।
षाड्गुण्यस्य विधानेन यात्रा यानविधौ तथा ॥ २८

माधवाः कुकुरा भोजास् सर्वे चान्धकवृष्णयः ।
त्वय्यायत्ता महाबाहो लोके लोकेश्वराश्च ये ॥ २९

त्वद्बुद्धिं समुपासन्ते ऋषयश्चापि माधव ॥ २९॥

त्वं गुरुस्सर्वभूतानां जानीषे त्वं परां गतिम् ।
त्वामासाद्य यदुश्रेष्ठम् एधन्ते यादवास्सुखम् ॥ ३०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥
॥ ८६ ॥ राजधर्मपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६॥
[ अस्मिन्नध्याये ३०॥ श्लोकाः ]

---

1. अ-क-घ—अर्धचतुष्टयं नास्ति

## ॥ षट्सप्ततितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रत्यमात्यपरीक्षार्थं कालकवृक्षणीयोपाख्यानकथनम् ॥

भीष्मः—

एषा ते प्रथमा वृत्तिर् द्वितीयां शृणु भारत ।
यः कश्चिद्वेदयेदर्थं राज्ञा रक्ष्यस्स मानवः ॥ १

ह्रियमाणममात्येन भृत्यो वा यदि [1]वा हृतः ।
यो राजकोशं नश्यन्तम् आचक्षीत युधिष्ठिर ॥ २

श्रोतव्यं तस्य च रहो रक्ष्यश्चामात्यतो भवेत् ।
अमात्यं चोप[2]हर्तारं भूयिष्ठं घ्नन्ति भारत ॥ ३

राजकोशस्य गोप्तारं राजकोशविलोपकाः ।
समेत्य सर्वे बाधन्ते स विनश्यत्यरक्षितः ॥ ४

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
मुनिः कालकवृक्षणीयः कौसल्यं यदुवाच ह ॥ ५

कौसल्यानामाधिपत्यं सम्प्राप्ते क्षेमदर्शिनि ।
मुनिः कालकवृक्षणीय आजगामेति नश्श्रुतम् ॥ ६

स काकं पञ्जरे बद्ध्वा विषयं क्षेमदर्शिनः ।
सर्वं पर्यचरद्व्यक्तं प्रवृत्त्यर्थं पुनः पुनः ॥ ७

---

1. क-ख—चाहृतः 2. ख—हन्तारं

अधीये वायसीं विद्यां शंसन्ति मम वायसाः ।
अनागतमतिक्रान्तं यच्च सम्प्रति वर्तते ॥ ८

इति राष्ट्रे परिपतन् बहुभिः पुरुषैस्सह ।
सर्वेषां राजयुक्तानां दुष्कृतं परिदृष्टवान् ॥ ९

स बुद्ध्वा तस्य राष्ट्रस्य व्यवसायं हि सर्वशः ।
राज[1]युक्तापचारांश्च सर्वान् बुद्ध्वा ततस्ततः ॥ १०

तमेव काकमादाय राजानं द्रष्टुमागमत् ।
सर्वज्ञोऽस्मीति वचनं ब्रुवाणस्संशितव्रतः ॥ ११

स स्म कौसल्यमागम्य राजामात्यैरलङ्कृतम् ।
प्राह काकस्य वचनाद् अमुत्रेदं त्वया कृतम् ॥ १२

असौ च सम्यग् जानीते राजकोशस्त्वया हृतः ।
एवमाख्याति काकोऽयं तच्छीघ्रमनुगम्यताम् ॥ १३

अथान्यानपि स प्राह राजकोशहृतान् सदा ।
न चास्य किञ्चिदनृतं वचनं श्रूयते क्वचित् ॥ १४

तेन विप्रकृतास्सर्वे राजयुक्ताः कुरूद्वह ।
तमतिक्रम्य सुप्तं तु निशि काकमपोथयन् ॥ १५

वायसं तु विनिर्भिन्नं दृष्ट्वा बाणेन पञ्जरे ।
पूर्वाह्णे ब्राह्मणो वाक्यं क्षेमदर्शिनमब्रवीत् ॥ १६

---

1 .क-ख—युक्तोपचारांश्च

मुनिः—
राजान मभयं याचे प्रभुं प्राणधनेश्वरम् ।
अनुज्ञातस्त्वया ब्रूयां वचनं भवतो हितम् ॥ १७
मित्रार्थमुपसन्तप्तो भक्त्या सर्वात्मनाऽऽगतः ।
ह्रियते हि महार्थश्च [1]पुरुषो विक्रमीत्यपि ॥ १८
सम्बुबोधयिषुर्मित्रं सदश्वमिव सारथिः ।
अपि मन्युप्रसक्तो हि प्रसज्येतेति कारणम् ॥ १९
तथा विभज्य सुहृदा क्षन्तव्यं संविजानता ।
ऐश्वर्यमिच्छता नित्यं पुरुषेण बुभूषता ॥ २०

भीष्मः—
तं राजा प्रत्युवाचेदं यन्मां किञ्चिद् भवान् वदेत् ।
कस्मादहं न क्षमेयम् आकाङ्क्षन्नात्मनो हितम् ॥ २१
ब्राह्मण प्रतिजाने ते प्रब्रूहि यदिहेच्छसि ॥
करिष्यामि हि ते वाक्यं यन्मां विप्र प्रवक्ष्यसि ॥ २२

मुनिः—
विद्वान् नयानपायांश्च भयाख्यातॄन् भयानि च ।
भक्त्या वृत्तिं समाख्यातुं भवतोऽन्तिकमागतः ॥ २३
प्रागेवोक्तं तु दोषाय आचार्यैर्नृपसेवनम् ।
आगतेः कुगतिर्ह्येषा या राज्ञा सह जीविका ॥ २४
आशीविषैश्च तस्याहुस् सङ्गमं यस्य राजभिः ।

---

1. घ—पुरुषे विक्रमत्यपि

बहुमित्राश्च राजानो बह्वमित्रास्तथैव च ॥ २५
तेभ्यस्सर्वेभ्य एवाहुर् भयं राजोपसेविनाम् ।
तथाऽस्य राजतो राजन् मुहूर्तादागतं भयम् ॥ २६
नैकान्तेनाप्रमादो हि शक्यः कर्तुं महीपतौ ।
न तु प्रमादः कर्तव्यः कथञ्चिद्भूतिमिच्छता ॥ २७
प्रमादात् स्खलते बुद्धिस् स्खलतो नास्ति जीवितम् ।
अग्निं दीप्तमुपासीत राजानमुपशिक्षितः ॥ २८
आशीविषमिव क्रुद्धं प्रभुं प्राणधनेश्वरम् ।
यत्नेनोपचरेन्नित्यं नाहमस्मीति मानवः ॥ २९
दुर्व्याहृताच्छङ्कमानो दुस्स्थिताद्दुरनुष्ठितात् ।
दुरासदाद्दुर्व्रजिनाद् इङ्गिताद्ध्यायितादपि ॥ ३०
देवतेव हि सर्वार्थान् कुर्याद्राजा प्रसादितः ।
वैश्वानर इव क्रुद्धस् समूलमपि निर्दहेत् ॥ ३१
इति राजन् प्राह यच्च वर्तते च तथैव तत् ।
अथ भूयांसमेवार्थं करिष्यामि पुनः पुनः ॥ ३२
ददात्यस्मद्विधोऽमात्यो बुद्धिसाहाय्यमापदि ।
वायसस्त्वेव मे राजन्नन्तकायाभिसंहितः ॥ ३३
न च मेऽत्र भवान् भक्तो न च येषां भवान् प्रियः ।
हिताहितांस्तु बुद्ध्येथा मा परोक्षमतिर्भव ॥ ३४

ये त्वादानपरा ये च वसन्ति भवतो गृहे ।
अभूतिकामा भूतानां तादृशैर्मेऽतिसंहितः ॥ ३५

यो वा तव विनाशेन राज्यमिच्छत्यनन्तरम् ।
आन्तरैरभिसन्धाय राज्ञस्सिद्ध्यन्ति चान्यथा ॥ ३६

तेषामहं भयाद्राजन् गमिष्याम्यन्यमाश्रमम् ।
तैर्हि मे सन्धितो बाणः काके निपतितः प्रभो ॥ ३७

छद्मना मम काकश्च गमितो यमसादनम् ।
दृष्टं ह्येतन्मया राजन् पुरा दीर्घेण चक्षुषा ॥ ३८

बहुनक्रझषग्राहां तिमिङ्गिलगणायुताम् ।
काकेन बालिशेनेमाम् अतार्षमहमापगाम् ॥ ३९

स्थाण्वश्मकण्टकवतीं व्याघ्रसिंहगजाकुलाम् ।
दुरासदां दुष्प्रधर्षां गुहां हैमवतीमिव ॥ ४०

अग्निना तामसं दुर्गं नौभिराप्यं च गम्यते ।
राजदुर्गावतरणे नोपायं पण्डिता विदुः ॥ ४१

गहनं भवतो राज्यम् अन्धकारं तमोवृतम् ।
नेह विश्वसितुं शक्यं भवताऽपि कुतो मया ॥ ४२

अतो नायं शुभो वासस् तुल्ये सदसती त्विह ।
वधो ह्येवेह सुकृते दुष्कृते नैव संशयः ॥ ४३

न्यायतो दुष्कृते घातस् सुकृते स्यात् कथं वधः ।

नेह युक्तं स्थिरं स्थातुं जवेनोत नशेद्बुधः ॥ ४४

सीता नाम नदी राजन् प्लवो यस्यां निमज्जति ।
तयोपमामिमां मन्ये वागुरां सर्वघातिनीम् ॥ ४५

मधुप्रपातो हि भवान् भोजनं विषसंयुतम् ।
असतामिव ते भावो वर्तते न सतामिव ॥ ४६

आशीविषैः परिवृतः कूपस्त्वमसि पार्थिव ॥ ४६॥

दुर्गतीर्था बृहत्कूला कावेरी चोरसंवृता ।
नदी मधुरपानीया यथा राजंस्तथा भवान् ॥ ४७॥

श्वगृध्रगोमायुवृतो [1]राजहंससमो ह्यसि ॥ ४८

यथाऽऽश्रित्य महावृक्षं कक्षस्संवर्धते महान् ।
ततस्तं संवृणोत्येव तमतीत्य च वर्धते ॥ ४९

तेनैवोपेन्धनेनेमं दावो दहति दारुणः ।
तथोपमा ह्यमात्यास्ते राजंस्तान् परिशोधय ॥ ५०

भवतैव कृता राजन् भवता परिपालिताः ।
भवन्तं पर्यवज्ञाय जिघांसन्ति भवत्प्रियान् ॥ ५१

उषितं शङ्कमानेन प्रमादं परिरक्षता ।
अन्तस्सर्पं इवागारे वीरपत्न्या इवालये ॥ ५२

शीलं जिज्ञासमानेन राज्ञस्साहसजीविनः ॥ ५२॥

---

1. क-ख—राजहंसोपमो

कच्चिज्जितेन्द्रियो राजा कच्चिदस्यान्तरा जिताः ।
कच्चिदासां प्रियो राजा कच्चिद्राज्ञः प्रजाः प्रियाः ॥ ५३॥

जिज्ञासुरिह सम्प्राप्तस् तवाहं राजसत्तम ।
तस्य मे रोचसे राजन् क्षुधितस्येव भोजनम् ॥ ५४॥

अमात्या मे न रोचन्ते वितृष्णस्य यथोदकम् ।
भवतोऽर्थकृदित्येवं मयि ते दोषमादधन् ॥ ५५॥

विद्यते कारणं नान्यद् इति मे नास्ति संशयः ॥ ५६

न हि तेषामहं द्रोग्धा तत्तेषां द्रोहवद्गतम् ।
अग्ने हि दुर्हृदो [1]हेयं भग्नपृष्ठादिवोरगात् ॥ ५७

राजा—

भूयसा परिहारेण सत्कारेण च भूयसा ।
पूजितो ब्राह्मणश्रेष्ठ भूयो मम गृहे वस ॥ ५८

ये त्वां ब्राह्मण नेच्छन्ति न मे वत्स्यन्ति ते गृहे ।
भवतैव हि तज्ज्ञेयं यदिदानीमनन्तरम् ॥ ५९

यथा स्यात् सुधृतो दण्डो यथा च सुकृतो भवेत् ।
तथा समीक्ष्य भगवञ् श्रेयसे विनियुङ्क्ष्व माम् ॥ ६०

मुनिः—

अदर्शयन्निमं दोषम् एकैकं दुर्बलं कुरु ।

---

1. ख-ध—योऽहं

ततः कारणमाज्ञाय पुरुषं जहि साधु च ॥ ६१

एकदोषा हि बहवो मृद्नीयुरपि कण्टकान् ॥ ६१॥

अर्थे सर्वं जगद्बद्धम् अर्थेन च निबध्यते ।
अर्थे दर्पो मनुष्याणां तस्मादर्थं [1]विरेचय ॥ ६२॥

एकेनैकस्य दोषेण तद्विरुद्धं प्रचोदय ।
स तस्य दोषानुद्घाट्य तस्यार्थं ग्राहयिष्यति ॥ ६३॥

सामपूर्वं च केषाञ्चिद् भेदेन च परस्परम् ।
वैरं कारय भूपाल पश्चाद्दण्डं प्रयोजय ॥ ६४॥

बिल्वेन च यथा बिल्वम् आकारं छाद्य बुद्धिमान् ।
अशुद्धं सचिवं राजन्नशुद्धेनैव नाशय ॥ ६५॥

मन्त्रिभेदभयाद्राजंस् तस्मादेतद्ब्रवीमि ते ॥ ६६

वयं तु ब्राह्मणा नाम मृदुदण्डाः कृपालयाः ।
स्वस्ति चेच्छाम भवतः परमं च यथाऽऽत्मनः ॥ ६७

राजन्नात्मानमाचक्षे सम्बन्धी भवतो ह्यहम् ।
[2]मुनिः कालकवृक्षीय इत्येवमभिसंज्ञितः ॥ ६८

[3]पितुस्सखा च भवतस् सम्मतस्सत्यसङ्गरः ॥ ६८॥

व्यापन्ने भवता राज्ये राजन् पितरि संस्थिते ।

---

1. क-ख-घ—विरोचय 2. ख-घ—द्विजः
3. अ-क-घ—अर्धश्लोकं नास्ति

सर्वान् कामान् परित्यज्य तपस्तप्तं तदा मया ॥ ६९॥
स्नेहात् त्वां प्रब्रवीम्येतन्मा भूयो विभ्रमेदिति ॥ ७०
उभे दुःखसुखे दृष्ट्वा प्राप्य राज्यं यदृच्छया ।
राज्येनामात्यसार्थेन कथं राजन् प्रमाद्यसे ॥ ७१

भीष्मः—

ततो राजकुले नन्दी सञ्जज्ञे भूयसी पुनः ।
पुरोहितकुले चैव सम्प्राप्ते ब्राह्मणर्षभे ॥ ७२
एकच्छत्रां महीं कृत्वा कौसल्याय यशस्विने ।
मुनिः कालकवृक्षीय ईजे क्रतुभिरुत्तमैः ॥ ७३
इदं तद्वचनं श्रुत्वा कौसल्योऽप्यशिषन्महीम् ।
तथा च कृतवान् राजा यथोक्तं तेन धीमता ॥ ७४

इति श्रीमहाभारते शतसहस्त्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥
॥ ८६ ॥ राजधर्मपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
[अस्मिन्नध्याये ७४ श्लोकाः]

---

## ॥ सप्तसप्ततितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति मन्त्र्यादिलक्षणकथनम् ॥

युधिष्ठिरः—

सभासदस्सहायाश्च सुहृदश्च विशां पते ।
परिच्छदास्तथाऽमात्याः कीदृशास्स्युः पितामह ॥ १

भीष्मः—

ह्रीनिषेधास्सदाऽऽसन्नास् सत्यलज्जासमन्विताः ।
शक्ताः कथयितुं दान्तास् ते तव स्युस्सभासदः ॥ २

अमात्याश्चातिशूराश्च ब्रह्मण्याश्च बहुश्रुताः ।
सन्तुष्टाश्चापि कौन्तेय महोत्साहाश्च कर्मसु ॥ ३

एतान् सहायाँल्लिप्सेथास् सर्वास्वापत्सु भारत ॥ ३॥

कुलीनः पूजितो नित्यं न हि शक्तिं निगूहते ।
प्रसन्नमप्रसन्नं वा पीडितं हृतमेव वा ॥ ४॥

आवर्तयति भूयिष्ठं तदेकोऽप्यनुपालितः ॥ ५

कुलीना देशजाः प्राज्ञाः कृपावन्तो बहुश्रुताः ।
प्रगल्भास्त्वनुरक्ताश्च ते तव स्युः परिच्छदाः ॥ ६

दौष्कुलेयाश्च लुब्धाश्च नृशंसा निरपत्रपाः ।
ते त्वां जातु न सेवेयुर् यावत्ते खड्गपाणयः ॥ ७

अर्थ्यमानैश्च सत्कारैर् भोगैरुच्चावचैः प्रियान् ।
यानर्थभाजो मन्येथास् ते ते स्युस्सुखभागिनः ॥ ८

अभिन्नवृत्ता विद्वांसस् सद्वृत्ताश्चरितव्रताः ।
न त्वां नित्यार्थिनो जह्युर् अक्षुद्रास्सत्यवादिनः ॥ ९

अनार्या ये न जानन्ति समयं मन्दचेतसः ।
तेभ्यः परिजुगुप्सेथा ज्ञायेथास्समयच्युतान् ॥ १०

नैकमिच्छेद्गणं हित्वा स्याच्चेदन्यतरग्रहः ।
यस्त्वेको बहुभिश्श्रेयान् कामं तेन गणं त्यजेत् ॥ ११

श्रेयसो लक्षणं चैतद् विक्रमो यस्य दृश्यते ।
कीर्तिप्रधानो यश्च स्यात् समये यश्च तिष्ठति ॥ १२

समर्थान् पूजयेद्यस्तु समृद्धे स्पर्धते न यः ।
न च कामाद्भयात् क्रोधाल्लोभाद्वा धर्ममुत्सृजेत् ॥ १३

अमानी सत्यवाक् शक्तो [1]जितात्मा मान्यमानिता ।
स ते मन्त्रसहायस्स्यात् सर्वावस्थं परीक्षितः ॥ १४

कुलीनः कुलसम्पन्नस् तितिक्षुर्दक्ष आत्मवान् ।
शूरः कृतज्ञस्सत्यज्ञश् श्रेयसः पार्थ लक्षणम् ॥ १५

तस्यैवं वर्तमानस्य पुरुषस्य विजानतः ।
अमित्रास्सम्प्रसीदन्ति तथा मित्रीभवन्त्यपि ॥ १६

1. ब—मितात्मा

अत ऊर्ध्वममात्यानां परीक्षेत गुणागुणान् ।
संयतात्मा कृतज्ञश्च भूतिकामश्च भूमिपः ॥ १७

सम्बद्धः पुरुषैरार्यैर् अभिजातैस्स्वदेशजैः ।
[1]आगतैरस्वव्यतीहारैस् सर्वतस्सुपरीक्षितैः ॥ १८

[2]यौनाश्रौवास्तथा मौलास् तथा चाप्यनुपस्कृताः ।
कर्तव्या भूतिकामेन पुरुषेण बुभूषता ॥ १९

एषां वैनयिकी बुद्धिः प्रकृत्या चैव शोभना ।
तेजो धैर्यं क्षमा शौचम् अनुरागस्स्थितिः[3]पुरा ॥ २०

परीक्षितगुणान् नित्यं प्रौढ[4]भावान् धुरन्धरान् ।
पञ्चोपधाव्यतीतांश्च कुर्याद्राजाऽर्थकारिणः ॥ २१

पर्याप्तवचनान् धीरान् प्रतिपत्तिविशारदान् ।
कुलीनान् सत्यसम्पन्नान् इङ्गितज्ञाननिष्ठुरान् ॥ २२

देशकालविधानज्ञान् भर्तृकार्यहितैषिणः ।
नित्यमर्थेषु सर्वेषु राजन् कुर्वीत मन्त्रिणः ॥ २३

हीनतेजोभिसम्पृक्तो नैव जातु व्यवस्यति ।
अवश्यं जनयत्येव सर्वकार्येषु संशयान् ॥ २४

एवमल्पश्रुतो मन्त्री कल्याणाभिजनोऽप्युत ।

1. घ—अयं पादो नास्ति
2. अ-क—यौनास्त्रौवास्तथा मौखाः
3. ख—क्षितिः
4. क-घ—भारान्

धर्मकामार्थसंयुक्तं नालं मन्त्रं परीक्षितुम् ॥ २६
तथैवानभिजातोऽपि काममस्तु बहुश्रुतः ।
अनायक इवाचक्षुर् मुह्यत्यूह्येषु कर्मसु ॥ २७
यो वाऽप्यस्थिरसङ्कल्पो बुद्धिमानागतागमः ।
उपायज्ञोऽपि नालं स कर्म यापयितुं चिरम् ॥ २८
[1]केवलात् पुनराचारात् कर्मणो नोपपद्यते ।
परिमर्शो विशेषाणाम् अश्रुतस्येह दुर्मतेः ॥ २९
मन्त्रिण्यननुरक्ते तु विश्वासो नेह विद्यते ।
तस्मादननुरक्ताय नैव मन्त्रं प्रकाशयेत् ॥ ३०
व्यथयेद्धि स राजानं मन्त्रिभिस्सहितोऽनृजुः ।
मारुतोपहितैश्छिद्रैः प्रविश्याग्निरिव द्रुमम् ॥ ३१
सङ्क्रुद्ध्यत्येकदा स्वामी स्थानाच्चैवापकर्षति ।
वाचा क्षिपति संरब्धः पुनः पश्चात् प्रसीदति ॥ ३२
न तान्यननुरक्तेन शक्यानीह तितिक्षितुम् ।
मन्त्रिणां च भवेत् क्रोधो विष्फूर्जितमिवाशनेः ॥ ३३
यस्तु संहरते तानि भर्तुः प्रियचिकीर्षया ।
समानसुखदुःखं तं पृच्छेदर्थेषु मानवम् ॥ ३४
अनृजुस्त्वनुरक्तोऽपि सम्मितश्चेतरैर्गुणैः ।

1. ख-घ—केवलान् पुनराचारान्

राज्ञः प्रज्ञानुरक्तोऽपि न मन्त्रं श्रोतुमर्हति ॥ ३५

योऽमित्रैस्सह सम्बद्धो न पौरान् बहुमन्यते ।
स सुहृन् तादृशो राज्ञो न मन्त्रं श्रोतुमर्हति ॥ ३६

अविद्वानशुचिस्स्तब्धश् शत्रुसेवी विकत्थनः ।
असुहृत् क्रोधनो लुब्धो न मन्त्रं श्रोतुमर्हति ॥ ३७

आगस्कृच्चानुरक्तोऽपि काममस्तु बहुश्रुतः ।
सत्कृतस्संविभक्तोऽपि न मन्त्रं श्रोतुमर्हति ॥ ३८

यस्स्वल्पेनापि दोषेण सकृदाक्षारितो भवेत् ।
पुनरन्यैर्गुणैर्युक्तो न मन्त्रं श्रोतुमर्हति ॥ ३९

[1]विधर्मतो विप्रकृतः पिता यस्याभवत् पुरा ।
सत्कृतस्स्थापितस्सोऽपि न मन्त्रं श्रोतुमर्हति ॥ ४०

कृतप्रज्ञश्च मेधावी बुधो जानपदश्शुचिः ।
सर्वकर्मसु यश्शुद्धस् स मन्त्रं श्रोतुमर्हति ॥ ४१

ज्ञानविज्ञानसम्पन्नः प्रकृतिज्ञः परात्मनोः ।
सुहृदात्मसमो राज्ञस् स मन्त्रं श्रोतुमर्हति ॥ ४२

[2]सत्यवाक् शीलसम्पन्नो गम्भीरस्सत्रपो मृदुः ।
पितृपैतामहो यस्स्यात् स मन्त्रं श्रोतुमर्हति ॥ ४३

1. अ-क-घ—अर्धचतुष्टयं नास्ति
2. अ-क-घ—अर्धद्वयं नास्ति

सन्तुष्टस्सम्मतस्सद्भिश् शौण्डीरो द्वेष्यवाचकः ।
मन्त्रवित् कालविच्छूरस् स मन्त्रं श्रोतुमर्हति ॥ ४४
सर्वलोकमिमं [1]श्चुक्तस् सान्त्वेन कुरुते वशम् ।
मन्त्रस्तस्मै प्रयोक्तव्यो दण्डमाधित्सताऽच्युत ॥ ४५
पौरजानपदा यस्मिन् विश्वासं धर्मतो गताः ।
योद्धा नये विपश्चिच्च स मन्त्रं श्रोतुमर्हति ॥ ४६
तस्मात् सर्वैर्गुणैरेतैर् उपपन्नास्सुपूजिताः ।
मन्त्रिणः प्रकृतिज्ञास्स्युस् त्र्यवरा महदीप्सवः ॥ ४७
स्वासु प्रकृतिषु च्छिद्रं लक्षयेरन् परस्य च ।
मन्त्रिणो मन्त्रमूलं हि राज्ञो राज्यं विवर्धते ॥ ४८
नास्य च्छिद्रं परः पश्येच् छिद्रे तु परमन्वियात् ।
गूहेत् कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ ४९
मन्त्रग्राहा हि राज्यस्य मन्त्रिणो ये मनीषिणः ।
मन्त्रसंहननो राजा मन्त्राङ्गानीतरे जनाः ॥ ५०
राज्यं प्रणिधिमूलं हि मन्त्रसारं प्रचक्षते ।
स्वामिनं चानुवर्तन्ते वृत्त्यर्थमिह मन्त्रिणः ॥ ५१
संविनीय मदक्रोधौ मानमीर्ष्यां च निर्वृताः ।
नित्यं पञ्चोपधातीतैर् मन्त्रयेत् सह मन्त्रिभिः ॥ ५२

1. ख—शक्यं च—शुक्तं

तेषां त्रयाणां त्रिविधं विमर्शं
बुद्ध्येत बुद्धिं विनिवेश्य तत्र ।
स्वनिश्चयं तं परनिश्चयं च
निदर्शयेदुत्तममन्त्रकाले ॥ ५३

धर्मार्थकामज्ञमुपेत्य पृच्छेद्
युक्तो गुरुं ब्राह्मणमुत्तमार्थान् ।
निष्ठा कृताऽनेन यदा सहस्यात्
तं तत्र मार्गं प्रणयेदसक्तम् ॥ ५४

एवं सदा मन्त्रयितव्यमाहुर्
ये मन्त्रतत्त्वार्थविनिश्चयज्ञाः ।
तस्मात्त्वमेवं प्रणयेस्सदैव
मन्त्रं प्रजासङ्ग्रहणे समर्थम् ॥ ५५

न वामनाः कुब्जकिरातखञ्जा
नान्धा जडास्स्त्रैणनपुंसकाश्च ।
न चात्र तिर्यक् च पुरो न पश्चा-
न्नोर्ध्वं न चाधः प्रचरेत कश्चित् ॥ ५६

आरुह्य पापस्तु तथैव शून्यं
स्थलं प्रकाशं कुशकाशहीनम् ।

वागङ्गदोषान् परिहृत्य तन्त्रं
सम्मन्त्रयेन्मन्त्रमहीन[1]कालम् ॥ ५७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥
॥ ८६ ॥ राजधर्मपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥
[ अस्मिन्नध्याये ५७ श्लोकाः ]

---

## ॥ अष्टसप्ततितमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति इन्द्रबृहस्पतिसंवादानुवादः ॥

---

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
बृहस्पतेश्च संवादम् इन्द्रस्य च युधिष्ठिर ॥ १

इन्द्रः—

किंस्विदेकपदं ब्रह्मन् पुरुषस्सम्यगाचरन् ।
प्रमाणं सर्वभूतानां यशश्चैवाप्नुयान्महत् ॥ २

बृहस्पतिः—

सान्त्वमेकपदं [2]शक्र पुरुषस्सम्यगाचरन् ।
प्रमाणं सर्वभूतानां यशश्चैवाप्नुयान्महत् ॥ ३
एतदेकपदं [3]शक्र सर्वलोकसुखावहम् ।

---

1. घ—कालः   2. घ—शक्रौ   3. घ—शक्रौ

आचरन् सर्वभूतेषु प्रियो भवति सर्वदा ॥ ४

यो हि नाभाषते किञ्चित् सततं भ्रुकुटीमुखः ।
द्वेष्यो भवति भूतानां स सान्त्वमिह नाचरन् ॥ ५

यस्तु पूर्वमभिप्रेक्ष्य पूर्वमेवाभिभाषते ।
स्मितपूर्वाभिभाषी च तस्य लोकः प्रसीदति ॥ ६

दानमेव हि सर्वत्र सान्त्वेनानभिकल्पितम् ।
न प्रीणयति भूतानि निर्व्यञ्जनमिवाशनम् ॥ ७

आददन्नपि भूतानां मधुरामीरयन् गिरम् ।
सर्वलोकमिमं [1]शक्र सान्त्वेन कुरुते वशे ॥ ८

तस्मात् सान्त्वं प्रयोक्तव्यं दण्डमाधित्सतामपि ।
प्रीतिं च जनयत्येवं न चास्योद्विजते जनः ॥ ९

सुकृतस्य हि सान्त्वस्य श्लक्ष्णस्य मधुरस्य च ।
सम्यगासेव्यमानस्य तुल्यं जातु न विद्यते ॥ १०

भीष्मः—

इत्युक्तः कृतवान् सर्वं तथा शक्रः पुरोधसा ।
तथा त्वमपि कौन्तेय सम्यगेतत् समाचर ॥ ११

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥
॥ ८६ ॥ राजधर्मपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
[अस्मिन्नध्याये ११ श्लोकाः]

---

1. घ—शत्रुं

## ॥ एकोनाशीतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति अमात्यलक्षणादिकथनम् ॥

युधिष्ठिरः—

कथंस्विदिह राजेन्द्र पालयन् पार्थिवः प्रजाः ।
प्रीतिं धर्मं विशेषेण कीर्तिं चाप्नोति शाश्वतीम् ॥ १

भीष्मः—

व्यवहारेण शुद्धेन प्रजापालनतत्परः ।
प्राप्य धर्मं च कीर्तिं च लोकानाप्नोत्यसौ शुचिः ॥ २

युधिष्ठिरः—

कीदृशं व्यवहारं तु कैश्च व्यवहरेन्नृपः ।
एतत् पृष्टो महाप्राज्ञ यथावद्वक्तुमर्हसि ॥ ३

ये चैते पूर्वकथिता गुणास्ते पुरुषं प्रति ।
नैकस्मिन् पुरुषे ह्येते विद्यन्त इति मे मतिः ॥ ४

भीष्मः—

एवमेतन्महाप्राज्ञ यथा वदसि बुद्धिमान् ।
दुर्लभः पुरुषः कश्चिद् एभिर्युक्तो गुणैश्शुभैः ॥ ५

किं तु सङ्क्षेपतश्शीलं प्रयत्नेनेह दुर्लभम् ।
वक्ष्यामि तु यथाऽमात्यान् यादृशांश्च करिष्यसि ॥ ६

चतुरो ब्राह्मणान् वैद्यान् प्रगल्भान् स्नातकाञ् शुचीन् ।
क्षत्रियान् दश चाष्टौ च बलिनश्शस्त्रपाणयः ॥ ७
वैश्यान् वित्तेन सम्पन्नान् एकविंशतिनित्यशः ।
त्रिंशच्छूद्रान् विनीतांश्च शुचीन् कर्मणि पूर्वके ॥ ८
अष्टाभिश्च गुणैर्युक्तं सूतं पौराणिकं चरेत् ।
पञ्चाशद्वर्षवयसं प्रगल्भमनसूयकम् ॥ ९
मतिस्मृतिसमायुक्तं विनीतं समदर्शिनम् ।
कार्ये विवदमानानां शक्तमर्थेष्वलोलुपम् ॥ १०
विवर्जितानां व्यसनैस् सुघोरैस्सप्तभिर्भृशम् ।
अष्टानां मन्त्रिणां मध्ये मन्त्रं राजोपधारयेत् ॥ ११
ततस्सम्प्रेषयेद्राजा राष्ट्रिकायोपदर्शयेत् ।
अनेन व्यवहारेण द्रष्टव्यास्ते प्रजास्सदा ॥ १२
न चापि गूढं द्रव्यं ते ग्राह्यं कार्योपघातकम् ।
कार्ये खलु विपन्ने तु यो धर्मस्तं च पीडयेत् ॥ १३
विद्रवेत च राष्ट्रं ते श्येनात् पक्षिगणा इव ।
परिवेपेत च सदा नौर्विशीर्णेव सागरे ॥ १४
प्रजाः पालयतोऽसम्यग् अधर्मेणैव भूपतेः ।
हार्दं भयं संवदन्ति स्वर्गं चास्य निरुध्यते ॥ १५
अथ यो धर्मतः पाति राजाऽमात्योऽथवाऽऽत्मजः ।

धर्मासने सन्नियुक्तो धर्ममूलो नरर्षभ ॥ १६

स्वर्गं याति महीपालो नियुक्तैस्सचिवैस्सह ॥ १६॥

कार्येष्वधिकृतास्सम्यग् अवर्तन्तो नृपानुगाः ।
आत्मानं पुरतः कृत्वा यान्त्यधस्सहपार्थिवाः ॥ १७॥

वलात्कृतानां वहुभिः कृपणं वहुजल्पताम् ।
नाथो वै भूमिपो नित्यम् अनाथानां नृणां भवेत् ॥ १८॥

यतस्साक्षिवलं साधु [1]द्वेधा वादकृतं भवेत् ।
[2]असाक्षिकमनाथं वा परीक्ष्यं तद्विशेपतः ॥ १९॥

अपराधानुरूपं तु दण्डं पापेषु धारयेत् ।
वियोजयेद्धनैर्लुब्धान् दरिद्रान् वधवन्धनैः ॥ २०॥

विनयेच्चापि दुर्वृत्तान् प्रहारैरपि पार्थिवः ।
सान्त्वेनोपप्रदानेन शिष्टांश्च परिपालयेत् ॥ २१॥

राज्ञो वधं चिकीर्षेद्यश् चित्रस्तस्य वधो भवेत् ॥ २२

आजीविकस्य स्तेनस्य वर्णसङ्करकस्य च ।
सम्यक् प्रणयतो दण्डं भूमिपस्य विशां पते ॥ २३

युक्तस्य वा नास्त्यधर्मो धर्म एव हि शाश्वतः ॥ २३॥

कामकारेण दण्डं तु यः कुर्यादविचक्षणः ।

---

1. अ-क—द्वेषाद्वाद　　2. क-ख—अर्धद्वयं नास्ति

स इहाकीर्तिसंयुक्तो मृतो नरकमश्नुते ॥ २४॥

न परस्यापराधेन परेषां दण्डमर्पयेत् ।
आगमानुगमं कृत्वा बध्नीयान्मोचयेत वा ॥ २५॥

न तु हन्यान्नृपो जातु दूतं कस्याञ्चिदापदि ॥ २६
दूतस्य हन्ता निरयम् आविशेत् सचिवैस्सह ॥ २६॥

यथोक्तवचनं दूतं क्षत्रधर्मरतो नृपः ।
यो हन्यात् पितरस्तस्य भ्रूणहत्यामवाप्नुयुः ॥ २७॥

कुलीनश्शीलसम्पन्नो वाग्मी दक्षः प्रियंवदः ।
यथोक्तवादी स्मृतिमान् दूतस्स्यात् सप्तभिर्गुणैः ॥ २८॥

एतैरेव गुणैर्युक्तः प्रतीहारोऽस्य रक्षिता ।
शरीरेण च नीरूक्षो गुणैरेतैस्समन्वितः ॥ २९॥

धर्मशास्त्रार्थतत्त्वज्ञस् सन्धिविग्रहिको भवेत् ।
मतिमान् स्मृतिमान् धीमान् रहस्ये परिनिष्ठितः ॥ ३०॥

कुलीनस्सत्यसम्पन्नश् शुक्लोऽमात्यः प्रशस्यते ।
एतैरेव गुणैर्युक्तस् तथा सेनापतिर्भवेत् ॥ ३१॥

व्यूहयन्त्रायुधीयानां तत्त्वज्ञो विक्रमान्वितः ।
वर्षशीतोष्णवातानां सहिष्णुः पररन्ध्रवित् ॥ ३२॥

विश्वासयेत् परांश्चैव विश्वसेच्च न कस्यचित् ।
पुत्रेष्वपि हि राजेन्द्र विश्वासो न प्रशस्यते ॥ ३३॥

एतच्छास्त्रार्थतत्त्वं तु मयाऽऽख्यातं तवानघ ।
अविश्वासो नरेन्द्राणां गुह्यं परममच्युत ॥ ३४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥
॥ ८६ ॥ राजधर्मपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥
॥ अस्मिन्नध्याये ३४॥ श्लोकाः ॥

## ॥ अशीतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति पुरलक्षणादिकथनम् ॥

युधिष्ठिरः—

कथंविधं पुरं राजा स्वयमावस्तुमर्हति ।
कृतं वा कारयित्वा वा तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

यत्र कौन्तेय वस्तव्यं सपुत्र[1]भ्रातृबन्धुना ।
न्याय्यं तत्र परिप्रष्टुं गुप्तिं वृत्तिं च भारत ॥ २
तस्मात् ते वर्तयिष्यामि दुर्गकर्म विशेषतः ।
श्रुत्वा तथा विधातव्यम् अनुष्ठेयं च यत्नतः ॥ ३
षड्विधं दुर्गमास्थाय पुराण्यभिनिवेशयेत् ।

1. अ—ज्ञाति

सर्वसम्पत्प्रधानं च बाहुल्यं वाऽप्यसम्भवे ॥ ४

धन्वदुर्गं महीदुर्गं गिरिदुर्गं तथैव च ।
मनुष्यदुर्गमब्दुर्गं वनदुर्गं च तानि षट् ॥ ५

यत् पुरं दुर्गसम्पन्नं धान्यायुधसमन्वितम् ।
दृढप्राकारपरिखं हस्त्यश्वरथसङ्कुलम् ॥ ६

विद्वांसश्शिल्पिनो यत्र निचयाश्च सुसञ्चिताः ।
धार्मिकश्च जनो यत्र दाक्ष्यमुत्तममास्थितः ॥ ७

ऊर्जस्विनरनागाश्वं चत्वरापणशोभितम् ।
प्रसिद्धव्यवहारं च प्रशान्तमकुतोभयम् ॥ ८

सुप्रभं सानुनादं च सुप्रशस्तनिवेशनम् ।
शूराढ्यं प्राज्ञसम्पूर्णं ब्रह्मघोषानुनादितम् ॥ ९

समाजोत्सवसम्पन्नं सदापूजितदैवतम् ।
वश्यामात्यबलो राजा तत् पुरं स्वयमाविशेत् ॥ १०

तत्र कोशं बलं मित्रं व्यवहारं च वर्धयेत् ।
पुरे जनपदे चैव सर्वदोषान् निवर्तयेत् ॥ ११

भाण्डागारायुधागारं प्रयत्नेनाभिवर्धयेत् ।
निचयान् वर्धयेत् सर्वास् तथा यन्त्रकटङ्कटान् ॥ १२

काष्ठलोहतुषाङ्गारदारुपाषाणसञ्चयान् ।

[1]मज्जास्नेहेन सक्षौद्राण्यौषधान्यगदानि च ॥ १३

शणं सर्जरसं धान्यम् आयुधानि शरांस्तथा ।
चर्म स्नायुं तथा वेत्रं मुञ्ज[2]बिल्वाजिनान्वितान् ॥ १४

आरामांश्चोदपानांश्च प्रभूतसलिलान् वरान् ॥ १४॥

निरोद्धव्यास्सदा राज्ञा क्षीरिणश्च महीरुहाः ॥ १५

सत्कृताश्च प्रयत्नेन आचार्यर्त्विक्पुरोहिताः ।
महेष्वासास्स्थपतयस् सांवत्सरचिकित्सकाः ॥ १६

प्राज्ञा मेधाविनो दक्षा दान्ताश्शूरा बहुश्रुताः ।
कुलीनास्सत्त्वसम्पन्ना युक्तास्सर्वेषु कर्मसु ॥ १७

पूजयेद्धार्मिकान् राजा निगृह्णीयादधार्मिकान् ।
नियुञ्ज्याच्च प्रयत्नेन सर्ववर्णान् स्वकर्मसु ॥ १८

बाह्यमाभ्यन्तरं चैव पौरजानपदं जनम् ।
[3]चारैस्सुविदितं कृत्वा ततः कर्म प्रयोजयेत् ॥ १९

चारं[4]मन्त्रं च कोशं च दण्डं चैव विशेषतः ।
अनुतिष्ठेत् स्वयं राजा सर्वं ह्यत्र प्रतिष्ठितम् ॥ २०

उदासीनारिमित्राणां सर्वमेव चिकीर्षितम् ।

---

1. ख—मज्जास्नेहवसा
2. ख—बल्बजदंध्वनान्     घ—बिल्वजधन्वनात्
3. क-घ—द्वारैः ?     4. घ—कर्म च

पुरे जनपदे चैव ज्ञातव्यं ज्ञानचक्षुषा ॥ २१
ततस्तथा विधातव्यं सर्वमेवाप्रमादतः ।
भक्तान् पूजयता नित्यं द्विषतश्च निगृह्णता ॥ २२
यष्टव्यं क्रतुभिर्नित्यं दातव्यं चाप्यपीडया ।
प्रजानां रक्षणं कार्यं न कार्यं कर्म गर्हितम् ॥ २३
कृपणानाथवृद्धानां विधवानां च योषिताम् ।
योगक्षेमं च वृत्तिं च नित्यमेव प्रकल्पयेत् ॥ २४
आश्रमेषु यथाकामं चेलभोजनभाजनम् ।
स्वयं तूपहरेद्राजा [1]सत्कृत्यानवमत्य च ॥ २५
आत्मानं सर्वकार्याणि तापसे राज्यमेव च ।
निवेदयेत् प्रयत्नेन तिष्ठेत् प्रह्वश्च नित्यदा ॥ २६
सर्वार्थत्यागिनं राजा कुले जातं बहुश्रुतम् ।
पूजयेत् तादृशं दृष्ट्वा शयनासनभोजनैः ॥ २७
तस्मिन् कुर्वीत विश्वासं राजा कस्यांश्चिदापदि ।
तापसेषु हि विश्वासं नाधिकुर्वन्ति दस्यवः ॥ २८
तस्मिन् निधीनादधीत पुनः प्रत्याददीत च ।
न चाप्यभीक्ष्णं सेवेत भृशं वा प्रतिपूजयेत् ॥ २९
अन्यः कार्यस्स्वराष्ट्रेषु परराष्ट्रेषु चापरः ।

---

1. अ-क-घ—इतोऽर्धद्वयं नास्ति

अटवीष्वपरः कार्यस् सामन्तनगरेऽपरः ॥ ३०

तेषु सत्कारसम्पन्नं संविभागं च कारयेत् ।
परराष्ट्राटवीष्वेषु यथात्मविषये तथा ॥ ३१

ते कस्याञ्चिदवस्थायां शरणं शरणार्थिने ।
राज्ञे दद्युर्यथाकामं तापसास्संशितव्रताः ॥ ३२

एष ते लक्षणोद्देशस् सङ्क्षेपेण प्रकीर्तितः ।
यादृशं नगरं राजा स्वयमावस्तुमर्हति ॥ ३३

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अशीतितमोऽध्यायः॥ ८० ॥
॥ ८६ ॥ राजधर्मपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
[अस्मिन्नध्याये ३३ श्लोकाः]

---

## ॥ एकाशीतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति राष्ट्रगुप्तिप्रकारादिकथनम् ॥

---

युधिष्ठिरः—

राष्ट्रगुप्तिं च मे राजन् राष्ट्रस्यैव च सङ्ग्रहम् ।
[1]सम्यग्जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥ १

भीष्मः—

[2]राष्ट्रगुप्तिं च ते सम्यग् राष्ट्रस्यैव तु सङ्ग्रहम् ।

---

1. ब—नास्तीदमर्धम्　　2. अ-क-ब—नास्तीदमर्धम्

हन्त ते सम्प्रवक्ष्यामि तत्त्वमेकमनाश्शृणु ॥ २

ग्रामस्याधिपतिः कार्यो दशग्रामपतिस्तथा ।
विंशत्त्रिंशच्छतेशं च सहस्रस्य च कारयेत् ॥ ३

ग्रामेयान् ग्रामदोषांश्च ग्रामिकः परिपालयेत् ।
तानाचक्षीत दशिने दशिको विंशिने पुनः ॥ ४

विंशाधिपस्तु तत् सर्वं वृत्तं जानपदे जने ।
ग्रामाणां शतपालाय सर्वमेतन्निवेदयेत् ॥ ५

यानि ग्रामिकभोज्यानि ग्रामिकस्तान्युपाश्नुते ।
दशिकेन विभक्तव्यो दशिना विंशतिस्तथा ॥ ६

ग्रामं ग्रामशताध्यक्षो भोक्तुमर्हति सत्कृतः ॥ ६॥

तदा तद् भरतश्रेष्ठ सुस्फीतं जनसङ्कुलम् ।
तत्र ह्यनेकमायत्तं राज्ञो भवति भारत ॥ ७॥

शाखानगरमर्हस्तु सहस्रपतिरुत्तमम् ।
धान्यहैरण्यभोगेन भोक्तुं राष्ट्रीयसंज्ञितः ॥ ८॥

तेषां यद् ग्रामकृत्यं स्याद् राष्ट्रकृत्यं च यद्भवेत् ।
धर्मज्ञस्सचिवः कश्चित् तदवेक्षेदतन्द्रितः ॥ ९॥

नगरे नगरे वा स्याद् एकस्सर्वार्थचिन्तकः ।
उच्चैस्स्थाने घोररूपो नक्षत्राणामिव ग्रहः ॥ १०॥

स च तान् सम्परिक्रामेत् सर्वानेव सदा सदा ।
तेषां वृत्तिं परिणयेत् सम्यग्राष्ट्रेषु तच्चरैः ॥ ११॥

जिघांसवः पापकामाः परस्वादायिनश्शठाः ।
तत्तद्रक्षास्वधिकृतास् तेभ्यो रक्षेदिमाः प्रजाः ॥ १२॥

विक्रयं क्रयमध्वानं भक्तं च सपरिव्ययम् ।
योगक्षेमं च सम्प्रेक्ष्य वणिजां कारयेत् करान् ॥ १३॥

उत्पत्तिं चानुवृत्तिं च फलं सम्प्रेक्ष्य चासकृत् ।
शिल्पं प्रति करानेवं शिल्पिनः प्रति कारयेत् ॥ १४॥

[1]उच्चावचाः करन्यायाः पूर्वराज्ञां युधिष्ठिर ।
यथा यथा न हीयेयुस् तथा कुर्यान्महीपतिः ॥ १५॥

फलं कर्म च सम्प्रेक्ष्य तथा सर्वं प्रकल्पयेत् ।
फलं कर्म च निर्हेतु न कश्चित् सम्प्रवर्तयेत् ॥ १६॥

यथा राजा च कर्ता च स्यातां कर्मणि भागिनौ ।
समवेक्ष्य तथा राज्ञा प्रणेयास्सततं कराः ॥ १७॥

नोच्छिन्द्यादात्मनो मूलं परेषां वाऽतितृष्णया ।
ईहाद्वाराणि संरुध्य राजा संवृतदर्शनः ॥ १८॥

प्रद्विषन्त्यपरिख्यातं राजानमतिवादिनम् ।
प्रद्विष्टस्य कुतश्श्रेयोऽसंवृतो लभते श्रियम् ॥ १९॥

---

1. अ—पौरजानपदान् सर्वान् संश्रितोपाश्रितांस्तथा । [अधिकः पाठः]

[1]वत्सौपम्येन दोग्धव्यं राष्ट्रमक्षीणबुद्धिना ।
ततो वत्सो जातबलः पीडां सहति भारत ॥ २०॥

न कर्म कुरुते वत्सो दुग्धेऽत्यर्थं युधिष्ठिर ।
राष्ट्रमप्यतिदुग्धं हि न कर्म कुरुते महत् ॥ २१॥

यो राष्ट्रमनुगृह्णाति परिगृह्य स्वयं नृप ।
सञ्जातमुपजीवानो [2]लभते सुमहत् फलम् ॥ २२॥

आपदर्थं च निचयान् राजान इह चिन्वते ।
राष्ट्रं ते कोशभूतं स्यात् कोशो वेश्मग्रहस्तथा ॥ २३॥

पौरजानपदान् सर्वान् संश्रितोपाश्रितांस्तथा ।
यथाशक्त्यनुकम्पेत सर्वानन्तचरानपि ॥ २४॥

बाह्यं जनं भोजयित्वा भोक्तव्यो मध्यमस्सुखम् ।
एवं न सम्प्रकुप्यन्ते जनास्सुखितदुःखिताः ॥ २५॥

प्रागेव तु धनादानाद् अनुभाष्य पुनः पुनः ।
सन्निपात्य स्वविषयं भयं राष्ट्रे प्रदर्शयेत् ॥ २६॥

इयमापत् समुत्पन्ना परचक्रभयं महत् ।
अपि नान्ताय कल्पेत वेणोरिव फलागमः ॥ २७॥

अरयो मां समुत्थाय बहुभिर्दस्युभिस्सह ।
भृशमात्मवधायैव राष्ट्रमिच्छन्ति बाधितुम् ॥ २८॥

---

1. ख—वत्सोपमेन 2. ख—विन्दते

अस्यामापदि घोरायां सम्प्राप्ते दारुणे भये ।
परित्राणाय भवतां प्रार्थयिष्ये धनानि च ॥ २९॥
प्रति प्रदास्ये भवतां सर्वं चाहं भयक्षये ।
[1]नारयः प्रतिदास्यन्ति यद्धरेयुर्बलादितः ॥ ३०॥
कलत्रमादिं कृत्वा च सर्वस्वं विनशेदिति ।
शरीरपुत्रदारार्थम् अर्थसञ्चय इष्यते ॥ ३१॥
नन्दामि वः प्रभावेण पुत्राणामिव चोदये ।
यथाशक्त्यनुगृह्णामि राष्ट्रस्यापीडनाय च ॥ ३२॥
आपत्स्वेव निवोढव्यं भवद्भिस्सङ्गतैरिह ।
न वः प्रियतरं कार्यं धनं कस्याञ्चिदापदि ॥ ३३॥
इति वाचा मधुरया श्लक्ष्णया सोपचारया ।
स्वरश्मीनभ्यवसृजेद् योगमाधाय कालवित् ॥ ३४॥
प्रचारं भृत्यभरणं व्ययं गोग्रामतो भयम् ।
योगक्षेमं च सम्प्रेक्ष्य गोमिनः कारयेत् करान् ॥ ३५॥
उपेक्षिता [2]हि नश्येयुर् गोमिनोऽरण्यवासिनः ।
तस्मात् तेषु विशेषेण मृदुपूर्वं समाचरेत् ॥ ३६॥
सान्त्वे[3]नापेक्षणं दानम् [4]अवेक्षा चाप्यभीक्ष्णशः ।

---

1. घ—नानयं प्रतिदास्यन्ति बन्धयेयु
2. क-ख—ऽभिगच्छेयुः (हि गच्छेयुः)
3. ख-घ—नावेक्षणं　　4. ख—अपेक्षा

गोमिनां पार्थ कर्तव्यस् संविभागः प्रियाणि च ॥ ३७॥

अजस्र[1]मुपभोक्तव्यं फलं गोमिषु सर्वशः ।
[2]प्रभावयति राष्ट्रं च व्यवहारं कृषिं तथा ॥ ३८॥

तस्माद्गोमिषु यत्नेन प्रीतिं कुर्याद्विचक्षणः ।
दयावानप्रमत्तश्च करान् सम्प्रणयेन्मृदून् ॥ ३९॥

सर्वत्र क्षेमचरणं सुलभं नाम गोमिभिः ।
[3]न ह्यतस्सदृशं किञ्चिद् धनमस्ति युधिष्ठिर ॥ ४०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥
॥ ८६ ॥ राजधर्मपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
[अस्मिन्नध्याये ४०॥ श्लोकाः]

---

1. अ—मुपयोक्तव्यं
2. अ—प्रभावयन्ति
3. अ-क-घ—नास्तीदमर्थम्

## ॥ द्व्यशीतितमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति प्रजाभ्यः करग्रहणादिप्रकारकथनम् ॥

युधिष्ठिरः—

यदा राजा समर्थोऽपि कोशार्थी स्यान्महामते ।
कथं प्रवर्तेत करस् तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

यथादेशं यथाकालम् अपि चैवं यथाबलम् ।
अनुशिष्यात् प्रजा राजा धर्मात्मा तद्धिते रतः ॥ २

यथा तासां च मन्येत श्रेय आत्मन एव च ।
तथा सर्वाणि धर्माणि [1]राष्ट्रे राजा प्रवर्तयेत् ॥ ३

मधुदोहं दुहेद्राष्ट्रं भ्रमरान्न प्रतापयेत् ।
वत्सापेक्षी दुहेच्चैव स्तनांश्चापि न कुट्टयेत् ॥ ४

जलूकावत् पिबेद्राष्ट्रं मृदुनैव नराधिपः ।
व्याघ्री वाऽपि वहेत् पुत्रान् न दंशेन्न च पीडयेत् ॥ ५

यथा बिडालकः कर्णे आखुः पादत्वचं यथा ।
अतीक्ष्णेनाभ्युपायेन तथा राष्ट्रं समापिबेत् ॥ ६

अल्पेनाल्पेन देयेन वर्धमानं प्रदापयेत् ।

1. अ—राजा राष्ट्रेषु वर्तयेत्

ततो भूयस्ततो भूयः क्रयवृद्धिं समाचरेत् ॥ ७
दमयन्निव दम्यानां शश्वद्भारं विवर्धयेत् ।
मृदुपूर्वं प्रयत्नेन पाशमभ्यवहारयेत् ॥ ८
असत्पाशावकीर्णास्ते भविष्यन्ति हि [1]दुर्मदाः ।
उचितेनैव भोक्तव्यास् ते भविष्यन्त्ययत्नतः ॥ ९
तस्मात् सर्वसमारम्भो दुर्लभः पुरुषं प्रति ।
यथामुख्यान् सान्त्वयित्वा भोक्तव्या इतरे जनाः ॥ १०
ततस्तान् भेदयित्वाऽथ परस्परविवर्जितान् ।
भुञ्जीत सान्त्वयित्वेह यथाकालमयत्नतः ॥ ११
न चास्थाने न चाकाले करानेभ्यो निपातयेत् ।
आनुपूर्व्येण सान्त्वेन यथाकालं यथाविधि ॥ १२
उपायान् प्रब्रवीम्येतान् न मे माया विवक्षिता ।
अनुपायेन दमयन् प्रकोपयति वा जनम् ॥ १३
पानागारनिवेशांश्च वेशप्रापणिकांस्तथा ।
कितवान् कुशीलवांश्चैव ये चान्ये केचिदीदृशाः ॥ १४
नियम्यास्सर्व एवैते ये राष्ट्रस्योपघातकाः ।
राष्ट्रस्यैते प्रवर्तन्ते बाधन्ते भद्रिकाः प्रजाः ॥ १५
न केनचिद्याचितव्यः कश्चित् किञ्चिदनापदि ।

1. अ—दुर्दमाः

इति व्यवस्था भूतानां पुरस्तान्मनुना कृता ॥ १६

सर्वे तथा न जीवेयुर् न कुर्युः कर्म [1]चोदितम् ।
सर्व एव त्रयो लोका न भवेयुरसंशयम् ॥ १७

प्रभुर्नियमने राजा य एतान् न नियच्छति ।
भुङ्क्ते स तस्य पापस्य चतुर्भागमिति श्रुतिः ॥ १८

नियन्तव्यास्तु ते राज्ञा पापा ये स्युस्सदा नराः ॥ १८॥

कृतपापस्त्वसौ राजा य एतान् न नियच्छति ।
तथा कृतस्याधर्मस्य चतुर्भागमुपाश्नुते ॥ १९॥

स्थानान्येतानि संयम्य प्रसङ्गो भूतिनाशनः ।
कोऽतिप्रसक्तः पुरुषः किमकार्यं विवर्जयेत् ॥ २०॥

आपद्येव तु याचेरन् येषां नास्ति परिग्रहः ।
दातव्यं धर्मतस्तेभ्यस् त्वनुक्रोशाद्दयार्थिना ॥ २१॥

मा ते राष्ट्रे याचनका भवेयुर्मा च दस्यवः ।
उपादातार एवैते नैते भूतस्य [2]भावकाः ॥ २२॥

ये भूतान्यनुगृह्णन्ति वर्धयन्ति च ये प्रजाः ।
ते ते राष्ट्रे प्रवर्तन्तां मा भूतानां प्रबाधकाः ॥ २३॥

दण्डार्हास्ते महाराज धनादानप्रयोजनाः ।
प्रयोगं कारयेथास्ते यथा दद्युः करांस्तथा ॥ २४॥

---

1. क-ब—चोदिताः 2. घ—पावकाः

कृषिगोरक्ष्यवाणिज्यं यच्चान्यत् किञ्चिदीदृशम् ।
पुरुषैः कारयेद्राजा बहुभिस्सह कर्मभिः ॥ २५॥

न रक्षेत् कृषिगोरक्ष्यं वाणिज्यं चाप्यनुष्ठितः ।
संशयं लभते किञ्चित् तेन राजा विगर्ह्यते ॥ २६॥

धनिनः पूजयेन्नित्यं धनाच्छादनभोजनैः ।
वक्तव्यमनुगृह्णीध्वं प्रजास्सह मयेत्यथ ॥ २७॥

अङ्गमेतन्महाराज्ञो धनिनो नाम भारत ।
ककुदं सर्वभूतानां धनस्थो नात्र संशयः ॥ २८॥

प्राज्ञश्शूरो धनाढ्यश्च स्वामी धार्मिक एव च ।
तपस्वी सत्यवादी च बुद्धिमांश्चापि रक्षति ॥ २९॥

तस्मादेतेषु सर्वेषु प्रीतिमान् भव पार्थिव ।
सत्यमार्जवमक्रोधम् आनृशंस्यं च पालय ॥ ३०॥

एवं दण्डं च कोशं च मित्रं भूमिं च लप्स्यसे ।
सत्यार्जवपरो राजा मित्रकोशबलान्वितः ॥ ३१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्व्यशीततिमोऽध्यायः ॥ ८२ ॥
॥ ८६ ॥ राजधर्मपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
[ अस्मिन्नध्याये ३१॥ श्लोकाः ]

## ॥ त्र्यशीतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति राजनीतिकथनम् ॥

भीष्मः—

वनस्पतीन् भक्ष्यफलान् न च्छिन्द्युर्विषये तव ।
ब्राह्मणानां मूलफलं धर्ममाहुर्मनीषिणः ॥ १

ब्राह्मणेभ्योऽतिरिक्तं यद् भुञ्जीरन्नितरे जनाः ।
न ब्राह्मणोपरोधेन चरेदन्यः कथञ्चन ॥ २

विप्रश्चेत् त्यागमातिष्ठेद् आख्याया वृत्तिकर्शितः ।
परिकल्पितवृत्तिस्स्यात् सदारश्च नराधिप ॥ ३

स चेन्नोपरि वर्तेत वाच्यो ब्राह्मणसंसदि ।
तस्मिन्निदानीं मर्यादाम् अयं लोकः करिष्यति ॥ ४

असंशयं निवर्तेत न चेत् त्यक्ष्यत्यतः परम् ।
पुरा परोक्षं वक्तव्यम् एतत् कौन्तेय शासनम् ॥ ५

आहुरेवं जना ब्रह्मन् न चैतच्छ्रद्दधाम्यहम् ।
निमन्त्र्यश्च भवेद्भोगैर् अवृत्त्या भेदमाचरेत् ॥ ६

कृषिगोरक्ष्यवाणिज्यं भूतानामिह जीवनम् ।
ऊर्ध्वं चैतत् त्रयी विद्या सा भूतान् भावयत्युत ॥ ७

अस्यां प्रयतमानायां ये स्युस्तत्परिपन्थिनः ।

दस्यवस्तद्वधायैव ब्रह्मा क्षत्रमथाब्रवीत् ॥ ८

शत्रूञ् जहि प्रजा रक्ष यजस्व क्रतुभिर्नृप ।
युध्यस्व समरे धीरो भूत्वा कौरवनन्दन ॥ ९

संरक्ष्यं रक्षते राजा यस्स राजन्यसत्तमः ।
ये केचित् तं न रक्षन्ति तैरर्थो नास्ति कश्चन ॥ १०

सदैव राज्ञा बोद्धव्यं सर्वलोकाद्युधिष्ठिर ।
तस्माद्धेतोर्हि भुञ्जीत मनुष्यानेव मानवः ॥ ११

आन्तरेभ्यः परान् रक्षेत् परेभ्यः पुनरान्तरान् ।
परान् परेभ्यस्स्वान् स्वेभ्यस् सर्वान् रक्षस्व नित्यदा ॥ १२

आत्मानं सर्वतो रक्षन् राजन् रक्षस्व मेदिनीम् ।
आत्ममूलमिदं सर्वम् आहुर्हि विदुषो जनाः ॥ १३

किं स्विच्छिद्रं को नु सङ्गो किं मे स्विद् विनिपातितम् ।
कुतो ममास्रवेद्दोष इति नित्यं विचिन्तयेत् ॥ १४

[1]अतीतदिवसे वृत्तं प्रशंसन्ति न वा पुनः ।
आप्तैश्चारैरनुमतैः पृथिवीमनुचारयेत् ॥ १५

जानीत यदि मे वृत्तं प्रशंसन्ति न वा पुनः ।
कच्चिद्रोचेज्जनपदे कच्चिद्राष्ट्रे च मे यशः ॥ १६

धर्मज्ञानां धृतिमतां सङ्ग्रामेष्वपलायिनाम् ।

1. ख-घ—नास्तीदमर्धम्

राष्ट्रं च येऽनुजीवन्ति केचिद्राजानुर्जीविनः ॥ १७

अमात्यानां च सर्वेषां मध्यस्थानां च सर्वशः ।
ये न चानुप्रशंसेयुर् निन्देयुरथ वा पुनः ॥ १८
सर्वान् सुपरिणीतांस्तान् कारयेथा युधिष्ठिर ॥ १८॥

एकान्तेन हि सर्वेषां न शक्यं तात रोचितुम् ।
मित्रामित्रमथो मध्यं सर्वभूतेषु भारत ॥ १९॥

युधिष्ठिरः—

तुल्य[1]शीलबलानां हि तथाऽन्यैर्बहुभिर्गुणैः ।
कथं स्यादधिकः कश्चित् स च भुञ्जीत मानवान् ॥ २०॥

भीष्मः—

यच्चरा अचरानद्युर् अदंष्ट्रान् दंष्ट्रिणस्तथा ।
आशीविषा इव क्रुद्धा भुजङ्गान् भुजगा इव ॥ २१॥

एतेभ्यश्चाप्रमत्तस्स्यात् संयुक्तश्च युधिष्ठिर ।
भारुण्डसदृशा ह्येते निपतन्ति प्रमादतः ॥ २२॥

कच्चित् ते वणिजो राष्ट्रे नोद्विजन्ते करार्दिताः ।
क्रीणन्ते बहु चाल्पेन कान्तारकृतनिश्रमाः ॥ २३॥

कच्चित् कृषिकरा राष्ट्रं न त्यजन्त्यतिपीडिताः ।
ये वहन्ति धुरं राज्ञां संवहन्तीतरानपि ॥ २४॥

---

1. अ—बाहु

इतो दत्तेन जीवन्ति देवताः पितरस्तथा ।
मानुषोरगरक्षांसि वयांसि पशवस्तथा ॥ २५॥

एषा ते राष्ट्रगुप्तिश्च राष्ट्रवृत्तिश्च भारत ।
प्रोक्तोद्दिश्यैतमेवार्थं भूयो वक्ष्यामि पार्थिव ॥ २६॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥
॥ ८६ ॥ राजधर्मपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥
[ अस्मिन्नध्याये २६॥ श्लोकाः ]

---

## ॥ चतुरशीतितमोऽध्यायः ॥

---

भीष्मेण युधिष्ठिरं प्रति उचथ्यमान्धातृसंवादानुवादः ॥

---

भीष्मः—

यानङ्गिराः क्षत्रधर्मान् उचथ्यो ब्रह्मवित्तमः ।
मान्धात्रे यौवनाश्वाय प्रीतिमानभ्यभाषत ॥ १

स यथाऽनुशशासैनम् उचथ्यो ब्रह्मवित्तमः ।
तत् तेऽहं सम्प्रवक्ष्यामि निखिलेन युधिष्ठिर ॥ २

उचथ्यः—

धर्माय राजा भवति न कामकरणाय च ।
मान्धातरभिजानीहि राजा लोकस्य रक्षिता ॥ ३

राजा चरति चेद्धर्मं देवभूयाय कल्पते ।
स चेदधर्मं चरति नरकायैव गच्छति ॥ ४

धर्मे तिष्ठन्ति भूतानि धर्मो राजनि तिष्ठति ।
तं राजा [1]साधु यश्शास्ति स राजा श्रियमश्नुते ॥ ५

राजापराधाल्लक्ष्मीवान् मान्धातः पाप उच्यते ।
वेदाश्च धर्मा गच्छन्ति धर्मो नास्तीति चोच्यते ॥ ६

अधर्मे वर्तमानानाम् अर्थसिद्धिः प्रदृश्यते ।
तदेव मङ्गलं सर्वो लोकस्समनुवर्तते ॥ ७

उच्छिद्यते धर्मवृत्तम् अधर्मो वर्तते महान् ।
[2]एवमाहुर्दिवारात्रं यदा पापो न वार्यते ॥ ८

इदं मम इदं नेति साधूनां तात धर्मतः ।
नैव व्यवस्था भवति यदा पापो न वार्यते ॥ ९

[3-4]वध्यानामिव सर्वेषां मनो भवति केवलम् ।
मनुष्याणां महाराज यदा पापो न वार्यते ॥ १०

नैव भार्या न पशवो न क्षेत्रं न निवेशनम् ।
प्रदृश्येत मनुष्याणां यदा पापो न वार्यते ॥ ११

---

1. क-घ—साधुभि　　ख—साधुभिश्शास्तः
2. ख—भय　　3. अ-क-घ—अर्धद्वयं नास्ति
4. ख—नैव भार्यामधिगच्छन्ति व्रतवन्तो द्विजातयः ।
न यज्ञांस्तन्वते विप्रा यदा पापो न वार्यते । [अधिकः पाठः]

देवाः पूजां न विन्दन्ति न स्वधां पितरस्तदा ।
नापि पूज्यन्त्यतिथयो यदा पापो न वार्यते ॥ १२

न वेदानधिगच्छन्ति व्रतवन्तो द्विजातयः ।
न यज्ञांस्तन्वते विप्रा यदा पापो न वार्यते ॥ १३

उभौ लोकावभिप्रेत्य राजानमसृजंस्तथा ।
मुनयोऽथ महद्भूतम् अयं धर्मो भविष्यति ॥ १४

धर्मो यस्मिन् विराजेत तं राजानं प्रचक्षते ।
यस्मिन् विलीयते धर्मस् तं देवा वृषलं विदुः ॥ १५

वृषो हि भगवान् धर्मो यस्तस्य कुरुते लयम् ।
वृषलं तं विदुर्देवास् तस्माद्धर्मं न लोपयेत् ॥ १६

धर्मे वर्धति वर्धन्ति सर्वभूतानि भारत ।
तस्मिन् ह्रसति हीयन्ते तस्माद्धर्मान् विवर्धयेत् ॥ १७

धनानि स्रौति धर्मस्तु धारणाद्वेति निश्चयः ।
मानवानां मनुष्येन्द्र स [1]सीमान्तकरस्स्मृतः ॥ १८

प्रसवार्थं हि भूतानां धर्मस्सृष्टस्स्वयम्भुवा ।
तस्मात् प्रव[2]र्तयेद्धर्मं प्रजानुग्रहकारणात् ॥ १९

तस्माद्धि राजशार्दूल धर्मश्श्रेष्ठ इति स्मृतः ।
स राजा यः प्रजाश्शास्ति स सुहृद्भरतर्षभ ॥ २०

---

1. ख-ब—सीमन्त 2. ख—र्धे

कामक्रोधावनादृत्य धर्ममेवानुपालयेत् ।
धर्मश्श्रेयस्करतमो राज्ञां भरतसत्तम ॥ २१

धर्मस्य ब्राह्मणो योनिस् तस्मात् तं पूजयेत् सदा ।
ब्राह्मणानां च मान्धातः कुर्यात् कामानमत्सरी ॥ २२

तेषां ह्यकामकरणाद् राज्ञस्सञ्जायते भयम् ।
मित्राणि च नृपश्रेष्ठ तथाऽमित्रीभवन्त्यपि ॥ २३

[1]ब्राह्मणान् हि सदाऽसूयन् बाल्याद्वैरोचनो बलिः ।
अथास्माच्छ्रीरपाक्रामद् अन्यस्मिन् वै प्रतापिनि ॥ २४

ततस्तस्मादपाक्रम्य साऽगच्छत् पाकशासनम् ॥ २४॥
अथ सोऽन्वतपत् पश्चाच् छ्रियं दृष्ट्वा पुरन्दरे ॥ २५

एतत् फलमसूयाया अवमानस्य चाभि भो ।
तस्माद्बुध्यस्व मान्धातर् मा त्वां जह्यात् प्रतापिनी ॥ २६

दर्पो नाम श्रियः पुत्रोऽधर्माज्जात इति श्रुतिः ।
तेन देवासुरा राजन् नीतास्सुबहवो वशम् ॥ २७

राजर्षयश्च बहवस् तथा बुध्यस्व पार्थिव ॥ २७॥
राजा भवति तं जित्वा दासस्तेन पराजितः ॥ २८

स यथा दर्पसहितम् अधर्मं न निषेवते ।
तथा वर्धस्व मान्धातश् चिरं चेत् स्थातुमिच्छसि ॥ २९

1. क-ख—शत्रवो ह्यपि मित्राणि तदा मित्रं भवन्त्यपि । [अधिकः पाठः]

मत्तात् प्रमत्तादुन्मत्तात् पौगण्डाच्च विशेषतः ।
निन्दितादसदाचाराद् दुर्हृदां चापि सेवनात् ॥ ३०

निगृहीतादमात्याच्च स्त्रीभ्यश्चैव विशेषतः ।
पर्वताद्विषमाद्वृक्षाद्धस्तिनोऽश्वात् सरीसृपात् ॥ ३१
एतेभ्योऽनित्ययुक्तस्या[1]न्नत्तकार्यं च वर्जयेत् ॥ ३१॥
अत्याशां चातिमानं च दम्भं क्रोधं च वर्जयेत् ॥ ३२

अवज्ञातासु च स्त्रीषु क्लीबेषु स्वैरिणीषु च ।
परभार्यासु कन्यासु मैथुनं नाचरेन्नृप ॥ ३३

कुलेषु पापरक्षांसि जायन्ते वर्णसङ्करात् ।
अपुमांसोऽङ्गहीनाश्च स्थूलजिह्वा विचेतसः ॥ ३४

एते चान्ये च जायन्ते यदा राजा प्रमाद्यति ।
तस्माद्राज्ञा विशेषेण वर्तितव्यं प्रजाहिते ॥ ३५

क्षत्रियस्य प्रमत्तस्य दोषस्सञ्जायते महान् ।
अधर्मास्सम्प्रवर्धन्ते प्रजासङ्करकारकाः ॥ ३६

अशीते विद्यते शीतं शीते शीतं न विद्यते ।
अतिवृष्टिरनावृष्टिर् व्याधिश्चाविशते प्रजाः ॥ ३७

नक्षत्राण्युपतिष्ठन्ति ग्रहा घोरास्तथा गते ।
उत्पाताश्चात्र दृश्यन्ते बहवो राजनाशनाः ॥ ३८

---

1. अ-क—ख तत्कार्यं

अरक्षितात्मा यो राजा प्रजाश्चापि न रक्षति ।
प्रजाश्च तेन क्षीयन्ते ताश्च सोऽनु विनश्यति ॥ ३९

द्वावाददाते ह्येकस्य द्वयोश्च वहवोऽपरे ।
कुमार्यः प्रविलीयन्ते तमाहुर्नृपदूषकम् ॥ ४०

ममैतदिति नैतच्च मनुष्येष्ववतिष्ठते ।
त्यक्तधर्मो यदा राजा प्रमादमनुतिष्ठति ॥* ४१

कालवर्षी च पर्जन्यो धर्मचारी च पार्थिवः ।
सम्पद्यदेषा भवति संविभक्तसुखप्रजाः ॥ ४२

यो न जानाति निर्हर्तुं वस्त्राणां रजको मलम् ।
रक्तानि वा शोधयितुं यथा नास्ति तथैव सः ॥ ४३

एवमेतद्द्विजेन्द्राणां क्षत्रियाणां विशामपि ।
शूद्राश्चतुर्थो वर्णानां नानाकर्मस्ववस्थिताः ॥ ४४

कर्म शूद्रे कृषिर्वैश्ये दण्डनीतिस्तु राजनि ।
ब्रह्मचर्यं तपो मन्त्रास् सर्वं चैव द्विजातिषु ॥ ४५

तेषां यः क्षत्रियो वेद पात्राणामिव शोधकः ।
शीलदोषान् विनिर्हर्तुं स पिता स प्रजापतिः ॥ ४६

कृतं त्रेता द्वापरश्च कलिश्च भरतर्षभ ।
राजवृत्तानि सर्वाणि राजैव युगमुच्यते ॥ ४७

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

चातुर्वर्ण्यं तथा वेदाश् चातुराश्रम्यमेव च ।
सर्वमेतत् प्रमुह्येत यदा राजा प्रमाद्यति ॥ ४८

[1]अग्निस्त्रेता त्रयी विद्या यज्ञाश्च सहदक्षिणाः ।
सर्वे एव प्रमुह्यन्ते यदा राजा प्रमाद्यति ॥ ४९

राजैव कर्ता भूतानां राजैव च विनाशकः ।
धर्मात्मा यस्य कर्ता स्याद् अधर्मात्मा विनाशकः ॥ ५०

राज्ञो भार्याश्च पुत्राश्च बान्धवास्सुहृदस्तथा ।
समेत्य सर्वे शोचन्ति यदा राजा प्रमाद्यति ॥ ५१

हस्तिनोऽश्वाश्च गावश्चाप्युष्ट्राश्वतरगर्दभाः ।
अधर्मवृत्ते नृपतौ सर्वे शोचन्ति पार्थिव ॥ ५२

[2]दुर्बलानां बलं सृष्टं धात्रा मान्धातरुच्यते ।
सुबलं तं महद्भूतं यस्मिन् सर्वं प्रतिष्ठितम् ॥ ५३

यच्च भूतं सम्भजते भूता ये च तदन्वयाः ।
अधर्मस्थे हि नृपतौ सर्वे सीदन्ति पार्थिव ॥ ५४

दुर्बलस्य च यच्चक्षुर् मुनेराशीविषस्य च ।
अविषह्यतमं मन्ये मा स्म दुर्बलमासदः ॥ ५५

दुर्बलांस्तात मन्येथा नित्यमेव विमानितान् ।
मा त्वां दुर्बलचक्षूंषि प्रदहेयुस्सबान्धवम् ॥ ५६

---

1 अ-क-ब—अर्धद्वयं नास्ति 2. ख—अर्धचतुष्टयं नास्ति

न हि दुर्बलदग्धस्य कुले किञ्चित् प्ररोहति ।
आमूलान्निर्दहत्येव मा स्म दुर्बलमासदः ॥ ५७

अबलं वै बलाच्छ्रेयो यच्चातिबलवद्बलम् ।
बलस्याबलदग्धस्य न किञ्चिदवशिष्यते ॥ ५८

विमानितो हतः क्लिष्टस् त्रातारं चेन्न विन्दति ।
अमानुषकृतस्तत्र दण्डो हन्ति नराधिपम् ॥ ५९

मा स्म तात बलस्थस्त्वं भुञ्जीथा दुर्बलं जनम् ।
मा त्वां दुर्बलचक्षूंषि प्रदहेयुस्सबान्धवम् ॥ ६०

यानि मिथ्याभिशप्तानां पतन्त्यश्रूणि रोदताम् ।
तानि पुत्रान् पशून् घ्नन्ति तेषां मिथ्याभिशंसिनाम् ॥ ६१

यदि नात्मनि पुत्रेषु न चेत् पौत्रेषु नप्तृषु ।
न हि पापं कृतं कर्म सद्यः फलति गौरिव ॥ ६२

यत्राबलो वध्यमानस् त्रातारं नाधिगच्छति ।
मोहाद् दैवकृतस्तत्र दण्डः पतति दारुणः ॥ ६३

युक्ता यदा जानपदा भिक्षन्ते ब्राह्मणा इव ।
अभीक्ष्णं भिक्षुरूपेण राजानं घ्नन्ति तादृशाः ॥ ६४

राज्ञो यदा जनपदे बहवो राजपूरुषाः ।
अनयेनोपवर्तन्ते तद्राज्ञः किल्बिषं महत् ॥ ६५

यदा युक्त्या नयन्त्यर्थान् कामादर्थवशेन च ।
कृपणं याचमानानां तद्राज्ञो वैशसं महत् ॥ ६६

महान् वृक्षो जायते वर्धते च
तं चैव भूतानि समाश्रयन्ति ।
यदा वृक्षश्छिद्यते दह्यते वा
तदाश्रया अनिकेता भवन्ति ॥ ६७

यदाऽस्य राष्ट्रे धर्ममग्रे चरन्ति
संस्कारं वा राजपुत्र ब्रुवाणाः ।
तैश्चाधर्मश्चरितो धर्ममोहात्
तूर्णं जह्यात् सुकृतं दुष्कृतं च ॥ ६८

यत्र पापा ज्ञायमानाश्चरन्ति
सभां कलिर्विन्दति यत्र राज्ञः ।
यत्र राजा [1]शास्ति नरानशक्त्या
न तद्राज्यं वर्धते भूमिपस्य ॥ ६९

यश्चामात्यान् मानयित्वा यथा हि
मन्त्रे च युद्धे च नृपोऽनुयुञ्ज्यात् ।
विवर्धते तस्य राज्यं नृपस्य
भुङ्क्ते महीं चाप्यखिलां चिराय ॥ ७०

1. ख—नास्ति नरा न शक्या।

अत्रापि सुकृतं चैव वाचं चैव सुभाषिताम् ।
समीक्ष्य पूजयेद्राजा धर्ममाप्नोत्यनुत्तमम् ॥ ७१

संविभज्य यथा भुङ्क्ते न चान्यानवमन्यते ।
निहन्ति बलिनं दृप्तं स राज्ञो धर्म उच्यते ॥ ७२

[1]यत्र सर्वं परित्राति वाचा कायेन कर्मणा ।
पुत्रन्यासे न मृष्येत स राज्ञो धर्म उच्यते ॥ ७३

संविभज्य यथा भुङ्क्ते नृपतिर्यदि पार्थिव ।
दुर्बलानां बलं चैव स राज्ञो धर्म उच्यते ॥ ७४

यदा [2]शरणिकं राजा पुत्रवत् परिरक्षति ।
भिनत्ति न च मर्यादां स राज्ञो धर्म उच्यते ॥ ७५

[3]यदाप्तदक्षिणैर्यज्ञैर् यजेत श्रद्धयाऽन्वितः ।
कामद्वेषावनाश्रित्य स राज्ञो धर्म उच्यते ॥ ७६

कृपणानाथवृद्धानां यदार्तिमपकर्षति ।
हर्षं सञ्जनयन्नृणां स राज्ञो धर्म उच्यते ॥ ७७

सत्यं पालयते गुप्त्या नित्यं भूमिं प्रयच्छति ।
पूजयत्यतिथीन् नित्यं स राज्ञो धर्म उच्यते ॥ ७८

निग्रहानुग्रहौ तात यत्र स्यातां प्रतिष्ठितौ ।

---

1. ख—अर्धचतुष्टयं नास्ति
2. क—शाराणिकं ख—शाराण्यकं घ—चारानिकं राज्ञा
3. ख—अर्धचतुष्टयं नास्ति

अस्मिँल्लोके परे चैव राजा प्राप्नोति तत्फलम् ॥ ७९

यमो राजा धार्मिकाणां मान्धातः परमेश्वरः ।
संयच्छन् यमवत् प्राणान् असंयच्छंस्तु पापकः ॥ ८०

ऋत्विक्पुरोहिताचार्यान् सत्कृत्यानवमत्य च ।
यदा सम्यक् प्रगृह्णाति स राज्ञो धर्म उच्यते ॥ ८१

यतो यच्छति भूतानि सर्वाण्येवाविशेषतः ।
तस्य राज्ञाऽनुकर्तव्यं यन्तव्या विधिवत् प्रजाः ॥ ८२

सहस्राक्षेण राजा हि सर्वदैवोपमीयते ।
स पश्यति हि यं धर्मं स धर्मः पुरुषर्षभ ॥ ८३

अप्रमादेन शिक्षेथाः क्षमां बुद्धिं धृतिं मतिम् ॥ ८३॥
भूतानां तत्त्वजिज्ञासा साध्वसाधु च सर्वदा ।
सङ्ग्रहस्सर्वभूतानां दानं च मधुरा च वाक् ॥ ८४॥
पौरजानपदाश्चैव गोप्तव्याश्च प्रजा यथा ॥ ८५

न जात्वदक्षो नृपतिः प्रजाश्शक्नोति रक्षितुम् ।
भारो हि सुमहांस्तात राज्यं नाम सुदुर्वहम् ॥ ८६

तद्दण्डविन्नृपः प्राज्ञस् सर्वं शक्नोति रक्षितुम् ।
न हि शक्यमदण्डेन क्लीबेनाबुद्धिनाऽपि वा ॥ ८७

अभिरूपैः कुले जातैर् दक्षैर्भक्तैर्बहुश्रुतैः ।

सर्वं बुद्ध्वा परीक्षेथास् तापसाश्रमिणामपि ॥ ८८

ततस्त्वं सर्वभूतानां धर्मं वेत्स्यसि वै परम् ।
स्वदेशे परदेशे वा न ते धर्मो नशिष्यति ॥ ८९

धर्मे चार्थे च कामे च धर्म एवोत्तरो भवेत् ।
अस्मिँल्लोके परे चैव धर्मवित् सुखमेधते ॥ ९०

त्यजन्ति दारान् प्राणांश्च मनुष्याः प्रतिपूजिताः ॥ ९०॥

सङ्ग्रहश्चैव भूतानां दानं च मधुरा च वाक् ।
एतेभ्यश्चैव मान्धातस् सततं मा प्रमाद्यथाः ॥ ९१॥

अप्रमादश्च शौचं च तात भूतिकरं महत् ।
अप्रमत्तो भवेद्राजा छिद्रदर्शी परात्मनोः ॥ ९२॥

नास्य च्छिद्रं परः पश्येच् छिद्रे तु परमन्वियात् ॥ ९३

एतद्वृत्तं वासवस्य यमस्य वरुणस्य च ।
राजर्षीणां च सर्वेषां तत् त्वमप्यनुपालय ॥ ९४

तत् कुरुष्व महाराज वृत्तं राजर्षिसेवितम् ।
आतिष्ठ दिव्यं पन्थानम् अह्नाय पुरुषर्षभ ॥ ९५

धर्मवृत्तं हि राजानं प्रेत्य चेह च भारत ।
देवर्षिपितृगन्धर्वाः कीर्तयन्त्यमितौजसः ॥ ९६

भीष्मः—

स एवमुक्तो मान्धाता तेनोचथ्येन भारत ।

कृतवानविशङ्कस्तद् एकः प्राप च मेदिनीम् ॥ १७

भवानेवं तथा सर्वं मान्धातेव महीपतिः ।
धर्मं कृत्वा महीं रक्षन् स्वर्गे स्थानमवाप्स्यसि ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥
॥ ८६ ॥ राजधर्मपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
[अस्मिन्नध्याये ९८ श्लोकाः]

---

## ॥ पञ्चाशीतितमोऽध्यायः ॥

---

भीष्मेण युधिष्ठिरं प्रति वामदेववसुमनस्संवादानुवादः ॥ १ ॥ भीष्मेण युधिष्ठिरं प्रति वसुमनसे वामदेवोक्तराजधर्मकथनम् ॥ २ ॥

---

युधिष्ठिरः—

कथं धर्मे स्थातुमिच्छन् राजा वर्तेत भारत ।
पृच्छामि त्वां कुरुश्रेष्ठ तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
गीतं दृष्टार्थतत्त्वेन वामदेवेन [1]भारत ॥ २

राजन् वसुमना नाम कौसल्यो बलवाञ् शुचिः ।
महर्षिं परिपप्रच्छ वामदेवं यशस्विनम् ॥ ३

---

1. ख—धीमता

वसुमनाः—

धर्मार्थसहितं वाक्यं भगवन्ननुशाधि माम् ।
येन वृत्तेन वै तिष्ठन् न च्यवेयं स्वधर्मतः ॥ ४

भीष्मः—

तमब्रवीद्वामदेवस् तेजस्वी जपतां वरः ।
मेघवर्णमुपासीनं ययातिमिव नाहुषम् ॥ ५

वामदेवः—

धर्ममेवानुवर्तस्व न धर्माद्विद्यते परम् ।
धर्मे स्थिता हि राजानो जयन्ति पृथिवीमिमाम् ॥ ६

अर्थसिद्धेः परं धर्मं मन्यते यो महीपतिः ।
ऋतां च कुरुते बुद्धिं स्वधर्मेण विरोचते ॥ ७

अधर्मदर्शी यो राजा बलादेव प्रवर्तते ।
क्षिप्रमेवापयातोऽस्माद् उभौ प्रथममध्यमौ ॥ ८

असत्पापिष्ठसचिवो वध्यो लोकस्य धर्महा ।
सहैव परिवारेण क्षिप्रमेवावसीदति ॥ ९

अर्थानामननुष्ठाता कामचारी विकत्थनः ।
अपि सर्वां महीं लब्ध्वा क्षिप्रमेव विनश्यति ॥ १०

अथाददानः कल्याणम् अनसूयुर्जितेन्द्रियः ।
वर्धते मतिमान् राजा स्रोतोभिरिव सागरः ॥ ११

न पूर्णोऽस्मीति मन्येत धर्मतः कामतोऽर्थतः ।
बुद्धितो मन्त्रतश्चापि सततं वसुधाधिप ॥ १२

एतेष्वेव हि सर्वेषु लोकयात्रा प्रतिष्ठिता ।
एतानि शृण्वँल्लभते यशः कीर्तिं श्रियं प्रजाः ॥ १३

एवं यो धर्मसंरम्भी धर्मार्थपरिचिन्तकः ।
अर्थान् परीक्ष्यारभते तद् ध्रुवं महदश्नुते ॥ १४

अदाता ह्यनभिस्नेहो दण्डेनावर्तयन् प्रजाः ।
साहसप्रकृती राजा क्षिप्रमेव विनश्यति ॥ १५

अथ पापं कृतं बुद्ध्या न च पश्यति बुद्धिमान् ।
अकीर्त्याऽभिसमायुक्तो भूयो निरयमश्नुते ॥ १६

ततो न याचितुर्दातुश् शुक्लवर्णस्य वेदिनः ।
व्यसनं स्वमिवोत्पन्नं विजिघांसन्ति मानवाः ॥ १७

यस्य नास्ति गुरुर्धर्मे न चान्याननुपृच्छति ।
सुख[1]तन्त्रार्थलाभेषु न चिरं महदश्नुते ॥ १८

गुरुप्रधानो धर्मेषु स्वयमर्थानवेक्षिता ।
धर्मप्रधानो लाभेषु स चिरं महदश्नुते ॥* १९

यत्राधर्मं प्रणयते दुर्बले बलवत्तरः ।
तां वृत्तिमुपजीवन्ति ये भवन्ति तदन्वयाः ॥ २०

राजानमनुवर्तन्ते तं पापाभिप्रवर्तकम् ।

1. ख—तन्त्रोऽर्थलाभेषु घ—भागेषु
* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

अविनीतमनुष्यं तत् क्षिप्रं राष्ट्रं विनश्यति ॥ २१

यद्वृत्तमुपजीवन्ति प्रकृतिस्थस्य मानवाः ।
तदेव विषमस्थस्य स्वजनोऽपि न मृष्यते ॥ २२

साहसप्रकृतिर्यश्च कुरुते किञ्चिदुल्बणम् ।
अशास्त्रलक्षणो राजा क्षिप्रमेव विनश्यति ॥ २३

सद्वृत्ताचरितां वृत्तिं क्षत्रियो नानुवर्तते ।
जितानामजितानां च क्षत्रधर्मादपैति सः ॥ २४

द्विषन्तं कृतकल्याणं गृहीत्वा नृपतिं रणे ।
यो न मानयति द्वेषात् क्षत्रधर्मादपैति सः ॥ २५

[1]शक्तस्स्यात् सुमुखो राजा कुर्यात् तारणमापदि ।
प्रियो भवति भूतानां न च विभ्रश्यते श्रियः ॥ २६

अप्रियं यस्य कुर्वीत भूयस्तस्य प्रियं चरेत् ।
अचिरेण प्रियस्स स्याद् योऽप्रिये प्रियमाचरेत् ॥ २७

मृषावादं परिहरेत् कुर्यात् प्रियमयाचितः ।
श्रेयसो लक्षणं चैतद् विक्रमो यत्र दृश्यते ॥ २८

कीर्तिप्रधानो यश्च स्यात् समये यश्च तिष्ठति ।
समर्थान् पूजयेद्यश्च न च स्पर्धेत यश्च तैः ॥ २९

न च कामान्न संरम्भान्न द्वेषाद्धर्ममुत्सृजेत् ।

1. क-घ—शक्यः

अमाययैव वर्तेत न च सत्यं त्यजेद्बुधः ॥ ३०
दमं धर्मं च शीलं च क्षत्रधर्मं प्रजाहितम् ॥ ३०॥

नापि तृप्येत प्रश्नेन नाभिभाविगिरं सृजेत् ।
न त्वरेत न चासूयेत् तथा सङ्गृह्यते परः ॥ ३१॥

प्रिये नातिभृशं हृष्येन्नाप्रिये वाऽतिसंज्वरेत् ।
न मुह्येदर्थकृच्छ्रेषु प्रजानां हितमाचरेत् ॥ ३२॥

यः प्रियं कुरुते नित्यं गुणतो वसुधाधिपः ।
तस्य कर्माणि सिद्ध्यन्ति न च सन्त्यज्यते श्रियः ॥ ३३॥

निवृत्तं प्रतिकूलेभ्यो वर्तमानमनुप्रिये ।
भक्तं भजेत नृपतिस् तद्वै वृत्तं सतामिह ॥ ३४॥

अप्रकीर्णेन्द्रियं राजा ह्यत्यन्तानुगतं शुचिम् ।
[1]शक्तं चैवानुरक्तं च युञ्ज्यान्महति कर्मणि ॥ ३५॥

एवमेव गुणैर्युक्तो यो न रक्षति भूमिपम् ।
भर्तुरर्थेष्वसूयन्तं न तं युञ्जीत कर्मणि ॥ ३६॥

मूढमैन्द्रियकं लुब्धम् अनार्यचरितं शठम् ।
अनतीतोपधं हिंस्रं दुर्बुद्धिमबहुश्रुतम् ॥ ३७॥

त्यक्तोपात्तं मद्यभक्तं द्यूतस्त्रीमृगयाप्रियम् ।
कार्ये महति युञ्जानो हीयते नृपतिश्श्रिया ॥ ३८॥

1. ख-घ—भक्तं

रक्षितात्मा तु यो राजा रक्ष्यान् यश्चापि रक्षति ।
प्रजाश्च तस्य वर्धन्ते सुखं च महदश्नुते ॥ ३९॥

ये केचिद्भूमिपतयस् सर्वांस्तानन्ववेक्षयेत् ।
सुहृद्भिरनभिख्यातैस् तेन राजन् न रिष्यते ॥ ४०॥

अपकृत्य बलस्थेन दूरस्थोऽस्मीति नाश्वसेत् ।
श्येनानुचरितैर्ह्येते निपतन्ति प्रमाद्यतः ॥ ४१॥

दृढमूलस्त्वदुष्टात्मा विदित्वा बलमात्मनः ।
अबलानभियुञ्जीत न त्वेव बलवत्तरान् ॥ ४२॥

विक्रमेण महीं लब्ध्वा प्रजा धर्मेण पालयन् ।
आहवे निधनं कुर्याद् राजा धर्मपरायणः ॥ ४३॥

मरणान्तमिदं सर्वं नेह किञ्चिदनामयम् ।
तस्माद्धर्मे स्थितो राजा प्रजा धर्मेण पालयेत् ॥ ४४॥

रक्षाधिकरणं युद्धं तथा धर्मानुशासनम् ।
मन्त्रं वित्तं सुखं काले पञ्चभिर्वर्धते मही ॥ ४५॥

एतानि यस्य गुप्तानि स राजा राजसत्तम ।
सततं वर्तमानोऽत्र राजा भुङ्क्ते महीमिमाम् ॥ ४६॥

नैतान्येकेन शक्यानि सान्तत्येनान्ववेक्षितुम् ।
एतेष्वाप्तान् प्रतिष्ठाप्य राजा भुङ्क्ते महीं चिरम् ॥ ४७॥

दातारं संविभक्तारम् आर्जवोपगतं शुचिम् ।

असन्त्यक्तमनुष्यं च तं जनः कुरुते प्रियम् ॥ ४८॥
यस्तु नैश्श्रेयसं श्रुत्वा ज्ञानेन प्रतिपद्यते ।
आत्मनो मतमुत्सृज्य तं लोकोऽनुविधीयते ॥ ४९॥
योऽर्थकामस्य वचनं प्रातिकूल्यान्न [1]मृष्यते ।
शृणोति प्रतिकूलानि विमानादचिरादिव ॥ ५०॥
अग्राह्यचरितां वृत्तिम् अत्यन्तं यो न बुध्यते ।
जितानामजितानां च क्षत्रधर्मादपैति सः ॥ ५१॥
मुख्यानमात्यानुत्सृज्य विहीनान् कुरुते प्रियान् ।
स तैर्व्यसनमागम्य साधुमार्गं न विन्दति ॥ ५२॥
यः कल्याणगुणाञ् ज्ञातीन् द्वेषान्नातिबुभूषते ।
अदृढात्मा दृढक्रोधो नास्यार्थो रमतेऽन्तिके ॥ ५३॥
अथ यो गुणसम्पन्नान् हृदयस्याप्रियानपि ।
प्रियेण कुरुते वश्यांश् चिरं यशसि तिष्ठति ॥ ५४॥
नाकाले प्रणयेदर्थान् नाप्रिये जातु संज्वरेत् ।
प्रिये नातिभृशं हृष्येद् युज्येदारोग्यकर्मणि ॥ ५५॥
के नानुरक्ता राजानः के दयां समुपाश्रिताः ।
मध्यस्थदोषाः के चैषाम् इति नित्यं विचिन्तयेत् ॥ ५६॥
न जातु बलवान् भूत्वा दुर्बले विश्वसेद्बुधः ।

1. क-ख-ग—मुच्यते

भारुण्डसदृशा ह्येते निपतन्ति प्रमाद्यतः ॥ ५७॥

अपि सर्वैर्गुणैर्युक्तं भर्तारं प्रियवादिनम् ।
अभिद्रुह्यति पापात्मा तस्माद्धि विजयेज्जनान् ॥ ५८॥

भीष्मः—

एतद्राजोपनिषदं ययातिस्त्वाह नाहुषः ।
मनुष्य[1]विजये युक्तो हन्ति शत्रून् सबान्धवान् ॥* ५९॥

वामदेवः—

अयुद्धेनैव विजयं वर्धयेद्वसुधाधिपः ।
जघन्यमाहुर्विजयं यद्युद्धेन नराधिप ॥ ६०॥

न चाप्यलब्धं लिप्सेत मूले नातिदृढे सति ।
न हि दुर्बलमूलस्य राज्ञो लाभो विवर्धते ॥ ६१॥

यस्य स्फीतो जनपदस् सम्पन्नप्रियराजकः ।
सन्तुष्टपुष्टसचिवो दृढमूलस्स पार्थिवः ॥ ६२॥

योधा यस्य सुसन्तुष्टास् स्वनुरक्तास्सुपूजिताः ।
अल्पेनापि स दण्डेन महीं जयति भूमिपः ॥ ६३॥

दण्डो हि बलवान् यत्र तत्र साम प्रयुज्यते ।
प्रदानं सामपूर्वं च भेदमूलं प्रशस्यते ॥ ६४॥

त्रयाणां विफलं कर्म यदा पश्येत भूमिपः ।

---

1. क-ख—विषये

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

रन्ध्रं ज्ञात्वा ततो दण्डं प्रयुञ्जीताविचारयन् ॥ ६५॥

अभिभूतो यदा शत्रुश् शत्रुभिर्बलवत्तरैः ।
उपेक्षा तत्र कर्तव्या वध्यता बलिनां बलम् ॥ ६६॥

दुर्बलो हि महीपालो यदा भवति भारत ।
उपेक्षा तत्र कर्तव्या चतुर्णामविरोधिनी ॥ ६७॥
उपायः पञ्चमस्सोऽपि सर्वेषां बलवत्तरः ॥ ६८

भार्गवेण च गीतानां श्लोकानां कोसलाधिप ।
विज्ञाय तत्त्वं तत्त्वज्ञ तत्त्वतस्तत् करिष्यसि ॥ ६९

यदि रक्षःपिशाचेन हन्यते यत्र कुत्रचित् ।
उपेक्षा तत्र कर्तव्या वध्यतां बलिनां बलम् ॥ ७०

दुर्बलो हि महीपालश् शत्रूणां शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनैव कण्टकम् ॥ ७१

शठानां सचिवानां च म्लेच्छानां च महीपते ।
एष उक्त उपायानाम् उपेक्षा बलवत्तमा ॥ ७२

अश्मना नाशयेल्लोहं लोहेनाश्मानमेव तु ।
बिल्वानीवापरैर्बिल्वैर् म्लेच्छान् म्लेच्छैः प्रसादयेत् ॥ ७३

दासानां च प्रहृष्टानाम् एतदेवेह कारयेत् ।
चण्डालम्लेच्छजातानां दण्डेन च निवारणम् ॥ ७४

शठानां दुर्विनीतानां पूर्वमुक्तं समाचरेत् ॥ ७४॥

अन्यादृशठाश्च सचिवास् तथा कुब्राह्मणादयः ।
उपायैः पञ्चभिस्साम्यैश् चतुर्वर्गविरोधिनः ॥ ७५॥

पौरजानपदा यस्य स्वनुरक्ता अपीडिताः ।
राष्ट्रकर्मकरा ह्येते राष्ट्रस्य च विरोधिनः ॥ ७६॥

दुर्विनीता विनीताश्च सर्वे साध्याः प्रयत्नतः ॥ ७७

चण्डालम्लेच्छजात्याश्च पाषण्डाश्च विकर्मिणः ।
बलिनश्चाश्रमाश्चैव तथा गायकनर्तकाः ॥ ७८

[1]यस्य राष्ट्रे वसन्त्येते धान्योपचयकारिणः ।
आयवृद्धौ सहायाश्च दृढमूलस्स पार्थिवः ॥ ७९

सधनो धान्यवान् यश्च दृढमूलस्स पार्थिवः ॥ ७९॥

प्रभावकालावधिकौ यदा मन्येत चात्मनः ।
तदा लिप्सेत मेधावी परभूमिधनान्युत ॥ ८०॥

भोगेपूद्यमानस्य भूतेषु च दयावतः ।
वर्धते त्वरमाणस्य निचयो रक्षितात्मनः ॥ ८१॥

तक्षत्यात्मानमेवैष वनं परशुना यथा ।
यस्सम्यग्वर्तमानेषु स्वेषु मिथ्या प्रवर्तते ॥ ८२॥

न च द्विषन्तः क्षीयन्ते राज्ञस्तस्य च निघ्नतः ।
क्रोधं नियन्तुं यो वेद तस्य द्वेष्टा न विद्यते ॥ ८३॥

---

1. ख—अर्धद्वयं नास्ति

J—31

यदार्यजनविद्विष्टं कर्म तन्नाचरेद्बुधः ।
यत् कल्याणमभिध्यायेत् तत्रात्मानं नियोजयेत् ॥ ८४॥

नैनमन्येऽपि जानन्ति नात्मना परितप्यते ।
कृत्यशेषेण यो राजा सुखान्यनुबुभूषते ॥ ८५॥

इदं वृत्तं मनुष्येषु वर्तयेद्यो महीपतिः ।
उभौ लोकौ विनिर्जित्य विजये सम्प्रतिष्ठति ॥ ८६॥

भीष्मः—

इत्युक्तो वामदेवेन स तथा कृतवान् नृपः ।
तथा कुर्वंस्त्वमप्येतल्लोकौ जेता न संशयः ॥ ८७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५॥
॥ ८६ ॥ राजधर्मपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥
[ अस्मिन्नध्याये ८७॥ श्लोकाः ]
[ वामदेवगीता समाप्ता ]

---

## ॥ षडशीतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति युद्धधर्मकथनम् ॥

युधिष्ठिरः—

अथ यो विजिगीषेत क्षत्रियः क्षत्रियं रणे ।
कस्तत्र विजयो धर्म एतं पृष्टो वदस्व मे ॥ १

भीष्मः—

ससहायोऽसहायो वा राष्ट्रमागम्य भूमिपः ।
ब्रूयादहं वो राजेति रक्षिष्यामि च वस्सदा ॥ २

मम धर्मबलिं दत्त किं वा मां प्रतिवक्ष्यथ ।
ते [1]चेत्तमागतं तत्र वृणीयुः कुशलं भवेत् ॥ ३

ते चेमं क्षत्रियास्सन्तो विरुध्येरन् कदाचन ।
सर्वोपायैर्नियन्तव्या विकर्मस्था नराधिप ॥ ४

अशस्त्रं क्षत्रियं ज्ञात्वा शस्त्रं गृह्णात्यथापरः ।
त्राणायाप्यसमर्थं तं मन्यमानमतीव च ॥ ५

युधिष्ठिरः—

अथ यः क्षत्रियो राजा क्षत्रियं प्रत्युपाव्रजेत् ।
कथं स प्रतियोद्धव्यस् तन्मे ब्रूहि पितामह ॥ ६

1. ख-घ—चोक्त

भीष्मः—

नासन्नद्धो नाकवचो योद्धव्यः क्षत्रियो रणे ।
एक एकेन भाव्यश्च विसृजस्व क्षिपामि वा ॥ ७

स चेत् सन्नद्ध आगच्छेत् सन्नद्धव्यं तदा भवेत् ।
स चेत् ससैन्य आगच्छेत् ससैन्यस्तमथाह्वयेत् ॥ ८

स चेन्निकृत्या युध्येत निकृत्या प्रतियोधयेत् ।
अथ चेद्धर्मतो युध्येद् धर्मेणैव निवारयेत् ॥ ९

नाश्वेन रथिनं यायाद् उदियाद्रथिनं रथी ।
व्यसने न प्रहर्तव्यो न भीताय जिताय वा ॥ १०

तेषु लिप्तो न कर्णी स्याद् असतामेतदायुधम् ।
यथार्थमेव योद्धव्यं न क्रुध्येत जिघांसतः ॥ ११

नास्त्येकस्य गजो युद्धे गजश्चैकस्य विद्यते ।
न पदातिर्गजं युध्येन्न गजेन पदातिनम् ॥ १२

हस्तिना योधयेन्नागं कदाचिच्छिक्षितो हयः ।
दिव्यास्त्रबलसम्पन्नः कामं युध्येत सर्वदा ॥ १३
नागे भूमौ समे चैव रथेनाश्वेन वा पुनः ॥ १३॥

रामरावणयोर्युद्धे हरयो वै पदातयः ।
लक्ष्मणश्च महाभागस् तथा राजन् विभीषणः ॥ १४॥

रावणस्यान्तकाले च रथेनैन्द्रेण राघवः ।

निजघान दुराचारं रावणं पापकारिणम् ॥　　१५॥

दिव्यास्त्रबलसम्पन्ने सर्वमेतद्विधीयते ।
देवासुरेषु युद्धेषु दृष्टमेतत् पुरातनैः ॥　　१६॥

साधूनां तु मिथो भेदे साधुश्चेद्व्यसनी भवेत् ।
सप्राणो नाभिहन्तव्यो नानपत्यः कथञ्चन ॥　　१७॥

भग्नशस्त्रो विपन्नश्च छिन्नज्यो हतवाहनः ।
चिकित्स्यस्स्यात् स्वविषये प्राप्येव स्वगृहं भवेत् ॥　　१८॥

नाव्रणश्चापि मोक्तव्य एष धर्मस्सनातनः ॥　　१९

तस्माद्धर्मेण योद्धव्यम् इति स्वायम्भुवोऽब्रवीत् ।
सत्सु नित्यस्सतां धर्मस् तमास्थाय न नाशयेत् ॥　　२०

यो वै जयत्यधर्मेण क्षत्रियोऽ[1]धर्मकारकः ।
आत्मानमात्मना हन्ति पापो निकृतिजीवनः ॥　　२१

कर्म चैतदसाधूनां साधून् योऽसाधुना जयेत् ।
धर्मेण निधनं श्रेयो न जयः पापकर्मणा ॥　　२२

नाधर्मश्चरितो राजन् सद्यः फलति गौरिव ।
मूलान्यस्य प्रशाखाश्च दहन् समनुगच्छति ॥　　२३

पापेन कर्मणा वित्तं लब्ध्वा पापः प्रहृष्यति ।
स वर्धमानस्तेनैव पापः पापे प्रसज्यते ॥　　२४

---

1. ब—जय

न धर्मोऽस्तीति मन्यन्ते शुचीनपहसन्ति च ॥ २४॥
अश्रद्दधानभावाच्च विनाशमुपगच्छति ।
स बद्धो वारुणैः पाशैर् अमर्त्यैरवमन्यते ॥ २५॥
महादृतिरिवाध्मातस् स्वकृतेनैव वर्धते ।
ततस्समूलो ह्रियते नदीकूल इव द्रुमः ॥ २६॥
अथैनमभिनिन्दन्ति भिन्नं कुम्भमिवाश्मनि ।
तस्माद्धर्मेण विजयं कोशं लिप्सेच्च भूमिपः ॥ २७॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥
॥ ८६ ॥ राजधर्मपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
[अस्मिन्नध्याये २७॥ श्लोकाः]

---

## ॥ सप्ताशीतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति राजधर्मकथनम् ॥

---

भीष्मः—

नाधर्मेण महीं जेतुं लिप्सेत पृथिवीपतिः ।
अधर्माद्विजयं लब्ध्वा को नु मन्येत भूमिपः ॥ १
अधर्मयुक्तो विजयो न ध्रुवोऽस्वर्ग्य एव च ।
पातयत्येव राजानं महीं च भरतर्षभ ॥ २

विशीर्णकवचं चैव तवास्मीति च वादिनम् ।
कृताञ्जलिं न्यस्तशस्त्रं गृहीत्वा न विहिंसयेत् ॥ ३

बलेन विजितो यश्च न [1]स वध्येत भूमिपः ।
संवत्सरं सम्प्रणयेत् तस्माज्जातः [2]पुनर्भवेत् ॥ ४

न च संवत्सरं कन्यास् स्प्रष्टव्यास्सहसा हृताः ।
एवमेव धनं सर्वं यच्चान्यत् सहसा हृतम् ॥ ५

न तु वध्ये धनं तिष्ठेल्लिप्सेयुर्ब्राह्मणादयः ।
युञ्जीरन् वाऽप्यनडुहः क्षन्तव्यं वा पुनर्भवेत् ॥ ६

राज्ञा राजैव योद्धव्यस् तथा धर्मो विधीयते ।
नान्यो राजानमभ्यस्याद् अराजन्यः कथञ्चन ॥ ७

अनीकयोस्संहतयोर् यदीयाद्ब्राह्मणोऽन्तरा ।
शान्तिमिच्छन्नुभयतो न योद्धव्यं तदा भवेत् ॥ ८

मर्यादां शाश्वतीं भिन्द्याद् ब्राह्मणं योऽतिलङ्घयेत् ।
अथ चेल्लङ्घयेदेको मर्यादां क्षत्रियब्रुवः ॥ ९
अमन्त्रेयस्तदूर्ध्वं स्याद् अनादेयश्च संसदि ॥ ९॥

या तु धर्मविलोपेन मर्यादाभेदनेन च ।
तां वृत्तिं नानुवर्तेत विजिगीषुर्महीपतिः ॥ १०॥
धर्मलब्धाद्धि विजयात् को लाभो ह्यधिको भवेत् ॥ ११

1. ख—तं युध्येत 2. ख—पुमान्

सहसा नम्यभूतानि क्षिप्रमेव प्रसादयेत् ।
सान्त्वेन भेददानेन स राज्ञः परमो नयः ॥ १२

युज्यमानस्य योगेन स्वराष्ट्रादभितापिताः ।
अमित्रान् पर्युपासीरन् व्यसनौघप्रतीक्षिणः ॥ १३

अमित्रोपग्रहं चास्य ते कुर्युः क्षिप्रमापदि ।
अतुष्टास्सर्वतो राजन् राजध्वंसनकाङ्क्षिणः ॥ १४

नामित्रो विनिकर्तव्यो नातिच्छेद्यः कथञ्चन ।
जीवितं ह्यप्रतिच्छन्नस् सन्त्यजेदेकदा नरः ॥ १५

अल्पेनापि च संयुक्तस् तुष्यते नापराधिनः ।
शुद्धजीवितमेवापि तादृशो बहुमन्यते ॥ १६

यस्य स्फीतो जनपदस् सम्पन्नः प्रियराजकः ।
सन्तुष्टभृत्यसचिवो दृढमूलस्स पार्थिवः ॥ १७

ऋत्विक्पुरोहिताचार्या ये चार्याश्श्रुतिसम्मताः ।
पूजार्हाः पूजिता यस्य स वै लोकविदुच्यते ॥ १८

एतेनैव हि वृत्तेन महीं प्राप्य नरोत्तमः ।
अन्येऽपि चैव विजयं विजिगीषन्ति पार्थिवाः ॥ १९

भूमिवर्जं पुरं राजा जित्वा राजानमाहवे ।
अपि चास्यौषधीश्शश्वद् आजहार प्रतर्दनः ॥ २०

अग्निहोत्राण्यल्पशेषं तेषां भाजनमेव च ।

आजहार दिवोदासस् ततो विप्रकृतोऽभवत् ॥ २१

सराजकानि राष्ट्राणि नाभागो दक्षिणां ददौ ।
अन्यत्र श्रोत्रियस्वाच्च तापसस्वाच्च भारत ॥ २२

उच्चावचानि वृत्तानि धर्मज्ञानां युधिष्ठिर ।
आसन् राज्ञां पुराणानां सर्वं हि मम रोचते ॥ २३

सर्वविद्यातिरेकाद्वा जेतुमिच्छेन्महीपतिः ।
न मायया न दम्भेन य इच्छेद्भूतिमात्मनः ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥
॥ ८६ ॥ राजधर्मपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
[ अस्मिन्नध्याये २४ श्लोकाः ]

---

## ॥ अष्टाशीतितमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति सयुक्तिकं युद्धस्य धर्म्यत्वसमर्थनम् ॥

---

युधिष्ठिरः—

क्षत्रधर्मान्न पापीयान् धर्मोऽस्ति भरतर्षभ ।
अभियाने च युद्धे च राजा हन्ति महाजनम् ॥ १

कथं स कर्मणा केन लोकाञ्जयति पार्थिवः ।
विद्वन् जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥ २

भीष्मः—

निग्रहेण च पापानां साधूनां प्रग्रहेण च ।
यज्ञैर्दानैश्च राजानो भवन्ति शुचयोऽमलाः ॥ ३

[1]उपरुन्धन्ति राजानो भूतानि विजयार्थिनः ।
त एव विजयं प्राप्य वर्धयन्ति पुनः प्रजाः ॥ ४

अपविध्यन्ति पापानि दानयज्ञतपोबलाः ।
अनुग्रहेण भूतानां पुण्यमेषां प्रवर्धते ॥ ५

यथैव क्षेत्रनिर्वाहो निर्देहेत् क्षेत्रमेकदा ।
हिनस्ति धान्यकक्षं च न च धान्यं विनश्यति ॥ ६

एवं शस्त्राणि मुञ्चन्तो घ्नन्त्यवध्याननेकधा ।
तस्यैषा निष्कृतिर्दृष्टा भूतानां भावनं पुनः ॥ ७

यो भूतानि सदाऽनर्थाद् भयात् क्लेशाच्च रक्षति ।
दस्युभ्यः प्राणदाता च धनदस्सुखदो विराट् ॥ ८

स सर्वयज्ञैरीजानो राजा वाऽभयदक्षिणैः ।
अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकताम् ॥ ९

ब्राह्मणार्थे समुत्पन्ने योऽभिनिष्पत्य युध्यति ।
आत्मानं यूपमुच्छ्रित्य स यज्ञोऽनन्तदक्षिणः ॥ १०

अभितो विकिरञ् शत्रून् प्रतिगृह्णञ् शरांस्तु यः ।

1. अ-क—उपरुध्यन्ति

न तस्मात् त्रिदशाश्श्रेयो भूतं पश्यन्ति किञ्चन ॥ ११
तस्य यावन्ति शस्त्राणि त्वचं भिन्दन्ति संयुगे ।
तावतस्सोऽश्नुते लोकान् सर्वकामदुहोऽक्षयान् ॥ १२
यदस्य रुधिरं गात्राद् आहवेषु प्रवर्तते ।
सह तेनैव स्रावेण सर्वपापैः प्रमुच्यते ॥ १३
यानि दुःखानि सहते प्राणानामभिपातने ।
न तपोऽस्ति ततो भूय इति धर्मविदो विदुः ॥ १४
पृष्ठतो भीरवस्सङ्ख्ये वध्यन्ते धर्मपूरुषाः ।
शूराच्छरणमिच्छन्तः पर्जन्यादिव जीवितम् ॥ १५
यदि शूरं तथा क्षेमे प्रतीक्षेरंस्तथा भये ।
प्रतिरूपं जनाः कुर्युर् न च तद्वर्तते तथा ॥ १६
यदि ते कृतमाज्ञाय नमस्कुर्युस्सदैव तम् ।
युक्तं चार्यं च कुर्युस्ते न च तद्वर्तते तथा ॥ १७
पुरुषाणां समानानां दृश्यते समनन्तरम् ।
सङ्ग्रामेऽनीक[1]वेलायाम् उत्कृष्टेषु पतत्सु च ॥ १८
पतत्यभिमुखं शूरः [2]पराङ् भीरुः पलायते ।
आस्थाय स्वर्गसोपानं सहायान् विषमे त्यजन् ॥ १९
मा स्म तांस्तादृशांस्तात जनिष्ठाः पापपूरुषान् ॥ १९॥

1. क-ख-घ—वेधाया   2. ख—पुरात्

ये महायान् रणे हित्वा स्वस्तिमन्तो गृहान् ययुः ।
अस्वस्ति तेभ्यः कुर्वन्ति देवा इन्द्रपुरोगमाः ॥ २०॥

त्यागे नीच[1]स्सहायानां स्वान् प्राणांस्त्रातुमिच्छति ॥ २१

तं हन्युः काष्ठलोहैर्वा दहेयुर्वा कथञ्चन ।
पशुवन्मारयेयुर्वा क्षत्रिया ये स्युरीदृशाः ॥ २२

अधर्मः क्षत्रियस्यैष यच्छय्यामरणो भवेत् ।
विसृजञ् श्लेष्मपित्तानि कृपणं परिदेवयेत् ॥ २३

अविक्षतेन देहेन प्रलयं योऽधिगच्छति ।
क्षत्रियो नास्य तत् कर्म प्रशंसन्ति पुराविदः ॥ २४

न गृहे मरणं तात क्षत्रियस्य प्रशस्यते ।
शौण्डीराणामशौण्डीरम् अधर्मं कृपणं तु तत् ॥ २५

इदं कृच्छ्रमहो दुःखं पापीय इति निष्टनन् ।
प्रतिध्वस्तमुखः पूतिस् स्वजनान् बहु शोचयन् ॥ २६

अरोगाणां स्पृहयते मुहुर्मृत्युमपीच्छति ॥ २६॥
धीरो दृप्तो मनस्वी च नेदृशं मृत्युमर्हति ॥ २७

रणेषु कदनं कृत्वा सुहृद्भिः प्रतिपूजितः ।
तीक्ष्णैश्शस्त्रैस्सुविश्लिष्टः क्षत्रियो मृत्युमर्हति ॥ २८

शूरो हि सत्त्वमन्युभ्याम् आविष्टो युध्यते भृशम् ।

---

1. ब—विहायान्यान्

कृत्यमानानि गात्राणि परैर्नैवावबुध्यते ॥ २९

स सङ्ख्ये निधनं प्राप्य प्रशस्तं लोकपूजितम् ।
स्वधर्मं विपुलं प्राप्य शक्रस्यैति सलोकताम् ॥ ३०

सर्वो योधः परं सत्त्वम् आतिष्ठंस्त्यक्तजीवितः ।
सम्प्राप्नोतीन्द्रसालोक्यं शूरः पृष्ठमदर्शयन् ॥ ३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥
॥ ८६ ॥ राजधर्मपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥
[अस्मिन्नध्याये ३१ श्लोकाः]

---

## ॥ एकोननवतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति सुदेवस्य युद्धेन देवलोकप्राप्तिप्रतिपादकेन्द्राम्बरीषसंवादानुवादः ॥

---

युधिष्ठिरः—

के लोका युध्यमानानां शूराणामनिवर्तिनाम् ।
भवन्ति निधनं प्राप्य तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
अम्बरीषस्य संवादम् इन्द्रस्य च युधिष्ठिर ॥ २

अम्बरीषो हि नाभागस् स्वर्गं जित्वा सुदुर्जयम् ।
ददर्श सुरलोकस्थं स शक्रं सचिवैस्सह ॥ ३

सर्वतेजोमयं दिव्यं विमानवरमास्थितम् ।
उपर्युपरि गच्छन्तं स्थानं सेनापतिं शुभम् ॥ ४

स दृष्ट्वोपरि गच्छन्तं सेनापतिमुदारधीः ।
शूरस्थानमनुप्राप्तं सुदेवं नाम नामतः ॥ ५

ऋद्धिं दृष्ट्वा सुदेवस्य विस्मितः प्राह वासवम् ॥ ५॥

अम्बरीषः—

सागरान्तां महीं कृत्स्नाम् अनुशास्य यथाविधि ।
चातुर्वर्ण्यं यथाशास्त्रं प्रवृत्तो धर्मकाम्यया ॥ ६॥

ब्रह्मचर्येण घोरेण आचार्यकुलसेवया ।
वेदानधीत्य धर्मेण राजशास्त्रं च केवलम् ॥ ७॥

अतिथीनन्नदानेन पितॄंश्च स्वधया तथा ।
ऋत्विक्सहायो दीक्षाभिर् देवान् यज्ञैरनुत्तमैः ॥ ८॥

क्षत्रधर्मे स्थितो भूत्वा यथाशास्त्रं यथाविधि ।
उदीक्षमाणः पृतनां जयामि युधि वासव ॥ ९॥

देवराज सुदेवोऽयं मम सेनापतिः पुरा ।
आसीद्योधः प्रशान्तात्मा सोऽयं कस्मादतीत्य माम् ॥ १०॥

विमानं सूर्यसङ्काशम् आस्थितो मोदते दिवि ॥ ११

नानेन क्रतुभिर्मुख्यैर् इष्टं नैव द्विजातयः ।
तर्पिता विधिवच्छक्र सोऽयं कस्मादतीत्य माम् ॥ १२

[1]ऐश्वर्यमीदृशं प्राप्तस् सर्वदेवैस्सुदुर्लभम् ॥ १२॥

शक्रः—

यदनेन कृतं कर्म प्रत्यक्षं ते महीपते ।
पुरा पालयतस्सम्यक् पृथिवीं धर्मतो नृप ॥ १३॥

शत्रवो निर्जितास्सर्वे ये तवाहितकारिणः ॥ १४

संयमो वियमश्चैव सुयमश्च महाबलः ।
राक्षसा दुर्जया लोके त्रयस्ते युद्धदुर्मदाः ॥ १५

पुत्रास्ते शतशृङ्गस्य राक्षसस्य महीपतेः ॥ १५॥

अथ तस्मिञ् शुभे काले तव यज्ञं वितन्वतः ।
अश्वमेधं महायागं देवानां हितकाम्यया ॥ १६॥

तस्य ते खलु विघ्नार्थम् आगता राक्षसास्त्रयः ॥ १७

कोटीशतपरीवारां राक्षसानां महाचमूम् ।
परिगृह्य ततस्सर्वाः प्रजा बन्दीकृतास्तव ॥ १८

विह्वलाश्च प्रजास्सर्वास् सर्वे च तव सैनिकाः ।
निराकृतस्त्वया चासीत् सुदेवस्सैन्यनायकः ॥ १९

---

1. घ—विमानं सूर्यसङ्काशम् आस्थितो मोदते दिवि । [अधिकः पाठः]

तत्रामात्यवचश्श्रुत्वा निरस्तस्सर्वकर्मसु ॥ १९॥

श्रुत्वा तेषां वचो भूयस् सोपधं वसुधाधिप ।
सर्वसैन्यसमायुक्तस् सुदेवः प्रेरितस्त्वया ॥ २०॥

राक्षसानां वधार्थाय दुर्जयानां नराधिप ॥ २१

नाजित्वा राक्षसीं सेनां पुनरागमनं तव ।
बन्दीमोक्षमकृत्वा च न चागमनमिष्यते ॥ २२

सुदेवस्तद्वचश्श्रुत्वा प्रस्थानमकरोन्नृप ।
सम्प्राप्तश्च स तं देशं यत्र वन्दीकृताः प्रजाः ॥ २३

पश्यति स्म महाघोरां राक्षसानां महाचमूम् ।
दृष्ट्वा सञ्चिन्तयामास सुदेवो वाहिनीपतिः ॥ २४

नेयं शक्या चमूर्जेतुम् अपि सेन्द्रैस्सुरासुरैः ॥ २४॥

नाम्बरीषः कलामेकाम् एषां क्षपयितुं क्षमः ।
दिव्यास्त्रबलभूयिष्ठः किमहं पुनरीदृशः ॥ २५॥

ततस्सेनां पुनस्सर्वां प्रेषयामास [1]पार्थिव ।
यत्र त्वं सहितस्सर्वैर् मन्त्रिभिस्सोपधैर्नृप ॥ २६॥

ततो रुद्रं महादेवं प्रपन्नो जगतः पतिम् ।
श्मशाननिलयं देवं तुष्टाव वृषभध्वजम् ॥ २७॥

---

1. क-ब—पार्थिवः

स्तुत्वा शस्त्रं समादाय स्वशिरश्छेत्तुमुद्यतः ।
कारुण्याद्देवदेवेन गृहीतस्तस्य दक्षिणः ॥ २८॥
सपाणिस्सह शस्त्रेण दृष्ट्वा चेदमुवाच ह ॥ २९

रुद्रः—

किमिदं साहसं पुत्र कर्तुकामो वदस्व मे ॥ २९॥

इन्द्रः—

स उवाच महादेवं शिरसा त्ववनीं गतः ॥ ३०

सुदेवः—

भगवन् वाहिनीमेनां राक्षसानां सुरेश्वर ।
अशक्तोऽहं रणे जेतुं तस्मात् त्यक्ष्यामि जीवितम् ॥ ३१
गतिर्भव महादेव ममार्तस्य जगत्पते ॥ ३१॥
नागन्तव्यमजित्वा च मामाह जगतीपतिः ।
अम्बरीषो महादेव क्षारितस्सचिवैस्सह ॥ ३२॥

इन्द्रः—

तमुवाच महादेवस् सुदेवं पतितं क्षितौ ।
अधोमुखं महात्मानं सत्त्वानां हितकाम्यया ॥ ३३॥
धनुर्वेदं समाहूय सगणं सहविग्रहम् ।
रथनागाश्वकलिलं दिव्यास्त्रसमलङ्कृतम् ॥ ३४॥
रथं च सुमहाभागं येन तत् त्रिपुरं हतम् ।

धनुः पिनाकं खड्गं च रौद्रमस्त्रं च शङ्करः ॥ ३५॥

निजघानासुरान् सर्वान् येन देवस्त्रियम्बकः ।
उवाच च महादेवस् सुदेवं वाहिनीपतिम् ॥ ३६॥

रुद्रः—

रथादस्मात् सुदेव त्वं दुर्जयस्तु सुरासुरैः ।
मायया मोहितो भूमौ न पदं कर्तुमर्हसि ॥ ३७॥

अत्रस्थस्त्रिदशान् सर्वाञ्[1]जेष्यसे सर्वदानवान् ॥ ३८

राक्षसाश्च पिशाचाश्च न शक्ता द्रष्टुमीदृशम् ।
रथं सूर्यसहस्राभं किमु योद्धुं त्वया सह ॥ ३९

इन्द्रः—

स जित्वा राक्षसान् सर्वान् कृत्वा बन्दीविमोक्षणम् ।
घातयित्वा च तान् सर्वान् बाहुयुद्धे स्वयं हतः ॥ ४०

वियमं प्राप्य भूपाल वियमश्च निपातितः ॥ ४०॥

तस्य विक्रमतस्तात सुदेवस्य बभूव ह ।
सङ्ग्रामयज्ञस्सुमहान् यश्चान्यो युध्यते नरः ॥ ४१॥

सन्नद्धो दीक्षितस्सर्वो योधः प्राप्य चमूमुखम् ।
युद्धयज्ञाधिकारस्थो भवतीति विनिश्चयः ॥ ४२॥

अम्बरीषः—

कानि यज्ञे हवींष्यत्र किमाज्यं का च दक्षिणा ।

---

1. अ-क—कृत्वा बन्दीविमोक्षणम्

ऋत्विजश्चात्र के राजंस् तन्मे ब्रूहि शतक्रतो ॥ ४३॥

इन्द्रः—

ऋत्विजः कुञ्जरास्तत्र वाजिनोऽध्वर्यवस्तथा ।
हवींषि परमांसानि रुधिरं चाज्यमुच्यते ॥ ४४॥

सृगालगृध्रकाकोलास् सदस्यास्तत्र सत्रिणः ।
आज्यशेषं पिबन्त्येते हविः प्राश्नन्ति चाध्वरे ॥ ४५॥

प्रासतोमरसङ्घाताः खड्गशक्तिपरश्वथाः ।
ज्वलन्तो निशिताः पीतास् स्रुचस्तस्याथ सत्रिणः ॥ ४६॥

चापवेगायतस्तीक्ष्णः परकायप्रभेदनः ।
ऋजुस्सुनिशितः पीतस् सायकोऽस्य स्रुवो महान् ॥ ४७॥

द्वीपिचर्माभिनद्धस्तु नागदन्तकृतत्सरुः ।
हस्तिहस्तचरः खड्गस् स्फ्यो भवेत् तत्र संयुगे ॥ ४८॥

ज्वलितैर्निशितैः पीतैः प्रासशक्तिपरश्वथैः ।
शैक्यायसमयैस्तीक्ष्णैर् अभिघातो भवेद्वसु ॥ ४९॥

आवेधाद्यत्तु रुधिरं सङ्ग्रामे स्यन्दते भुवः ।
साऽस्य पूर्णाहुतिर्होत्रैस् समृद्धा सर्वकामधुक् ॥ ५०॥

छिन्धि भिन्धीति यस्यैतच् छ्रूयते वाहिनीमुखे ।
सामानि सामगास्तस्य गायन्ति यमसादने ॥ ५१॥

हविर्धानं तु तस्याहुः परेषां वाहिनीमुखम् ॥ ५२

कुञ्जराणां हयानां च वर्मिणां च समुच्चयः ।
अग्निश्श्येनचितो नाम यज्ञस्यैते विधीयते ॥ ५३

उत्तिष्ठते कबन्धोऽत्र सहस्रे पतिते तु यः ।
स यूपस्तस्य शूरस्य खादिरोऽष्टाश्रिरुच्यते ॥ ५४

इलोपहूतं क्रोशन्ति कुञ्जरास्त्वङ्कुशेरिताः ।
ज्याघुष्टतलतालेन वषट्कारेण पार्थिव ॥ ५५

उद्गाताऽत्र हि सङ्ग्रामे त्रिसामा दुन्दुभिर्नृप ॥ ५५॥

ब्रह्मस्वे ह्रियमाणे च त्यक्त्वा युध्येत् प्रियां तनुम् ।
आत्मानं यूपमुच्छ्रित्य स यज्ञोऽनन्तदक्षिणः ॥ ५६॥

भर्तुरर्थे तु यश्शूरो निष्क्रामेद्वाहिनीमुखात् ।
भयान्नोपरि वर्तेत तस्य लोका यथा मम ॥ ५७॥

[1]द्वीपिचर्मावृतैः खड्गैर् बाहुभिः परिघोपमैः ।
यस्य वेदिरुपस्तीर्णा तस्य लोका यथा मम ॥ ५८॥

यस्तु नापेक्षते कञ्चित् सहायं विषमे स्थितः ।
विगाह्य वाहिनीमध्ये तस्य लोका यथा मम ॥ ५९॥

यस्य तोमरसङ्घट्टा भेरीमण्डूककच्छपा ।
शरास्थिशर्करा दुर्गा मांसशोणितकर्दमा ॥ ६०॥

असिचर्मप्लवा घोरा केशशैवलशाड्वला ।

1. ख—अर्धद्वयं नास्ति

अश्वनागरथैश्चापि सञ्छिन्नैः कृतसङ्क्रमा ॥ ६१॥

पताकाध्वजवानीरा हतवाहनवारणा ।
शोणितोदकसम्पूर्णा दुस्तरा कातरैर्जनैः ॥ ६२॥

हतनागमहानक्रा परलोकवहाऽशिवा ।
यष्टिखड्गमहामीना कङ्कगृध्रबलप्लवा ॥ ६३॥

पुरुपादानुचरिता भीरूणां कश्मलावहा ।
नदी योधस्य सङ्ग्रामे तदस्यावभृथं नृप ॥ ६४॥

वेदिर्यस्य त्वमित्राणां शिरोभिर्व्यवकीर्यते ।
अश्वस्कन्धैर्गजस्कन्धैस् तस्य लोका यथा मम ॥ ६५॥

पत्नी शालाकृता यस्य परेषां वाहिनीमुखम् ।
हविर्धानं स्ववाहिन्यास् तदस्याहुर्मनीषिणः ॥ ६६॥

सदस्याश्चोत्तरा योधा निराग्नीध्रस्योत्तराऽथ दिक् ।
शत्रुसेनाकलत्रस्य [1]सर्वलोका न दूरतः ॥ ६७॥

यस्य तूभयतो व्यूहे भवत्याकाशमग्रतः ।
सा वेदिस्स्यात्तथा यज्ञैर् नित्यं व्यूहास्त्रयोऽग्नयः ॥ ६८॥

यस्तु योधः परावृत्तस् सन्त्रस्तो हन्यते परैः ।
अप्रतिष्ठस्स नरकं याति नास्त्यत्र संशयः ॥ ६९॥

---

1. क-घ—स्वर्गलोको न

यस्य शोणितवेगेन नदी स्यात् सम्परिप्लुता ।
केशमांसास्थिसम्पूर्णा स गच्छेत् परमां गतिम् ॥ ७०॥

यस्तु सेनापतिं हत्वा तद्यानमधिरोहति ।
स विष्णुविक्रमः क्रामी बृहस्पतिसवः क्रतुः ॥ ७१॥

नायकं वा प्रमाणं वा यो वा स्यात् तत्र पूजितः ।
जीवग्राहं प्रगृह्णाति तस्य लोका यथा मम ॥ ७२॥

आहवे तु हतं शूरं न शोचेत कदाचन ।
अशोच्यो हि हतश्शूरस् स्वर्गलोके महीयते ॥ ७३॥

न ह्यन्येनोदकं तस्य न स्नानं नाप्यशौचकम् ।
हतस्य कर्तुमिच्छन्ति तस्य लोकं शृणुष्व मे ॥ ७४॥

वराप्सरस्सहस्राणि शूरमायोधने हतम् ।
त्वरमाणानि धावन्ति मम भर्ता भवेदिति ॥ ७५॥

एतत् तपश्च धर्मश्च पुण्यं चैव सनातनम् ।
चत्वार आश्रमास्तस्य यो युद्धे न पलायते ॥ ७६॥

वृद्धबालं न हन्तव्यं न च स्त्री नैव हि द्विजाः ।
तृणपूर्णमुखश्चैव तवास्मीति च यो वदेत् ॥ ७७॥

अहं वृत्रं बलं पाकं महाकायं विरोचनम् ।
दुरावारं च नमुचिं शतमायं च शम्बरम् ॥ ७८॥

विप्रचित्तिं च दैतेयं दनोः पुत्रांश्च सर्वशः ।

प्राह्लादिं वै प्रचित्तिं च हत्वा [1]देवाधिपोऽभवम् ॥ ७९॥

भीष्मः—

इत्येतच्छक्रवचनं निशम्य प्रतिपूज्य च ।
योधानामात्मनस्सिद्धिम् अम्बरीषोऽभिपन्नवान् ॥ ८०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥
॥ ८६ ॥ राजधर्मपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥
[अस्मिन्नध्याये ८०॥ श्लोकाः]

## ॥ नवतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति जनकराजेन स्वयोधानां स्वर्गनरकप्रदर्शनेन युद्धे प्रोत्साहनकथनम् ॥

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
प्रतर्दनो मैथिलश्च सङ्ग्रामं यस्य चक्रतुः ॥ १

यज्ञोपवीती सङ्ग्रामे मैथिलो जनकाधिपः ।
योधानुद्धर्षयामास तन्निबोध युधिष्ठिर ॥ २

जनको मैथिलो राजा महात्मा सर्वधर्मवित् ।
योधानां दर्शयामास स्वर्गं नरकमेव च ॥ ३

1. घ—देवाधिको

जनकः—

अभीतानामिमे लोका भास्वन्तो हन्त पश्यत ।
पूर्णान् गन्धर्वकन्याभिस् सर्वकामदुहोऽक्षयान् ॥ ४

इमे पलायमानानां नरकाः पर्युपस्थिताः ।
अकीर्तिश्शाश्वती चैव पतितव्यमनन्तरम् ॥ ५

तान् दृष्ट्वाऽरीन् विजयत भूत्वा सन्त्यागबुद्धयः ।
नरकस्याप्रतिष्ठस्य मा भूत वशवर्तिनः ॥ ६

त्यागमूलं हि शूराणां स्वर्गद्वारमनुत्तमम् ॥ ६॥

भीष्मः—

इत्युक्तास्ते नृपतिना योधाः परपुरञ्जयाः ।
व्यजयन्त रणे शत्रून् हर्षयन्तो जनेश्वरम् ॥ ७॥

तस्मात् त्यक्तात्मना नित्यं स्थातव्यं रणमूर्धनि ॥ ८

गजानां रथिनां मध्ये गजानामनुसादिनः ।
सादिनामन्तरे स्थाप्यं पादातमपि दंशितम् ॥ ९

एवं यो व्यूहते राजा स नित्यं जयते रिपून् ।
तस्मादेतद्विधातव्यं नित्यमेव युधिष्ठिर ॥ १०

स्वर्गे सुकृतमिच्छन्तस् सुयुद्धेनातिमन्यवः ।
क्षोभयेयुरनीकानि सागरं मकरा इव ॥ ११

हर्षयेयुर्विकीर्णांश्च व्यवस्थाप्य परस्परम् ।

तेषां च भूमिं रक्षेयुर् भग्नान् नात्यनुसारयेत् ॥ १२

पुनरावर्तमानानां निराशानां च जीविते ।
न वेगस्सुसहो राजंस् तस्मान्नात्यनुसारयेत् ॥ १३

न हि प्रहर्तुमिच्छन्ति शूराः प्रद्रवतो भयात् ।
तस्मात् पलायमानानां कुर्यान्नात्यनुसारणम् ॥ १४

चराणामचरास्त्रस्ता अदंष्ट्रा दंष्ट्रिणामपि ।
अपाणयः पाणिमतां नराश्शूरस्य कातराः ॥ १५

समानपृष्ठोदरपाणिपादाः
पश्चाच्छूरं भीरवोऽनुव्रजन्ति ।
अतो भयार्ताः प्रणिपत्य भूयः
कृत्वाऽञ्जलीनुपतिष्ठन्ति शूरान् ॥ १६

शूरबाहुषु लोकोऽयं सर्वो लम्बति पुत्रवत् ।
तस्मात् सर्वेषु लोकेषु शूरस्सम्मानमर्हति ॥ १७

न हि शौर्यात् परं किञ्चित् त्रिषु लोकेषु विद्यते ।
शूरस्सर्वं पालयति शूरे सर्वं प्रतिष्ठितम् ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि नवतितमोऽध्यायः ॥ ९० ॥
॥ ८६ ॥ राजधर्मपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥
[अस्मिन्नध्याये १८ श्लोकाः]

---

## ॥ एकनवतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति युद्धकरणप्रकारादिकथनम् ॥

युधिष्ठिरः—

कथं जयार्थिनस्सेनां [1]नयन्ति भरतर्षभ ।
ईषद्धर्मं प्रपीड्यापि तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

सन्त्येव हि स्थिता धर्मे उपपत्त्या तथा परे ।
साध्वाचारतया केचित् तथैवौपयिका अपि ॥ २
उपायधर्मान् वक्ष्यामि संसिद्धानर्थसिद्धये ।
दुर्मर्यादा दस्यवस्तु भवन्ति परिपन्थिनः ॥ ३
तेषां प्रतिविघातार्थं प्रवक्ष्याम्यथ नैगमम् ।
कार्याणां सम्प्रसिद्ध्यर्थं तानुपायान् निबोध मे ॥ ४
उभे प्रज्ञे वेदितव्ये ऋज्वी वक्रा च भारत ।
[2]जानन् वक्रां न सेवेत प्रतिबाधेत चागताम् ॥ ५
अमित्राण्येव राजानं भेदेनोपचरन्त्युत ।
तान् राजनिकृतीञ् जानन् यथाऽमित्रान् निबाधते ॥ ६
गजानां पार्श्वचर्माणि गोवृषाजगराणि च ।

1. ख—जयन्ति 2. घ—अर्धद्वयं नास्ति

शल्यकण्टकलोहानि तनुत्राणि मतानि च ॥ ७

पीतानि चैव शस्त्राणि सन्नाहाः पीतलोहकाः ।
नानारञ्जनरक्तास्स्युः पताकाः केतवश्च ते ॥ ८

ऋष्टयस्तोमराः खड्गा निशिताश्च परश्वथाः ।
फलकान्यसिचर्माणि प्रतिकल्प्यान्यनेकशः ॥ ९

सुविनीतानि पत्राणि योधाश्च कृतनिश्रमाः ।
चैत्रे वा मार्गशीर्षे वा सेनायोगः प्रशस्यते ॥ १०

पक्वसस्या हि पृथिवी भवत्यम्बुमती तदा ।
नैवातिशीतो नात्युष्णः कालो भवति भारत ॥ ११

तस्मात् तदा योजयेत परेषां व्यसनेषु वा ।
एते हि योगास्सेनानां प्रशस्ताः परबाधने ॥ १२

उदवांस्तृणवान् मार्गस् समो गम्यः प्रशस्यते ।
चारैस्सुविदिताभ्याशः कुशलैर्वनगोचरैः ॥ १३

न ह्यरण्यानि शक्यन्ते गन्तुं मृगगणैरिव ।
तस्मात् सेनासु तानेव योजयन्ति जयार्थिनः ॥ १४

आवासस्तोयवान् मार्गः पर्याकाशः प्रशस्यते ॥ १४॥

परेषामप[1]सर्पाणां प्रतिघातस्तथा भवेत् ।
आकाशं हि वनाभ्याशं मन्यन्ते गुणवत्तरम् ॥ १५॥

1. क-घ—कर्षाणां

बहुभिर्गुणजातैस्तु ये युद्धकुशला जनाः ॥ १६
उपन्यासोऽपसर्पाणां पदातीनां च गूहनम् ।
हतशत्रुप्रतीघातम् आपदर्थं परायणम् ॥ १७
सप्तर्षीन् पृष्ठतः कृत्वा युध्येयुरचला इव ।
अनेन विधिना शत्रूञ् जिगीषेच्चापि दुर्जयान् ॥ १८
यतो वायुर्यतस्सूर्यो यतस्सोमस्ततो जयः ।
पूर्वं पूर्वं ज्याय एषां सन्निपाते युधिष्ठिर ॥ १९
अकर्दमामनुदकाम् अमर्यादामलोष्टकाम् ।
अश्वभूमिं प्रशंसन्ति ये युद्धकुशला जनाः ॥ २०
समा निरुदकाकाशा रथभूमिः प्रशस्यते ।
नीचद्रुमा महाकक्षा सोदका हस्तियोधिनाम् ॥ २१
बहुदुर्गा महावृक्षा वेणुवेत्रतिरस्कृता ।
पदातीनां क्षमा भूमिः पर्वतोपवनानि च ॥ २२
पदातिबहुला सेना [1]दृढा भवति भारत ।
रथाश्वबहुला सेना सुदिनेषु प्रशस्यते ॥ २३
पदातिनागबहुला प्रावृट्काले प्रशस्यते ।
गुणानेतान् प्रसङ्ख्याय देशकालौ प्रयोजयेत् ॥ २४
[2]एवं सञ्चिन्त्य यो याति तिथिनक्षत्रपूजितः ।

1. ख—अयं पादोऽनन्तरश्च न स्तः 2. अ-क-व—अर्धत्रयं नास्ति

विजयं लभते नित्यं सेनां सम्यग्विचारयन् ॥ २५
प्रसुप्तांस्तृषिताञ्छ्रान्तान् प्रकीर्णान् नाभिघातयेत् ॥ २५॥
मोक्षे प्रयाणे चलने पानभोजनकालयोः ।
अतिक्षिप्तान् व्यतिक्षिप्तान् विहतान् प्रतनूकृतान् ॥ २६॥
अविस्रब्धान् कृतारम्भान् उपन्यासप्रतापितान् ।
बहिश्चरानुपन्यासान् कृत्वा वेश्मानुसारिणः ॥ २७॥
परिचर्यावरोद्धारो ये च केचन वल्गिनः ॥ २८
अनीकं ये प्रभिन्दन्ति भिन्नं संस्थापयन्ति च ।
समानाशनपानास्ते कार्या द्विगुणवेतनाः ॥ २९
जातिगोत्रं च विज्ञाय कर्म चानुत्तमं शुभम् ।
समानदेहरक्षास्ते कार्या द्विगुणवेतनाः ॥ ३०
त्रिगुणं चतुर्गुणं चैव वेतनं तेषु कारयेत् ॥ ३०॥
दशाधिपतयः कार्याश् शताधिपतयस्तथा ।
ततस्सहस्राधिपतिं कुर्याच्छूरमतन्द्रिणम् ॥ ३१॥
यथामुख्यान् सन्निपात्य वक्तव्यं संशयामहे ।
यथा जयार्थं सङ्ग्रामे न जह्याम परस्परम् ॥ ३२॥
इहैव ते निवर्तन्तां ये च केचन भीरवः ।
न घातयेयुः प्रदरं कुर्वाणास्तुमुले सति ॥ ३३॥
आत्मानं च स्वपक्षं च पालयन् हन्ति संयुगे ॥ ३४

द्रव्यनाशो वधोऽकीर्तिर् अयशश्च पलायने ।
अमनोज्ञासुखा वाचः पुरुषस्य पलायतः ॥ ३५

प्रविध्वस्तोष्ठदन्तस्य न्यस्तशस्त्रायुधस्य च ।
हित्वा पलायमानस्य सहायान् प्राणसंशये ॥ ३६
अमित्रैरनुबद्धस्य द्विषतामस्तु नस्तथा ॥ ३६॥

मनुष्यापशदा ह्येते ये भवन्ति पराङ्मुखाः ।
राशिवर्धनमात्रास्ते नैव ते प्रेत्य नो इह ॥ ३७॥

अमित्रा हृष्टमनसः प्रत्युद्यान्ति पलायिनम् ।
जयिनस्सुहृदस्तात मङ्गलैर्वन्दनेन च ॥ ३८॥

यस्य स्म व्यसने राजन्ननुमोदन्ति शत्रवः ।
तदसह्यतमं दुःखं मन्यन्ते मरणादपि ॥ ३९॥

श्रियं जानीत धर्मस्य मूलं सर्वसुखस्य च ।
या भीरूणां परा ख्यातिश् शूरस्तामधिगच्छति ॥ ४०॥

ते वयं स्वर्गमिच्छन्तस् सङ्ग्रामे त्यक्तजीविताः ।
जयन्तो वध्यमाना वा प्राप्तुमर्हाम सद्गतिम् ॥ ४१॥

एवं संशप्तशपथास् समभित्यक्तजीविताः ।
अमित्रवाहिनीं वीराः प्रतिगाहन्त्यभीरवः ॥ ४२॥

अग्रतः पुरुषानीकम् असिचर्मवतां भवेत् ।

पृष्ठतश्शकटानीकं कलत्रं मध्यतस्तथा ॥ ४३॥

परेषां प्रतिघातार्थं पदातीनां च गूहनम् ।
अपि चास्मिन् परे गृध्रा भवेयुर्ये पुरोगमाः ॥ ४४॥

ये पुरस्तादभिमतास् सत्त्ववन्तो मनस्विनः ।
ते पूर्वमभिवर्तेयुस् तानन्वगितरे जनाः ॥ ४५॥

अपि चोद्धर्षणं कुर्याद् भीरूणामिह यत्नतः ।
स्कन्धदर्शनमात्रं तु तिष्ठेयुर्वा समीपतः ॥ ४६॥

संहतान् योधयेदल्पान् कामं विस्तारयेद्बहून् ।
सूचीमुखमनीकं स्याद् अल्पानां बहुभिस्सह ॥ ४७॥

सम्प्रयुद्धे निकृष्टे वा सत्यं वा यदि वाऽनृतम् ।
प्रगृह्य बाहून् क्रोशेयुर् हन्त भग्नाः परे इति ॥ ४८॥

आसन्नं नो मित्रबलं प्रहरध्वमभीतवत् ।
शब्दयन्तो निधावेयुः कुर्वन्तो भैरवं रवम् ॥ ४९॥

क्ष्वेडान् किलकिलाशब्दान् क्रकचान् गोविषाणकान् ।
भेरीमृदङ्गपणवान् नादयेयुश्च जर्झरान् ॥ ५०॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥
॥ ८६ ॥ राजधर्मपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
[अस्मिन्नध्याये ५०॥ श्लोकाः]

## ॥ द्विनवतितमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति योधलक्षणादिकथनम् ॥

युधिष्ठिरः—

किंशीलाः किंसमुत्थानाः कथंरूपाश्च भारत ।
किंसन्नाहाः कथंशस्त्रा जनास्स्युस्संयुगे नृपाः ॥ १

भीष्मः—

यथाचरितमेवात्र शस्त्रं पत्रं विधीयते ।
आचाराद्वीह पुरुषस् तथा कर्मसु वर्तते ॥ २

गान्धारास्सिन्धुसौवीरा नखरप्रासयोधिनः ।
अभीतवत् सुबलिनस् तद्बलं सर्वपारगम् ॥ ३

सर्वशस्त्रेषु कुशलाश् शस्त्रवन्तो ह्युशीनराः ।
प्राच्या मातङ्गयुद्धेषु कुशलाश्शठयोधिनः ॥ ४

तथा यवनकाम्भोजा मधुरामभितश्च ये ।
एतेऽश्वयुद्धकुशला दाक्षिणात्याऽसिचर्मिणः ॥ ५
सर्वत्र शूरा जायन्ते महासत्त्वा महाबलाः ॥ ५॥

आवन्तिका महाशूराश् चतुरङ्गे च मालवाः ।
एकोऽपि हि सहस्रस्य तिष्ठत्यभिमुखो रणे ॥ ६॥

प्रायो देशास्समुद्दिष्टा लक्षणानि च मे शृणु ॥ ७

सिंहशार्दूलवाङ्नेत्रास् सिंहशार्दूलगामिनः ।
पारावतकुलिङ्गाक्षास् सर्वे शूराः प्रमाथिनः ॥ ८
मृगस्वरा द्वीपिनेत्रा ऋषभाक्षास्तथा परे ।
प्रमाथिनश्च मन्दाश्च क्रोधनाः किङ्किणीस्वनाः ॥ ९
मेघस्वनाः क्रूरमुखाः केचिच्च कलनिस्वनाः ।
[1]जिह्मनासाश्च मेघाश्च दूरगा दूरपातिनः ॥ १०
विडालकुब्जास्तब्धाक्षास् तनुकेशास्तनुत्वचः ।
शीघ्राश्चपलचित्ताश्च ते भवन्ति दुरासदाः ॥ ११
गौरा निमीलिताः केचिन्मृदुप्रकृतयो जनाः ।
तुरङ्गगतिनिर्घोषास् ते नराः पारयिष्णवः ॥ १२
सुसंहताः प्रतनवो व्यूढोरस्कास्सुसंशिताः ।
प्रवादितेषु नृत्यन्ति हृष्यन्ति कलहेषु च ॥ १३
गम्भीराक्षा निसृष्टाक्षाः पिङ्गका भ्रुकुटीमुखाः ।
नकुलाक्षास्तथा चैते सर्वे शूरास्तनुत्यजः ॥ १४
जिह्माक्षाः प्रललाटाश्च निर्मांसहनवोऽव्यथाः ।
वक्रबाह्वङ्गुलीसक्थाः कृशा धमनिसन्तताः ॥ १५
प्रवेपन्ते हि वेगेन साम्पराये ह्युपस्थिते ।
वारणा इव सम्मत्तास् ते भवन्ति दुरासदाः ॥ १६

1. ख—जङ्घनासानुजङ्घाश्च

दीप्तस्फुटितकेशान्तास् स्थूलपार्श्वहनूमुखाः ।
उन्नतांसाः पृथुग्रीवा विकटास्स्थूलपिण्डिकाः ॥ १७

उद्बन्धा इव सुग्रीवा विनता विहगा इव ।
पिण्डशीर्षाहिवक्त्राश्च पृषदंशमुखास्तथा ॥ १८

उग्रस्वरा मन्युमन्तो युद्धेष्वारावसारिणः ।
अधर्मज्ञावलिप्ताश्च घोरा रौद्रप्रदर्शनाः ॥ १९

त्यक्तात्मानस्सर्वे एते उदग्रा ह्यनिवर्तिनः ।
पुरस्कार्यास्सदा सैन्यैर् हन्यन्ते घ्नन्ति चापि ते ॥ २०

अधार्मिका भिन्नवृत्तास् साध्वेवैषां पराभवः ।
एवमेव प्रकुप्यन्ते राज्ञो ह्येते ह्यभीक्ष्णशः ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥
॥ ८६ ॥ राजधर्मपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
[अस्मिन्नध्याये २१ श्लोकाः]

## ॥ त्रिनवतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति सेनाया जयचिह्नानां राजनीतेश्च कथनम् ॥

युधिष्ठिरः—

जयिन्याः कानि रूपाणि भवन्ति भरतर्षभ ।
पृतनायाः प्रशस्तानि तानीहेच्छामि वेदितुम् ॥ १

भीष्मः—

जयिन्या यानि रूपाणि भवन्ति भरतर्षभ ।
पृतनायाः प्रशस्तानि तानि वक्ष्यामि सर्वशः ॥ २

दैवे पूर्वं हि कुरुते मानुषे कालचोदिते ।
तद्विद्वांसोऽनुपश्यन्ति ज्ञानदीर्घेण चक्षुषा ॥ ३

प्रायश्चित्तविधिं चात्र जपहोमांश्च तद्विदः ।
मङ्गलानि च कुर्वन्ति शमयन्त्यहितान्यपि ॥ ४

उदीर्णमनसो योधा वाहनानि च भारत ।
यस्यां भवन्ति सेनायां ध्रुवं तस्या जयो भवेत् ॥ ५

अन्वेव वायवो वान्ति तथैवेन्द्रधनूंषि च ।
अनुप्लवन्ते मेघाश्च तथाऽऽदित्यस्य रश्मयः ॥ ६

गोमायवश्चानुलोमबला गृध्राश्च सर्वशः ।
आचरेयुर्यदा सेनां सा हि सिद्धिरनुत्तमा ॥ ७

प्रसन्नभाः पावक ऊर्ध्वरश्मिः
प्रदक्षिणावर्तशिखो विधूमः ।
पुण्या गन्धाश्चाहुतीनां भवन्ति
जयस्यैतद्भाविनो रूपमाहुः ॥ ८

शस्त्रैः पत्रैः कवचैः केतुभिश्च
स्वभानुभिर्मुखवर्णैश्च यूनाम् ।
भ्राजिष्मती दुष्प्रतिवीक्षणीया
येषां चमूस्तेऽभिभवन्ति शत्रून् ॥ ९

इष्टा मृगाः पृष्ठतो वामतश्च
सम्प्रस्थितानां च गमिष्यतां च ।
जिघांसतां दक्षिणतस्सिद्धिमाहुर्
ये त्वग्रतस्ते प्रतिषेधयन्ति ॥ १०

माङ्गल्यशब्दान् शकुना वदन्ति
हंसाः क्रौञ्चाश्शतपत्रास्सहर्षाः
हृष्टा योधास्सत्त्ववन्तो भवन्ति
जयस्यैतद्भाविनो रूपमाहुः ॥ ११

[1]गम्भीरशब्दाश्च महास्वनाश्च
शङ्खाश्च भेर्यश्च नदन्ति यत्र ।

1. ख—अर्धश्लोकद्वयं नास्ति

युयुत्सवश्चाप्रतिमा भवन्ति
जयस्यैतद्भाविनो रूपमाहुः ॥ १२

[1]शुश्रूषवश्चानभिमानिनश्च
परस्परं सौहृदमास्थिताश्च ।
येषां योधाश्शौर्यमनुष्ठिताश्च
जयस्यैतद्भाविनो रूपमाहुः ॥ १३

शब्दास्स्पर्शास्तथा गन्धा विचरन्ति मनःप्रियाः ।
धैर्यं चाविशते योधान् विजयस्य मुखं हि तत् ॥ १४

शब्दो वामः प्रस्थितस्य दक्षिणश्च विविक्षतः ।
पश्चात् संसाधयत्येनं पुरस्तात् प्रतिषेधति ॥ १५

संहृत्य महतीं सेनां चतुरङ्गां युधिष्ठिर ।
साम्नैवावर्तयन् पूर्वं प्रयतेथास्ततो युधि ॥ १६

जघन्य एष विजयो यद्युद्धे सामभाषणम् ।
यदृच्छया युधि जयो दैवेनेति विचारणा ॥ १७

आपगेव महावेगा त्रस्ता मृगगणा इव ।
दुर्निवार्यतमा चैव प्रभग्ना महती चमूः ॥ १८

भग्ना इत्येव भज्यन्ते विद्वांसोऽपि न कारणम् ।
उदारसारा महती रुरुसङ्घोपमा चमूः ॥ १९

1. ख—अर्धद्वयं नास्ति

परस्परज्ञास्संहृष्टास् त्यक्तप्राणास्सुनिश्चिताः ।
अपि पञ्चशतं शूरा मृद्नन्ति परवाहिनीम् ॥ २०

अपि वा पञ्च षट् सप्त संहिताः कृतनिश्चयाः ।
कुलीनाः पूजितास्सम्यग् विजयन्तीह शात्रवान् ॥ २१

[1]सन्निपातो न गन्तव्यश् शक्ये सति कथञ्चन ।
सान्त्वभेदप्रदानानां युद्ध[2]मुत्तरमुच्यते ॥ २२

संसर्पेण हि सेनाया भीरूनाविशते भयम् ।
[3]यज्ञादिव प्रज्वलिताद् इयं स्वित् क्षपयिष्यति ॥ २३

अभिप्रयातां समितिं ज्ञात्वा ये प्रतियान्त्यथ ।
तेषां स्पन्दन्ति गात्राणि योधानां विषयस्य च ॥ २४

विषयो व्यथते राजन् सर्वस्सस्थाणुजङ्गमः ।
शस्त्रप्रतापतप्तानां मज्जास्सीदन्ति देहिनाम् ॥ २५

तेषां सान्त्वं क्रूरमिश्रं प्रणेतव्यं पुनः पुनः ।
सम्पीड्यमाना हि परैर् योगमायान्ति सर्वशः ॥ २६

आन्तराणां च भेदार्थं चरानभ्यवचारयेत् ।
यश्च तस्मात् परो राजा तेन [4]सिद्धिः प्रशस्यते ॥ २७

न हि तस्यान्यथा पीडा शक्या कर्तुं तथाविधा ।

---

1. अ—अर्धद्वयं नास्ति    2. क-ख—मुत्तम
3. ख—वज्रादिव    4. अ—सन्धिः

यथा साध्यममित्रेण मित्रेण [1]परिवाधनम् ॥ २८
क्षमा वै साध्वमायानां न हि साधु सदा क्षमा ।
क्षमायाश्चाक्षमायाश्च विद्धि पार्थ प्रयोजनम् ॥ २९
विजित्य क्षममाणस्य यशो राज्ञो विवर्धते ।
महापराधे ह्यप्यस्मिन् विश्वसन्त्यपि शत्रवः ॥ ३०
कर्शयित्वा तु मन्यन्ते क्षमा साध्वीति शाम्बराः ।
असन्तप्तं तु यद्दारु प्रत्येति प्रकृतिं पुनः ॥ ३१
नैतत् प्रशंसन्त्याचार्या न चैतत् साधु दर्शनम् ।
अक्लेशेनाविनाशेन नियन्तव्यास्स्वपुत्रवत् ॥ ३२
द्वेष्यो भवति भूतानाम् उग्रो राजा युधिष्ठिर ।
मृदुमप्यवमन्यन्ते तस्मादुभयभाग्भवेत् ॥ ३३
प्रहरिष्यन् प्रियं ब्रूयात् प्रहरन्नपि भारत ।
प्रहृत्य च प्रियं ब्रूयाच् छोचन्निव रुदन्निव ॥ ३४
न मे प्रिया ये स्म हतास् सम्प्रहृष्टाः परेऽपि च ।
न च [2]कत्थितमेवाग्र्यम् उच्यमानं पुनः पुनः ॥ ३५
अहो जीवितमाकाङ्क्षेन्नेदृशो वधमर्हति ।
सुदुर्लभास्सत्पुरुषास् सङ्ग्रामेष्वपलायिनः ॥ ३६
कृतं ममाप्रियं तेन येनायं निहतो मृधे ।

---

1. अ-क-व—परिसाधनम्　　2. ख—कत्थन

इति वाचा वदन् हन्तॄन् पूजयेत रहोगतान् ॥ ३७
हन्तॄणां च हतानां च पूजां कुर्याद्यथार्थतः ।
क्रोशेद्बाहुं प्रगृह्यापि चिकीर्षञ्जनसङ्ग्रहम् ॥ ३८
एवं सर्वास्ववस्थासु सान्त्वपूर्वं समाचरेत् ।
प्रियो भवति भूतानां धर्मज्ञो वीतभीर्नृपः ॥ ३९
विश्वासं चात्र गच्छन्ति सर्वभूतानि भारत ।
विश्वस्तश्शक्यते भोक्तुं यथाकालं समुत्थितः ॥ ४०
तस्माद्विश्वासयेद्राजा सर्वभूतान्यमायया ।
सर्वतः परिरक्षेच्च यो महीं भोक्तुमिच्छति ॥ ४१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥
॥ ८६ ॥ राजधर्मपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
[अस्मिन्नध्याये ४१ श्लोकाः]

## ॥ चतुर्णवतितमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति शत्रुजयोपायादिप्रतिपादकेन्द्रबृहस्पतिसंवादानुवादः ॥

युधिष्ठिरः—

कथं मृदुः कथं तीक्ष्णो महापक्षे च भारत ।
अरौ वर्तेत नृपतिस् तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
बृहस्पतेश्च संवादम् इन्द्रस्य च युधिष्ठिर ॥ २

[1]बृहस्पतिं देवपतिर् अभिवाद्य कृताञ्जलिः ।
उपसङ्गम्य पप्रच्छ वासवः परवीरहा ॥ ३

इन्द्रः—

अहितेषु कथं ब्रह्मन् प्रवर्तेयमतन्द्रितः ।
असमुच्छिद्य चैवैतान् नियच्छेयमुपायतः ॥ ४

सेनयोर्व्यतिषङ्गे च जयस्साधारणो भवेत् ।
किं कुर्वाणं न मां जह्याज् ज्वलिता श्रीः [2]प्रतापिनी ॥ ५

भीष्मः—

ततो धर्मार्थकामानां कुशलः प्रतिभानवान् ।

---

1. अ-क-ब—नास्तीदमर्धम्　　2. ख-घ—प्रदीपिनी

राजधर्मविधानज्ञः प्रत्युवाच पुरन्दरम् ॥ ६

बृहस्पतिः—

न जातु कलहेनेच्छेन्नियन्तुमपकारिणम् ।
बालसंसेवितं चैतद् यदमर्षो यदक्षमा ॥ ७

न शत्रुर्विवृतः कार्यो वधमस्याभिकाङ्क्षता ॥ ७॥

क्रोधं बलममर्षं च नियम्यात्मानमात्मनि ।
अमित्रमुपसेवेत विश्वस्तवदविश्वसन् ॥ ८॥

प्रियमेव वदेन्नित्यं नाप्रियं किञ्चिदाचरेत् ।
विरमेच्छुष्कवैरेभ्यः कर्णजापं च वर्जयेत् ॥ ९॥

यथा वैतंसिको युक्तो द्विजानां सदृशस्वरः ।
तान् द्विजान् कुरुते वश्यांस् तथा युक्तो महीपतिः ॥ १०॥

वशं चोपनयेच्छत्रून् निहन्याच्च पुरन्दर ॥ ११

न नित्यं परिभूयारीन् सुखं स्वपिति वासव ।
जागर्त्येव हि दुष्टात्मा सङ्कटेऽग्निरिवोत्थितः ॥ १२

न सन्निपातः कर्तव्यस् सामान्ये विजये सति ।
विश्वास्यैवोपसम्मान्यो वशे कृत्वा रिपुं प्रभो ॥ १३

सम्प्रधार्य सहामात्यैर् मन्त्रविद्भिर्महात्मभिः ।
[1]उपेक्षमाणो विज्ञातो हृदयेनापराजितः ॥ १४

1. अ-क-ग—अर्धद्वयं नास्ति

अथास्य प्रहरेत् काले विधेर्विचलितो यदा ।
दण्डं च दूषयेदस्य पुरुषैराप्तकारिभिः ॥ १५
आदिमध्यावसानज्ञान् प्रच्छन्नं च विचारयेत् ।
बलानि दूषयन्तोऽस्य जानन्तश्च प्रमाणतः ॥ १६
भेदेनोपप्रदानेन संसृजेदौषधैस्तथा ।
न त्वेव खलु संसर्गं [1]रोचयेदरिभिस्सह ॥ १७
दीर्घकालमपि क्षान्त्वा निग्राह्या एव शत्रवः ।
कालकाङ्क्षी च यत्तस्सन्नुपासीत शचीपते ॥ १८
तथा प्रियं च वक्तव्यं यथा विस्रम्भमाप्नुयात् ।
न सद्योऽरीन् विनिर्हन्याद् [2]स्रष्टव्यो विजयो ध्रुवः ॥ १९
भूयश्शक्यं घटयति नवं च कुरुते व्रणम् ।
प्राप्ते च प्रहरेत् काले न च संवर्तते पुनः ॥ २०
हन्तुकामस्य देवेन्द्र पुरुषस्य रिपुं प्रति ॥ २०॥
यं हि कालो व्यतिक्रामेत् पुरुषं कालकाङ्क्षिणम् ।
दुर्लभस्स पुनर्भूयः कालः कर्म चिकीर्षतः ॥ २१॥
औजस्यं जनयेदेव सङ्गृह्णन् साधुसम्मतान् ।
कालेन साधयेत् कृत्यम् अप्राप्तो न हि पीडयेत् ॥ २२॥
विहाय कामं क्रोधं च तथाऽहङ्कारमेव च ।

---

1. घ—पादोऽयं नास्ति　　2. क-घ—स्रष्टस्य　ख—भ्रष्टस्य

युक्तो विवरमन्विच्छेद् अहितानां सदा नृपः ॥ २३॥
[1]मार्दवं दण्ड आलस्यं प्रमादश्च सुरोत्तम ।
मायाश्च विहिताश्शक्र शातयन्त्यविचक्षणम् ॥ २४॥
निहत्यैतानि चत्वारि मायां प्रतिविधाय च ।
ततश्शक्नोति शत्रूणां प्रहर्तुमविचारयन् ॥ २५॥
यदेवैतेन शक्येत गुह्यं कर्तुं तदाचरेत् ।
यच्छन्ति सचिवा गुह्यं मिथो विध्वंसयन्त्यपि ॥ २६॥
[2]अशक्यं मित्रकृत्यं वा तदाऽन्यैस्संविदं चरेत् ॥ २७
ब्रह्मदण्डमदृष्टेषु दृष्टेषु चतुरङ्गिणीम् ।
भेदं च प्रथमं विद्यात् तूष्णीं दण्डं तथैव च ॥ २८
काले प्रयोजयेद्राजा तस्मिंस्तस्मिंस्तदा तदा ॥ २८॥
प्रणिपातं च गच्छेत काले शत्रोर्गरीयसः ।
युक्तोऽस्य वधमन्विच्छेद् अप्रमत्तः प्रमाद्यतः ॥ २९॥
प्रणिपातेन दानेन वाचा मधुरया ब्रुवन् ।
अमित्रमुपसेवेत न च जातु विशङ्कयेत् ॥ ३०॥
स्थानानि शङ्कितानां तु नित्यमेव विसर्जयेत् ।
न च तेष्वाश्वसेद्दग्ध्वा जाग्रतीह निराकृताः ॥ ३१॥

1. ख—अदाक्ष्यं

2. ख—अशक्या मित्रकृत्या वा घ—अशक्यमित्रकृत्या वा

न ह्यतो दुष्कृतं कर्म किञ्चिदस्ति सुरोत्तम ॥ ३२

यथा [1]विविधवृत्तानाम् ऐश्वर्यममराधिप ।
तथा विविधशीलानाम् अपि सम्भव उच्यते ॥ ३३
प्रयतेद्योगमास्थाय मित्रामित्रानधारयन् ॥ ३३॥

मृदुमप्यवमन्यन्ते तीक्ष्णादुद्विजते जनः ।
मा तीक्ष्णो मा मृदुर्भूस्त्वं तीक्ष्णो भव मृदुर्भव ॥ ३४॥

यथा वप्रे वेगवति सर्वतस्सम्प्लुतोदके ।
नित्यं विचरणाद्बाधस् तथा राज्यं प्रमाद्यतः ॥ ३५॥

न बहूतुपरुध्येत यौगपद्येन शात्रवान् ।
साम्ना दानेन भेदेन दण्डेन च पुरन्दर ॥ ३६॥

एकैकमेषां निष्पेषेच् छिद्रेषु निपुणं चरेत् ।
न तु शक्तोऽपि मेधावी सर्वानेवाचरेद्बुधः ॥ ३७॥

यदा स्यान्महती सेना हयनागरथाकुला ।
पदातियन्त्रबहुला स्वनुरक्ताऽक्षसङ्गिनी ॥ ३८॥

यदा बहुविधां वृद्धिं मन्येत प्रतियोगतः ।
काले विहृत्य प्रहरेद् अरीणामविचारयन् ॥ ३९॥

न साम दण्डोपनिषत् प्रशस्यते
न मार्दवं शत्रुषु यात्रिकं सदा ।

---

1. ख—विवृत

न सस्यघातो न च सङ्करक्रिया
न चापि भूयः प्रकृतेर्विचारणा ॥ ४०॥

मायाविभेदानुपसर्जनानि
वाचं तथैव प्रथमं प्रयोगात् ।
आप्तैर्मनुष्यैरपचारयेत
पुरेषु राष्ट्रेषु च सम्प्रयुक्तम् ॥ ४१॥

पुराऽपिचैतानतुसृत्य भूमिपाः
पुरेषु भागान्निखिलाञ् जयन्ति ।
परेषु नीतिं नियतां यथाविधि
प्रयोजयन्तो बलवृत्रसूदन ॥ ४२॥

प्रदाय गूढानि वसूनि नाम
प्रच्छिद्य भोगानपहाय च स्वान् ।
दुष्टास्स्वदोषैरिति कीर्तयित्वा
पुरेषु राष्ट्रेषु च योजयन्ति ॥ ४३॥

तथैव चान्यैरिति शास्त्रवेदिभिस्
स्वलङ्कृतैश्शास्त्रविधानलिङ्गितैः ।
सुशिक्षितैर्भाष्यकथाविशारदैः
परेषु कृत्यानुपधारयस्व ॥ ४४॥

इन्द्रः—

कानि लिङ्गानि दुष्टस्य भवन्ति द्विजसत्तम ।
कथं दुष्टं विजानीयाद् एतन् पृष्टो ब्रवीहि मे ॥ ४५॥

बृहस्पतिः—

परोक्षमगुणानाह सद्गुणानभ्यसूयति ।
परैर्वा कीर्त्यमानेषु तूष्णीमास्ते पराङ्मुखः ॥ ४६॥

तूष्णीम्भावे तु विज्ञातं तच्चेद्भवति दारुणम् ।
निश्वासं चोष्ठसन्दंशं शिरसश्च प्रकम्पनम् ॥ ४७॥

करोत्यभीक्ष्णं संसृष्टम् असंसृष्टं च भाषते ।
अभीक्ष्णवद्विकुरुते पृष्ट्वा वा नाभिभाषते ॥ ४८॥

पृथगेत्य समश्नाति नेदमद्य यथाविधि ।
आसने शयने याने भावा लक्ष्या विशेषतः ॥ ४९॥

आर्तिरार्तौ प्रिये प्रीतिर् एतावन्मित्रलक्षणम् ।
विपरीतं तु बोद्धव्यम् अरिलक्षणमेव तत् ॥ ५०॥

एतान्येव यथोक्तानि बुध्येत त्रिदशाधिप ।
पुरुषाणां प्रदुष्टानां स्वभावो बलवत्तरः ॥ ५१॥

इति दुष्टस्य विज्ञानम् उक्तं ते सुरसत्तम ।
निशाम्य शास्त्रतत्त्वार्थं यथावदमरेश्वर ॥ ५२॥

भीष्मः—

स तद्वचश्शत्रुनिबर्हणे रतस्
तथा चकाराऽवितथं बृहस्पतेः ।
चकार लोकान् विजयाय चारिहा
भावं तु भूतान्यनयत् पुरन्दरः ॥ ५३॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुर्णवतितमोऽध्यायः ॥ ९४ ॥
॥ ८६ ॥ राजधर्मपर्वणि पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥
[ अस्मिन्नध्याये ५३॥ श्लोकाः ]

## ॥ पञ्चनवतितमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति कौसल्यकालकवृक्षणीयसंवादानुवादः ॥

युधिष्ठिरः—

धार्मिकोऽर्थानसम्प्राप्य राजाऽमात्यैः [1]प्रबाधितः ।
च्युतः कोशाच्च दण्डाच्च सुखमिच्छन् कथं चरेत् ॥ १

भीष्मः—

अत्रायं क्षेमदर्शीय इतिहासोऽनुगीयते ।
यत् तेऽहं सम्प्रवक्ष्यामि तन्निबोध युधिष्ठिर ॥ २

क्षेमदर्शी नृपसुतो यत्र क्षीणबलः पुरा ।

1. ध—प्रसाधितः ख—प्रशाधितः

मुनिं कालकवृक्षणीयम् आजगामेति नश्श्रुतिः ॥ ३

तं पप्रच्छोपसङ्गृह्य कृच्छ्रामापद्‌मास्थितः ॥ ३॥

राजा—

अर्थेष्वभागी पुरुष ईहमानः पुनः पुनः ।

अलब्ध्वा मद्विधो राज्यं राजा किं कर्तुमर्हति ॥ ४॥

अन्यत्र मरणाद्दैन्याद् अन्यत्र परसंश्रयात् ।

क्षुद्रादन्यत्र चाचारात् तन्ममाचक्ष्व सर्वदा ॥ ५॥

व्याधिना चाभिपन्नस्य मानसेनेतरेण वा ।

बहुश्रुतः कृतप्रज्ञस् त्वद्विधश्शरणं भवेत् ॥ ६॥

निर्विद्य हि नरः कामान् नियम्य सुखमेधते ।

त्यक्त्वा प्रीतिं च शोकं च लब्ध्वा बुद्धिमयं वसु ॥ ७॥

सुखमर्थाश्रयं येषाम् अनुशोचामि तानहम् ।

मम ह्यर्थास्सुबहवो नष्टास्स्वप्नगता इव ॥ ८॥

दुष्करं बत कुर्वन्ति महतोऽर्थांस्त्यजन्ति ये ।

वयमेतान् परित्यक्तुम् असतोऽपि न शक्नुमः ॥ ९॥

इमामवस्थां सम्प्राप्तं दीनमार्तं श्रियश्च्युतम् ।

यदन्यत् सुखमस्तीह तद्ब्रह्मन्ननुशाधि माम् ॥ १०॥

भीष्मः—

[1]कौसल्येनैवमुक्तस्तु राजपुत्रेण धीमता ।

---

1. ख—कौसलेनैव

मुनिः कालकवृक्षीयः प्रत्युवाच महाद्युतिः ॥ ११॥

कालकवृक्षीयः—

पुरस्तादेव ते बुद्धिर् इयं कार्या विजानतः ।
अनित्यं सर्वमेवैतद् अहं च मम चास्ति यत् ॥ १२॥

यत् किञ्चिन्मन्यतेऽस्तीति सर्वं नास्तीति विद्धि तत् ।
एवं न व्यथते प्राज्ञः कृच्छ्रामप्यापदं गतः ॥ १३॥

यद्धि भूतं भविष्यच्च ध्रुवं तन्न भविष्यति ।
एवं विदितवेद्यस्त्वम् अनर्थेभ्यः प्रमोक्ष्यसे ॥ १४॥

ये च पूर्वसमारम्भा ये च पूर्वतरे परे ।
सर्वं नास्तीति ते चैव तज्ज्ञात्वा को नु सञ्ज्वरेत् ॥ १५॥

भूत्वा च न भवत्येव न भूत्वा च भवत्युत ।
[1]शोके न ह्यस्ति सामर्थ्यं शोचेत स कथं नरः ॥ १६॥

क नु तेऽद्य पिता राजन् क नु तेऽद्य पितामहः ।
न त्वं पश्यसि तानद्य न त्वां पश्यन्ति तेऽपि वा ॥ १७॥

आत्मनोऽध्रुवतां पश्यंस् तांस्त्वं किमनुशोचसि ।
बुद्ध्या चैवानुबुद्ध्यस्व ध्रुवं हि न च विद्यते ॥ १८॥

अहं च त्वं च नृपते शत्रवस्सुहृदश्च ते ।
अवश्यं न भविष्यामस् सर्वं च न भविष्यति ॥ १९॥

---

1. ख-ब—लोके

ये च विंशतिवर्षा वै त्रिंशद्वर्षाश्च मानवाः ।
अर्वागेव हि ते सर्वे मरिष्यन्ति शरच्छतात् ॥ २०॥

अपि चेन्महतो वित्ताद् विप्रयुज्येत पूरुषः ।
नैतन्ममेति तन्मत्वा कुर्वीत प्रियमात्मनः ॥ २१॥

अनागतं यन्न ममेति विद्याद्
अतिक्रान्तं यन्न ममेति विद्यात् ।
दिष्टं बलीय इति मन्यमानास्
ते पण्डितास्तत् सतां वृत्तमाहुः ॥ २२॥

अनाढ्याश्चापि जीवन्ति राज्यं चाप्यनुशासते ।
बुद्धिपौरुषसम्पन्नास् त्वया तुल्याधिका जनाः ॥ २३॥

न च त्वमिव शोचन्ति तस्मात् त्वमपि मा शुचः ।
किं न त्वं तैर्नरैश्श्रेयांस् तुल्यो वा बुद्धिपौरुषात् ॥ २४॥

राजा—

यादृच्छिकमुपासीत राज्यमित्येव चिन्तयेत् ।
ह्रियते सर्वमेवेदं कालेन महता द्विज ॥ २५॥

तस्यैव ह्रियमाणस्य स्रोतसेव तपोधन ।
फलमेतत् प्रपश्यामि यथालब्धेन वर्धयेत् ॥ २६॥

मुनिः—

अनागतमतीतं च याथातथ्यविनिश्चयात् ।

नानुशोचसि कौसल्य सर्वार्थेषु तथा भव ॥ २७॥

अवाप्यान् कामयेत् स्वार्थान् नानवाप्यान् कथञ्चन ।
प्रत्युत्पन्नाननुभवन् मा शुचस्त्वमनागतान् ॥ २८॥

यथालब्धोपपन्नार्थस् तथा कौसल्य रंस्यसे ।
कच्चिच्छुद्धस्वभावेन श्रिया हीनो न शोचसि ॥ २९॥

पुरस्ताद्भूतपूर्वत्वाद्धीनभोग्योऽपि दुर्मतिः ।
धातारं गर्हयेन्नित्यं लब्धार्थांश्च न मृष्यते ॥ ३०॥

अनर्हानपि चैवान्यान् मन्यते श्रीमतो जनान् ।
एतस्मात् कारणादेव दुःखं भूयोऽनुवर्तते ॥ ३१॥

ईर्ष्यादिच्छेदसम्पन्ना राजन् पुरुषमानिनः ।
कच्चित् त्वं न तथा प्राज्ञ मत्सरी कोसलाधिप ॥ ३२॥

सहस्व श्रियमन्येषां यद्यपि त्वयि नास्ति सा ।
अन्यत्रापि सतीं लक्ष्मीं कुशला भुञ्जते नराः ॥ ३३॥

अभिविष्यन्दते देही श्रीभूतश्च द्विषज्जनात् ॥ ३४

श्रियं च पुत्रपौत्रं च मनुष्या धर्मचारिणः ।
त्यागधर्मविदो धीरास् स्वयमेव त्यजन्त्युत ॥ ३५

त्यक्तं स्वायम्भुवे वंशे शुभेन भरतेन च ।
नानारत्नसमाकीर्णं राज्यं स्फीतमिति श्रुतम् ॥ ३६

तथाऽन्यैर्भूमिपालैश्च त्यक्तं राज्यं महोदयम् ॥ ३६॥

त्यक्त्वा राज्यानि सर्वे च वने वन्यफलाशनाः ।
गताश्च तपसः पारं दुःखस्यान्तं च भूमिपाः ॥ ३७॥

बहुसङ्गोत्सुकं दृष्ट्वा विवित्सासाधनेन च ।
तथाऽन्ये सन्त्यजन्त्येनां मत्वा परमदुर्लभाम् ॥ ३८॥

त्वं पुनः प्राज्ञरूपस्सन् कृपणं परितप्यसे ।
अकाम्यान् कामयानोऽर्थान् पराधीनानुपद्रवान् ॥ ३९॥

तां बुद्धिमनुविज्ञाय त्वमेवैनान् परित्यज ॥ ४०

अनर्थाश्चार्थरूपेण ह्यर्थाश्चानर्थरूपिणः ।
अर्था एव हि केषाश्चिद्धननाशा भवन्त्युत ॥ ४१

अनित्यं तत् सुखं मत्वा श्रियमन्यो न लिप्सते ।
रममाणश्श्रिया कश्चिन्नान्यच्छ्रेयोऽभिमन्यते ॥ ४२

तथा तस्येहमानस्य संरम्भोऽपि विनश्यति ।
कृच्छ्राल्लब्धमभिप्रेतं यथा कौसल्य नश्यति ॥ ४३

[1]तदा निर्विद्यते सोऽर्थात् परिभग्नक्रमो नरः ।
अनित्यां तां श्रियं मत्वा श्रियं वा कः परीप्सति ॥ ४४

धर्ममेके हि पश्यन्ति कल्याणाभिजना नराः ।

---

1. क-घ—तदानीं विन्दते सोऽर्थान् परिभग्नतमो नरः ।
ख—तदानीं विन्दते सोऽर्थात् परिभग्नतमो नरः । [पाठान्तरम्]

परत्र सुखमिच्छन्तो निर्विद्येयुश्च लौकिकाः ॥ ४५

जीवितं सन्त्यजन्त्येके धनलोभपरा नराः ।
जीवितार्थं न मन्यन्ते पुरुषा हि धनादृते ॥ ४६

पश्य चैषां कृपणतां पश्य चैषामबुद्धिताम् ।
अध्रुवे जीविते मोहाद् येऽर्थतृष्णामुपाश्रिताः ॥ ४७

सञ्चये च विनाशान्ते मरणान्ते च जीविते ।
संयोगे विप्रयोगान्ते को नु विप्रणयेन्मनः ॥ ४८

धनं वा पुरुषो राजन् पुरुषं वा पुनर्धनम् ।
अवश्यं विजहात्येव तद्विद्वान् को नु सञ्ज्वरेत् ॥ ४९

अन्यत्रोपनता ह्यापत् पुरुषं तोषयत्युत ।
तेन शान्तिं न लभते नाहमेवेति कारणात् ॥ ५०

अन्येषामपि नश्यन्ति सुहृदश्च धनानि च ।
पश्य बुद्ध्या मनुष्याणां तुल्यामापदमात्मनः ॥ ५१

नियम्य सर्वं सङ्गच्छ इन्द्रियाणि मनस्तथा ॥ ५१॥

प्रतिषिध्यानवाप्येषु दुर्लभेष्वहितेषु च ।
प्रतिकृष्टेषु भाग्येषु विप्रकृष्टेष्वसम्भवे ॥ ५२॥

प्रज्ञानतृप्तो विक्रान्तस् त्वद्विधो नानुशोचति ॥ ५३

अल्पमिच्छन्नचपलो मृदुर्दान्तस्सुसंस्थितः ।

ब्रह्मचर्योपपन्नश्च त्वद्विधो नैव मुह्यति ॥ ५४
न त्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि ।
नृशंसवृत्तिं पापिष्ठां दुःखां कापुरुषोचिताम् ॥ ५५
अपि मूलफलाहारो रमस्वैको महावने ।
वाग्यतस्सङ्गृहीतात्मा सर्वभूतदयान्वितः ॥ ५६
सदृशं पण्डितस्यैतद् ईषादण्डेन हस्तिना ।
यदेको रमतेऽरण्ये यच्चाप्यल्पेन तुष्यति ॥ ५७
महाह्रदस्सङ्क्षुभितो ह्यात्मनैव प्रसीदति ।
एवं नरस्स्वात्मनैव कृतप्रज्ञः प्रसीदति ॥ ५८
एतदेवं गतस्याहं सुखं पश्यामि केवलम् ।
अलं भवेच्छ्रियो राजन् हीनस्य सचिवादिभिः ॥ ५९
दैवे प्रतिनिविष्टे च किं श्रेयो मन्यते भवान् ॥ ५९॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥
॥ ८६ ॥ राजधर्मपर्वणि षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
[ अस्मिन्नध्याये ५९॥ श्लोकाः ]

## ॥ षण्णवतितमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति राज्ञां शत्रुजयोपायप्रतिपादककौसल्य-कालकवृष्णीयसंवादानुवादः ॥

मुनिः—

शृणु सर्वमशेषेण यत् ते वक्ष्यामि तत्त्वतः ॥ ॥
अथवा पौरुषं किञ्चित् क्षत्रियात्मनि पश्यसि ।
ब्रवीम्यहं ततो नीतिं राज्यस्य प्रतिपत्तये ॥ १॥
तां चेच्छक्ष्यस्यनुष्ठातुं कर्म चैव करिष्यसि ।
आहरिष्यसि चेत् कर्म महतोऽर्थानवाप्स्यसि ॥ २॥
राज्यं वा राज्यमात्रं वा महतीं वा पुनश्श्रियम् ।
यद्येतद्रोचते राजन् पुनर्ब्रूहि ब्रवीमि ते ॥ ३॥

राजा—

ब्रवीतु भगवान् नीतिम् अभिपन्नोऽस्म्यधीहि भोः ।
अमोघ एव मेऽद्यास्तु त्वया सह समागमः ॥ ४॥

मुनिः—

हित्वा मानं च दम्भं च क्रोधहर्षौ भयं तथा ।
प्रत्यमित्रं निषेवस्व प्रणिपत्य कृताञ्जलिः ॥ ५॥
तमुत्तमेन शौचेन कर्मणा वाऽवधारय ॥ ६

दातुमर्हति ते वृत्तिं वैदेहस्सत्यविक्रमः ।
प्रमाणं सर्वभूतेषु ग्रहणं च [1]गमिष्यसि ॥ ७

ततस्सहायान् सोत्साहाँल्लप्स्यसेऽव्यसनाञ् शुचीन् ।
वर्तमानस्स्वशास्त्रे वै संयतात्मा जितेन्द्रियः ॥ ८
अभ्युद्धरति चात्मानं प्रसादयति च प्रजाः ॥ ८॥
तेनैव त्वं धृतिमता श्रीमता चापि सत्कृतः ।
प्रमाणं सर्वभूतेषु गत्वा च ग्रहणं महत् ॥ ९॥

ततस्सुहृद्गणं लब्ध्वा मन्त्रयित्वा सुमन्त्रितम् ।
सान्त्वेन भेदयित्वाऽरीन् बिल्वं बिल्वेन शातय ॥ १०॥
परैर्वा संविदं कृत्वा बलमप्यस्य पातय ॥ ११

अलभ्या ये शुभा भावास् स्त्रियश्चाच्छादनानि च ।
शय्यासनानि यानानि महार्हाणि गृहाणि च ॥ १२

पक्षिणो मृगजातानि रसगन्धाः फलानि च ।
तेष्वेवावर्जयेथास्त्वं यथा नश्येत् स्वयं परः ॥ १३

यद्येवं प्रतिषेद्धव्यो यद्युपेक्षणमर्हति ।
सदैव राजशार्दूल विदुषा हितमिच्छता ॥ १४
न जातु विवृतः कार्यश् शत्रुस्सुनयमिच्छता ॥ १४॥

---
1. क-घ—गमिष्यति

मुनिः—

उपपन्नस्त्वमेतेन यथा क्षत्रिय भाषसे ।
प्रकृत्याऽभ्युपपन्नोऽस्मि [1]बुद्ध्या चाद्भुतदर्शनः ॥ ४

उभयोरेव साह्यार्थे यतिष्ये तव तस्य च ।
संश्लेषं वा करिष्यामि शाश्वतं ह्यनपायिनम् ॥ ५

त्वादृशं हि कुले जातम् अनृशंसं बहुश्रुतम् ।
अमात्यं को न कुर्वीत राज्यप्रणयकोविदम् ॥ ६

यस्त्वं प्रव्राजितो राज्याद् व्यसनं चोत्तमं गतः ।
अनृशंसेन वृत्तेन क्षत्रियेच्छसि जीवितुम् ॥ ७

आगन्ता मद्गृहं तात वैदेहस्सत्यविक्रमः ।
यथाऽहं तं नियोक्ष्यामि तत् करिष्यत्यसंशयम् ॥ ८

भीष्मः—

तत आहूय वैदेहं मुनिर्वचनमब्रवीत् ॥ ८॥

मुनिः—

अयं राजकुले जातो विदिताभ्यन्तरो मम ।
आदर्श इव शुद्धात्मा शारदश्चन्द्रमा इव ॥ ९॥

नास्मिन् पश्यामि वृजिनं सर्वतो मे परीक्षितः ।
तेन ते सन्धिरेवास्तु विश्वसास्मिन् यथा मयि ॥ १०॥

1. ख—भक्त्या

न राज्यमनमात्येन शक्यं शास्तुममित्रहन् ॥ ११

अमात्यश्शुद्ध एव स्याद् बुद्धिसम्पन्न एव च ।
तस्माच्चैव भयं राज्ञः पश्य राज्यस्य योजनम् ॥ १२

धर्मात्मनः क्वचिल्लोके नान्याऽस्ति गतिरीदृशी ।
तदा स राजपुत्रोऽयं सतां मार्गमनुष्ठितः ॥ १३

असङ्गृहीतस्त्वेवैष त्वया धर्मपुरोगम ।
संसेव्यमानश्शत्रूंस्ते गृह्णीयान्महतो गणान् ॥ १४

यद्यत् सम्प्रतियुद्ध्येत स्वधर्मं क्षत्रियस्य तत् ।
जिगीषमाणस्त्वां युद्धे पितृपैतामहे पदे ॥ १५

त्वं चापि यदि [1]बुद्ध्येथा विजिगीषुर्व्रते स्थितः ।
अयुद्ध्वैव नियोगान्मे देशे वैदेहके स्थितः ॥ १६

स त्वं धर्ममवेक्षस्व त्यक्त्वा लोकमसाम्प्रतम् ।
न च कामान्न च द्रोहात् स्वधर्मं हातुमर्हसि ॥ १७

नैव नित्यं जयस्तात नैव नित्यं पराजयः ।
तस्माज्जयश्च भोक्तव्यो भोक्तव्यश्च पराजयः ॥ १८

आत्मन्यपि च संदृश्यावुभौ जयपराजयौ ।
निश्शेषकारिणां तेषां निश्शेषकरणाद्भयम् ॥ १९

---

1. ख—युध्येथा

भीष्मः—

इत्युक्तः प्रत्युवाचेदं वचनं ब्राह्मणर्षभम् ।
प्रतिपूज्याभिसत्कृत्य पूजार्हमनुमान्य च ॥ २०

वैदेहः—

यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयाद्बहुश्रुतः ।
श्रेयस्कामो यथा ब्रूयाद् उभयोरेव तत् क्षमम् ॥ २१

यथा वचनमुक्तोऽस्मि करिष्यामीह तत् तथा ।
[1]एतद्धि परमं श्रेयो नात्र कार्या विचारणा ॥ २२

भीष्मः—

ततः कौसल्यमाहूय वैदेहो वाक्यमब्रवीत् ॥ २२॥

वैदेहः—

धर्मतो बुद्धितश्चैव बलेन च जितं मया ।
सोऽहं त्वया त्वात्मगुणैर् जितः पार्थिवसत्तम ॥ २३॥

आत्मानमनवज्ञाय जितवद्वर्तते भवान् ॥ २४

नावमन्ये च ते बुद्धिं नावमन्ये च पौरुषम् ।
नावमन्ये जितमिति जितवद्वर्तते भवान् ॥ २५

यथावत् पूजितो राजन् गृहं गन्तासि मद्गृहात् ॥ २५॥

भीष्मः—

ततस्सम्पूज्य तौ विप्रं विश्वस्तौ जग्मतुर्नृप ॥ २६

---

1. अर्धद्वयं नास्ति

वैदेहस्त्वथ कौसल्यं प्रवेश्य गृहमञ्जसा ।
पाद्यार्घ्यमधुपर्कैस्तं पूजयामास भूमिपम् ॥ २७

ददौ दुहितरं चास्मै रत्नानि विविधानि च ।
एष राज्ञां परो धर्मस् समौ जयपराजयौ ॥ २८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥
॥ ८६ ॥ राजधर्मपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥
॥ अस्मिन्नध्याये २८ श्लोकाः ॥

---

## ॥ अष्टनवतितमोऽध्यायः ॥

---

भीष्मेण युधिष्ठिरं प्रति गणवृद्धिप्रकारादि कथनम् ॥

---

युधिष्ठिरः—

ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ।
धर्मवृत्तं च वृत्तिश्च वृत्त्युपायाः फलानि च ॥ १

राज्ञां वृत्तिश्च कोशश्च कोशसञ्जननं जयः ।
अमात्यगुणवृद्धिश्च प्रकृतीनां च वर्धनम् ॥ २

षाड्गुण्यगुणकल्पश्च सेनानीतिस्तथैव च ।
दुष्टस्य च परिज्ञानम् अदुष्टस्य च लक्षणम् ॥ ३

समहीनाधिकानां च यथावल्लक्षणोच्चयः ।

मध्यमस्य च तुष्ट्यर्थं यथा स्थेयं विवर्धता ॥ ४

क्षीणसङ्ग्रहवृत्तिश्च यथावत् परिकीर्तिता ।
लघुनाऽऽदेशरूपेण ग्रहयोगेन भारत ॥ ५

विजिगीषोस्तथा वृत्तम् उक्तं चैव विशेषतः ।
गणानां वृत्तिमिच्छामि श्रोतुं मतिमतां वर ॥ ६

यथा गणाः प्रवर्तन्ते न भिद्यन्ते च भारत ।
अरींश्च विजिगीषन्ति सुहृदः प्राप्नुवन्ति च ॥ ७

भेदमूलो विनाशो हि गणानामुपलभ्यते ।
मन्त्रसंवरणं दुःखं बहूनामिति मे मतिः ॥ ८

एतदिच्छाम्यहं श्रोतुं निखिलेन परन्तप ।
यथा च ते न भिद्येरंस् तच्च मे ब्रूहि भारत ॥ ९

भीष्मः—

गणानां च कुलानां च राज्ञां च भरतर्षभ ।
वैरसन्दीपनावेतौ लोभामर्षौ तथैव च ॥ १०

लोभमेको विवृणुते ततोऽमर्षमनन्तरम् ।
ततो ह्यमर्षसंयुक्तावन्योन्य[1]जयिताशयौ ॥ ११

चारमन्त्रबलाधानैस् सामदानविभेदनैः ।
क्षयव्ययभयोपायैः कर्शयन्तीतरेतरम् ॥ १२

1. ख—जनिताशयौ

तत्र दानेन भिद्यन्ते गणास्सङ्घातवृत्तयः ।
भिन्ना विमनसस्सर्वे गच्छन्त्यरिवशं भयात् ॥ १३

भेदाद् गणा विनश्यन्ति भिन्नास्सूपजयाः परैः ।
तस्मात् सङ्घातयोगेषु प्रयतेरन् गणास्तदा ॥ १४

अर्था ह्येवाधिगम्यन्ते सङ्घातबलपौरुषात् ।
बाह्याश्च मैत्रीं कुर्वन्ति तेषु सङ्घातवृत्तिषु ॥ १५

ज्ञानवृद्धान् प्रशंसन्ति शुश्रूषन्तः परस्परम् ।
विनिवृत्तातिसन्धानास् सुखमेधन्ति सर्वशः ॥ १६

धर्मिष्ठान् व्यवहारांश्च स्थापयन्ति च शाश्वतान् ।
यथावत् सम्प्रपश्यन्ते विवर्धन्ते गणोत्तमाः ॥ १७

पुत्रान् भ्रातॄन् निगृह्णन्तो [1]विवर्धन्ते गणोत्तमाः ॥ १७॥

[2]चारमन्त्रविधानेषु मन्त्रसन्निचयेषु च ।
नित्ययुक्ता महाबाहो गणा वर्धन्ति सत्तमाः ॥ १८॥

राज्ञां चारान् महोत्साहान् कर्मसु स्थिरपौरुषान् ।
मानयन्तस्सदा युक्ता विवर्धन्ते गणा नृप ॥ १९॥

द्रव्यवन्तश्च शूराश्च शस्त्रज्ञाश्शास्त्रपारगाः ।
कृच्छ्रास्वापत्सु सम्मूढान् गणा उत्तारयन्ति ते ॥ २०॥

1. ख—वनेच निरतास्तदा
2. ख—विनीतानां च गृह्णन्तो विवर्धन्ते गुणोत्तमाः । [अधिकः पाठः]

क्रोधो [1]लोभो भयं दण्डः कर्शनं निग्रहो वधः ।
नयत्यरिवशं सद्यो गणान् भरतसत्तम ॥ २१॥

तस्मान्मानयितव्यास्ते गणमुख्याः प्रधानतः ।
लोकयात्रा समायत्ता भूयसी तेषु भारत ॥ २२॥

मन्त्रगुप्तिः प्रधानेषु चारश्चामित्रकर्शन ।
न गणः कृत्स्नशो मन्त्रं श्रोतुमर्हति भारत ॥ २३॥

गणमुख्यैस्तु सम्भूय कार्यं गणहितं मिथः ॥ २४

पृथग्गणस्य भिन्नस्य विमतस्य ततोऽन्यथा ।
अर्थाः प्रत्यवसीदन्ति तथाऽनर्था भवन्ति च ॥ २५

तेषामन्योन्यभिन्नानां स्वशक्तिमनुतिष्ठताम् ।
निग्रहः पण्डितैः कार्यः क्षिप्रमेव प्रधानतः ॥ २६

कुलेषु कलहा जाताः कुलवृद्धैरुपेक्षिताः ।
गोत्रस्य नाशं कुर्वन्ति गणसम्भेदकारकाः ॥ २७

आभ्यन्तरं भयं रक्ष्यं सुरक्ष्यं बाह्यतो भयम् ।
अभ्यन्तराद्भयं जातं सद्यो मूलानि कृन्तति ॥ २८

अकस्माल्लोभमोहाद्वा [2]क्रोधाद्वाऽपि स्वभावजात् ।
अन्योन्यं नाभिभाषन्ते तत् पराभवलक्षणम् ॥ २९

जात्या च सदृशस्सर्वे कुलेन सदृशास्तथा ।

1. अ—भेदो 2. अ-क-घ—मोहाद्वापि

न तु शौर्येण बुद्ध्या वा रूपद्रव्येण वा समाः ॥ ३०

भेदाच्चैव प्रदानाच्च नाम्यन्ते रिपुभिर्गणाः ।
तस्मात् सङ्घातमेवाहुर् गणानां शरणं महत् ॥ ३१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥
॥ ८६ ॥ राजधर्मपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥
[ अस्मिन्नध्याये ३१ श्लोकाः ]

---

## ॥ एकोनशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति मातृपितृगुरुमहिमानुवर्णनम् ॥

---

युधिष्ठिरः—

महानयं धर्मपथो बहुशाखश्च भारत ।
किंस्विदेव हि धर्माणाम् अनुष्ठेयतमं मतम् ॥ १

किं कार्यं सर्वभूतानां गरीयो भवतो मतम् ।
यथाऽयं पुरुषो धर्मम् इह च प्रेत्य चाश्नुयात् ॥ २

भीष्मः—

मातापित्रोर्गुरूणां च पूजा बहुमता मम ।
अत्र वर्तन् नरो लोकान् यशश्च महदश्नुते ॥ ३
यदेते ह्यनुजानीयुस् स धर्म इति निश्चयः ॥ ३॥

एत एव त्रयो वेदा एत एवाश्रमादयः ।
एत एव त्रयो लोका एत एव त्रयोऽग्नयः ॥ ४॥

पिता ह्यग्निर् गार्हपत्यो माताऽग्निर्दक्षिणस्स्मृतः ।
गुरुराहवनीयोऽग्निस् साऽग्नित्रेता गरीयसी ॥ ५॥

त्रिष्वप्रमाद्यन्नेतेषु त्वं त्रीँल्लोकानपि जेष्यसि ।
पितृवृत्त्या त्विमं लोकं मातृवृत्त्या तथा परम् ॥ ६॥

ब्रह्मलोकं गुरोर्वृत्त्या नित्यमेव तरिष्यसि ॥ ७

सम्यगेतेषु वर्तस्व त्रिषु लोकेषु भारत ।
यशः प्राप्स्यसि भद्रं ते धर्मं च सुमहाफलम् ॥ ८

नैतानतिशयीथास्त्वं नात्यश्नीथा न दूषयेः ।
नित्यं परिचरेश्चैव तद्वै सुकृतमुत्तमम् ॥ ९
कीर्तिं पुण्यं यशो लोकान् प्राप्स्यसे त्वं जनाधिप ॥ ९॥

सर्वे तस्यादृता लोका यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥ १०॥

नैवायं न परो लोको न यशस्तस्य भारत ।
अमानिता नित्यमेव यस्यैते गुरवस्त्रयः ॥ ११॥

न चास्मिन् न परे लोके यशस्तस्य प्रकाशते ॥ १२

यदन्यदपि कल्याणं पारत्रं समुदाहृतम् ॥
तेभ्य एव स्म तत् सर्वं कृत्यं यन्निसृजाम्यहम् ॥ १३

तदासीन्मे शतगुणं सहस्रगुणमेव च ।
तस्मान्मे सम्प्रकाशन्ते त्रयो लोका युधिष्ठिर ॥ १४

दशैव तु सदाऽऽचार्यश् श्रोत्रियानधितिष्ठति ।
दशाचार्यानुपाध्याय उपाध्यायान् पिता दश ॥ १५

पितृन् दश तु मातैका सर्वां वा पृथिवीमपि ।
गुरुत्वेनाभिभवति नास्ति मातृसमो गुरुः ॥ १६

गुरुर्गरीयान् पितृतो मातृतश्चेति मे मतिः ।
उभौ हि मातापितरौ जन्मनाऽभ्युदयुञ्जतः ॥ १७

शरीरमेतौ सृजतः पिता माता च भारत ।
आचार्यसृष्टा या जातिस् सा सम्यगजरामरा ॥ १८

न वध्या हि सदा माता पिता चाप्युपचारिणौ ॥ १८॥

न स दुष्यति तत् कृत्वा न च ते दूषयन्ति तम् ।
धर्माय यतमानानां विदुर्देवास्सहर्षिभिः ॥ १९॥

य आवृणोत्यवितथेन कर्मणा
ऋतं ब्रुवन्नमृतं सम्प्रयच्छन् ।
तं मन्येथाः पितरं मातरं च
तस्मै न [1]द्रुह्येत् कृतमस्य जानन् ॥ २०॥

1. ग—द्रुह्येत्　　ख—दुष्येत्

विद्यां श्रुत्वा ये गुरुं नाद्रियन्ते
प्रत्युत्पन्ना मनसा कर्मणा वा ।
तेषां पापं भ्रूणहत्याविशिष्टं
तस्मान्नान्यः पापकृदस्ति लोके ॥ २१॥

यथैव ते गुरुभिर्भावनीयास्
तथैव तेषां गुरवोऽभ्यर्चनीयाः ॥ २२

तस्मात् पूजयितव्यास्ते संविभज्याश्च यत्नतः ।
गुरवोऽर्चयितव्यास्ते पुराणं धर्ममिच्छता ॥ २३

येन प्रीणन्ति पितरस् तेन प्रीतः प्रजापतिः ।
प्रीणाति जननी येन पृथिवी तेन पूजिता ॥ २४

येन प्रीणात्युपाध्यायस् तेन स्याद्ब्रह्म पूजितम् ।
मातृतः पितृतश्चैव तस्मात् पूज्यतमो गुरुः ॥ २५

ऋषयश्चैव देवाश्च प्रीयन्ते पितृभिस्सह ।
[1]पूज्यमानेषु गुरुषु तस्मात् पूज्यतमो गुरुः ॥ २६

न च केन च वृत्तेन ह्यवज्ञेयो गुरुर्भवेत् ।
न च माता न च पिता तादृशो यादृशो गुरुः ॥ २७

न तेऽवमानमर्हन्ति न तेषां दूषयेत् कृतम् ।
गुरूणामेव सत्कारं विदुर्देवास्सहर्षिभिः ॥ २८

---

1. ख—नास्तीदमर्धम्

उपाध्यायं पितरं मातरं च
ये द्रुह्यन्ते मनसा कर्मणा वा ।
तेषां पापं भ्रूणहत्याविशिष्टं
तस्मान्नान्यः पापकृदस्ति लोके ॥ २९

भृतो भर्तारं यो न बिभर्ति पुत्रस्
स्वयोनिजः पितरं मातरं च ।
पापं तस्य भ्रूणहत्याविशिष्टं
तस्मान्नान्यः पापकृदस्ति लोके ॥ ३०

मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य पिशुनस्य च ।
चतुर्णामपि चैतेषां निष्कृतिं नानु[1]शुश्रुम ॥ ३१

एतत् सर्वं मनुनिर्देशदृष्टं
यत् कर्तव्यं पुरुषेणेह किञ्चित् ।
एतच्छ्रेयो नान्यदस्माद्विशिष्टं
सर्वान् धर्माननुसृत्यैतदुक्तम् ॥ ३२

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥
॥ ८६ ॥ राजधर्मपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥
[ अस्मिन्नध्याये ३२ श्लोकाः ]

---

1. ख-घ—शुश्रुमः

## ॥ शततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति सत्यानृतविवेचनम् ॥

युधिष्ठिरः—

कथं धर्मे स्थातुमिच्छन् नरो वर्तेत भारत ।
तत्त्वं जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥ १

सत्यं चैवानृतं चोभे लोकानावृत्य तिष्ठतः ।
तयोः किमाचरेद्राजन् पुरुषो धर्मनिश्चयः ॥ २

किंस्वित् सत्यं किमनृतं किंस्विद्धर्मं सनातनम् ।
कस्मिन् काले वदेत् सत्यं कस्मिन् वाऽप्यनृतं वदेत् ॥ ३

भीष्मः—

सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ।
यत्तु लोके सुदुर्ज्ञेयं तत् ते वक्ष्यामि भारत ॥ ४

भवेत् सत्यं न वक्तव्यं वक्तव्यमनृतं भवेत् ।
यत्रानृतं भवेत् सत्यं सत्यं वाऽप्यनृतं भवेत् ॥ ५

तादृशो बध्यते पापो यत्र सत्यमनिश्चितम् ।
सत्यानृते विनिश्चित्य ततो भवति धर्मवित् ॥ ६

अप्यनार्योऽकृतप्रज्ञः पुरुषोऽ[1]प्यतिदारुणः ।

---

1. ख-च—ऽप्यस्ति

सुमहत् प्राप्नुयात् पुण्यं बलाकोऽण्डवधादिव ॥ ७
किमाश्चर्यं च यन्मूढो धर्मकामोऽप्यधर्मवित् ।
सुमहत् प्राप्नुयात् पापं गङ्गायामिव कौशिकः ॥ ८
तादृशोऽयमनुप्रश्नो यत्र धर्मस्सुदुर्विदः ।
दुष्करं चापि सङ्ख्यातुं तर्केणात्र व्यवस्यति ॥ ९
प्रभवार्थाय भूतानां धर्मप्रवचनं कृतम् ।
यस्स्यादहिंसासंयुक्तस् स धर्म इति निश्चयः ॥ १०
अहिंसा सत्यमक्रोधस् तपो दानं दमो मतिः ।
अनसूयाऽप्यमात्सर्यम् अनीर्ष्या शीलमेव च ॥ ११
एष धर्मः कुरुश्रेष्ठ कथितः परमेष्ठिना ।
ब्रह्मणा देवदेवेन अयं चैव सनातनः ॥ १२
अस्मिन् धर्मे स्थितो राजन् नरो भद्राणि पश्यति ।
श्रौतो वधात्मको धर्म अहिंसा[1] परमार्थिका ॥ १३
धारणाद्धर्ममित्याहुर् धर्मेण च धृताः प्रजाः ।
यस्स्याद्धारणसंयुक्तस् स धर्म इति निश्चयः ॥ १४
[2]अहिंसार्थाय भूतानां धर्मप्रवचनं कृतम् ।
यस्स्यादहिंसासंयुक्तस् स धर्म इति निश्चयः ॥ १५
श्रुतिं धर्मं वदन्त्यन्ये मानान्याहुः परे जनाः ।

1. ख-घ—परमार्थिकः  2. ख-घ—अर्धद्वयं नास्ति

न हि तं स्वभ्यसूयामो न हि सर्वं विधीयते ॥ १६
येऽन्यायेन जिगीषन्तो धनमिच्छन्ति कर्हिचित् ।
तेभ्यस्तु न तदाख्येयं स धर्म इति निश्चयः ॥ १७
अकूजनेन चेन्मोक्षो न तु कूजेत् कथञ्चन ।
अवश्यं कूजितव्यं वा शङ्केरन् वाऽप्यकूजनात् ॥ १८
[1]येऽन्ये चाप्यनृतं कुर्युः कुर्यादेव विचारणम् ।
श्रेयस्तत्रानृतं वक्तुं सत्यादिति विचारितम् ॥ १९
अक्षयेभ्यो वधं राजन् कुर्यादेवाविचारयन् ।
अबुध्वाऽनुशये दोषं श्रेयस्तत्रानृतं भवेत् ॥ २०
न स्तेनैस्सह सम्बन्धान्मुच्यते शपथादपि ।
श्रेयस्तत्रानृतं वक्तुं सत्यादिति हि धारणा ॥ २१
यःपापैस्सह सम्बन्धान्मुच्यते शपथादपि ।
न च तेभ्यो धनं दद्याच् छक्ये सति कथञ्चन ॥ २२
पापेभ्यो हि धनं दत्तं दातारमपि पीडयेत् ॥ २२॥
स्वशरीरोपरोधेन धनमादातुमिच्छतः ।
सत्यसम्प्रतिपत्त्यर्थं यद्ब्रूयुस्साक्षिणः क्वचित् ॥ २३॥
अनुक्त्वा यत्र तद्वाच्यं सर्वे तेऽनृतवादिनः ॥ २४
प्राणात्यये विवाहे च [2]वक्तव्यमनृतं भवेत् ।

---

1. अ-क-ख—अर्धश्लोकं नास्ति 2. घ—अयं पादोऽनन्तरश्च न स्तः

अर्थस्य रक्षणार्थं वा परेषां धर्मकारणात् ॥ २५

परेषां [1]धर्ममाकाङ्क्षन्न च स्याद्धर्मभिक्षुकः ।
प्रतिश्रुत्य न दातव्यं श्वः कार्यस्तु बलात्कृतः ॥ २६

यः कश्चिद्धर्मसमयात् प्रच्युतो दम्भजीवनः ।
दण्डेनैव स हन्तव्यस् तं पन्थानं समाश्रितः ॥ २७

[2]कथं स्वधर्ममुत्सृज्य तमिच्छेदुपजीवितुम् ॥ ।२७॥

सर्वोपायैर्नियन्तव्यः पापैर्निकृतिजीवितः ।
च्युतस्सदैव धर्मेभ्यो धनवान् [3]मदमाश्रितः ॥ २८॥

धनमित्येव पापानां सर्वेषामिह निश्चयः ॥ २९

अविवाह्या ह्यसम्भोज्या निकृत्या निरयं गताः ।
च्युता देवमनुष्येभ्यो यथा प्रेतास्तथैव ते ॥ ३०

धनादानाद्दुःखतरं जीवितं धिक् प्रयोजनम् ।
इदं न रोचतां धर्म इति वाच्यं प्रयत्नतः ॥ ३१

न कश्चिदस्ति पापानां धर्म इत्येप निश्चयः ।
तथाविधं च यो हन्यान्न स पापेन लिप्यते ॥ ३२

स्वकर्मणा हतं हन्ति हत एव स हन्यते ।
तेषु यस्समयं कश्चित् कुर्वीत हतबुद्धिषु ॥ ३३

---

1. अ—सिद्धि  2. ख—अर्धत्रयं नास्ति
3. क-घ—धर्मं

यथा काकास्तथैव श्वा तथैवोपधिजीविनः ।
ऊर्ध्वं देहविमोक्षान्ते भवन्त्येतासु योनिषु ॥ ३४

यस्मिन् यथा वर्तति यो मनुष्यस्
तस्मिंस्तथा वर्तितव्यस्स धर्मः ।
मायाचारो मायया बाधितव्यस्
साध्वाचारस्साधुनैवाभ्युपेयः ॥ ३५

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि शततमोऽध्यायः ॥ १०० ॥
॥ ८६ ॥ राजधर्मपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥
[अस्मिन्नध्याये ३५ श्लोकाः]

---

## ॥ एकाधिकशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरंप्रति दुर्गातितरणोपायकथनम् ॥

---

युधिष्ठिरः—

क्लिश्यमानेषु भूतेषु तैस्तैर्भावैः पृथक् पृथक् ।
[1]दुर्गाण्यतितरेद्येन तन्मे ब्रूहि पितामह ॥ १

भीष्मः—

आश्रमेषु यथोक्तेषु यथोक्तं ये द्विजातयः ।

---

1. घ—मार्गाण्य

वर्तन्ते संयतात्मानो दुर्गाण्यतितरन्ति ते ॥ २

ये दम्भान्न जपन्ति स्म येषां वृत्तिरसंवृता ।
[1]विषयांश्च न गृह्णन्ति दुर्गाण्यतितरन्ति ते ॥ ३

[2]प्रत्यूचुर्नोच्यमाना ये न हिंसन्ति च हिंसिताः ।
न प्रयच्छन्ति [3]न च ते दुर्गाण्यतितरन्ति ते ॥ ४

स्वेषु दारेषु वर्तन्ते न्यायलब्धेष्वृतावृतौ ।
अग्निहोत्रपरास्सन्तो दुर्गाण्यतितरन्ति ते ॥ ५

वासयन्त्यतिथीन् नित्यं नित्यं ये वाऽनसूयकाः ।
नित्यं स्वाध्यायशीलाश्च दुर्गाण्यतितरन्ति ते ॥ ६

मातापित्रोश्च ये वृत्तिं वर्तन्ते धर्मकोविदाः ।
वर्जयन्ति दिवास्वप्नं दुर्गाण्यतितरन्ति ते ॥ ७

ये न लोभान्नयन्त्यर्थान् राजानो रजसा वृताः ।
विषयान् परिरक्षन्तो दुर्गाण्यतितरन्ति ते ॥ ८

आहवेषु च ये शूरास् त्यक्त्वा मृत्युकृतं भयम् ।
धर्मेण जयमिच्छन्ति दुर्गाण्यतितरन्ति ते ॥ ९

ये पापानि न कुर्वन्ति कर्मणा मनसा गिरा ।
निक्षिप्य दण्डं भूतेषु दुर्गाण्यतितरन्ति ते ॥ १०

---

1. ख—विषमांश्च नि　　2. ख—अर्धचतुष्टयं नास्ति
3. ख—वचनं

ये वदन्तीह सत्यानि प्राणत्यागेऽप्युपस्थिते ।
प्रमाणभूता भूतानां दुर्गाण्यतितरन्ति ते ॥ ११

कर्माण्यकुत्सनार्थानि येषां वाचश्च सूनृताः ।
येषामर्थाश्च साध्वर्था दुर्गाण्यतितरन्ति ते ॥ १२

अनध्यायेषु ये विप्रास् स्वाध्यायं नैव कुर्वते ।
तपोनित्यास्सुमनसो दुर्गाण्यतितरन्ति ते ॥ १३

[1]ये तपश्च तपस्यन्ति कौमारब्रह्मचारिणः ।
विद्यावेदव्रतस्नाता दुर्गाण्यतितरन्ति ते ॥ १४

ये च संशान्तरजसस् संशान्तमनसश्च ये ।
सत्त्वे स्थिता महाभागा दुर्गाण्यतितरन्ति ते ॥ १५

येषां न कश्चित् त्रसति न त्रसन्ति हि कस्यचित् ।
येषामात्मसमो लोको दुर्गाण्यतितरन्ति ते ॥ १६

परश्रिया न [2]तप्यन्ति ये सन्तः [3]पुरुषर्षभ ।
ग्राम्यादन्नान्निवृत्ताश्च दुर्गाण्यतितरन्ति ते ॥ १७

सर्वान् देवान् नमस्यन्ति सर्वधर्मांश्च शृण्वते ।
ये श्रद्दधानाश्शान्ताश्च दुर्गाण्यतितरन्ति ते ॥ १८

ये न मानित्वमिच्छन्ति मानयन्ति च ये परान् ।

---

1. अ—अर्धचतुष्टयं नास्ति 2. ख-घ—तप्यन्ते
3. अ—पुरुषर्षभाः

[1]मान्यमानान् नमस्यन्ति दुर्गाण्यतितरन्ति ते ॥ १९

[2]ये च श्राद्धानि कुर्वन्ति तिथ्यां तिथ्यां प्रजार्थिनः ।
सुविशुद्धेन मनसा दुर्गाण्यतितरन्ति ते ॥ २०

ये रोषं सन्नियच्छन्ति क्रुद्धान् संशमयन्ति च ।
न च रुष्यन्ति भृत्यानां दुर्गाण्यतितरन्ति ते ॥ २१

मधु मांसं च ये नित्यं वर्जयन्तीह मानवाः ।
जन्मप्रभृति मद्यं च दुर्गाण्यतितरन्ति ते ॥ २२

यात्रार्थं भोजनं येषां सन्तानार्थं च मैथुनम् ।
वाक् सत्यवचनार्थं च दुर्गाण्यतितरन्ति ते ॥ २३

ईश्वरं सर्वभूतानां जगतः प्रभवाप्ययम् ।
भक्ता नारायणं देवं दुर्गाण्यतितरन्ति ते ॥ २४

य एष पद्मरक्ताक्षः पीतवासा महाभुजः ।
सुहृद्भ्राता च मित्रं च सम्बन्धी च तवाच्युतः ॥ २५

य इमान् सकलाँल्लोकांश् चर्मवत् परिवेष्टयेत् ।
इच्छन् प्रभुरचिन्त्यात्मा गोविन्दः पुरुषोत्तमः ॥ २६

स्थितः प्रियहिते नित्यं स एष पुरुषर्षभः ।
राजंस्तव यदुश्रेष्ठो वैकुण्ठः पुरुषोत्तमः ॥ २७

---

1. क-घ—मानमान्यान्
2. अ-क-घ—अर्धद्वयं नास्ति

य एनं संश्रयन्तीह भक्त्या नारायणं हरिम् ।
ते तरन्तीह दुर्गाणि न मेऽत्रास्ति विचारणा ॥ २८

अस्मिन्नर्पितकर्माणस् सर्वभावेन भारत ।
कृष्णे कमलपत्राक्षे दुर्गाण्यतितरन्ति ते ॥ २९

लोकरक्षार्थमुत्पन्नम् अदित्यां काश्यपात्मजम् ।
देवमिन्द्रं नमस्यन्ति दुर्गाण्यतितरन्ति ते ॥ ३०

ब्रह्माणं लोककर्तारं ये नमस्यन्ति सत्पतिम् ।
यष्टव्यं क्रतुभिर्देवं दुर्गाण्यतितरन्ति ते ॥ ३१

यं विष्णुरिन्द्रश्शम्भुश्च ब्रह्मा लोकपितामहः ।
स्तुवन्ति विविधैस्स्तोत्रैर् देवदेवं महेश्वरम् ॥ ३२

तमर्चयन्ति ये शश्वद् दुर्गाण्यतितरन्ति ते ॥ ३२॥

दुर्गातितरणं ये च पठन्ति श्रावयन्ति च ।
कथयन्ति च विप्रेभ्यो दुर्गाण्यतितरन्ति ते ॥ ३३॥

इति कृत्यसमुद्देशः कीर्तितस्ते मयाऽनघ ।
तरते येन दुर्गाणि परत्रेह च मानवः ॥ ३४॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकशततमोऽध्यायः ॥ १०१ ॥
॥ ८६ ॥ राजधर्मपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥
[ अस्मिन्नध्याये ३४॥ श्लोकाः ]

## ॥ द्व्यधिकशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति परीक्षायाः सौम्यासौम्यत्वनिर्धारणसाधनता-प्रतिपादकव्याघ्रगोमायुचरितकथनम् ॥

युधिष्ठिरः—

असौम्यास्सौम्यरूपेण सौम्याश्चासौम्यरूपिणः ।
तादृशान् पुरुषांस्तात कथं विद्यामहे वयम् ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम इतिहासं पुरातनम् ।
व्याघ्रगोमायुसंवादं तं निबोध युधिष्ठिर ॥ २

पुरिकायां पुरि पुरा श्रीमत्यां पौरिको नृपः ।
परहिंसापरः क्रूरो बभूव पुरुषाधमः ॥ ३

स त्वायुषि परिक्षीणे जगामानीप्सितां गतिम् ।
गोमायुत्वं च सम्प्राप्तो दूषितः पूर्वकर्मणा ॥ ४

संस्मृत्य पूर्वजातिं स्वां निर्वेदं परमं गतः ।
न भक्षयति मांसानि परैरुपहृतान्यपि ॥ ५

अहिंस्रस्सर्वभूतेषु सत्यवाक् सुदृढव्रतः ।
चकार च यथाकालम् आहारं पतितैः फलैः ॥ ६

पर्णाहारः कदाचिच्च नियमव्रतवानपि ।

कदाचिदुदकेनापि वर्तयन्ननुयन्त्रितः ॥ ७

श्मशाने तस्य चावासो गोमायोस्सम्मतोऽभवत् ।
जन्मभूम्यनुरोधाच्च नान्यं वासमरोचयत् ॥ ८

तस्य शोकममृष्यन्तस् ते सर्वे सहजातयः ।
चालयन्ति स्म तां बुद्धिं वचनैः प्रश्रयोत्तरैः ॥ ९

गोमायवः—

वसन् पितृवने रौद्रे शौचं लम्भितुमिच्छसि ।
इयं विप्रतिपत्तिस्ते यदा त्वं पिशिताशनः ॥ १०

तत् समानो भवास्माभिर् भक्ष्यं दास्याम ते वयम् ।
भुङ्क्ष्व शौचं परित्यज्य यद्धि भुक्तं तदस्ति ते ॥ ११

भीष्मः—

इति तेषां वचश्श्रुत्वा प्रत्युवाच समाहितः ।
मधुरैः प्रश्रितैर्वाक्यैर् हेतुमद्भिरनिष्ठुरैः ॥ १२

गोमायुः—

अप्रमाणा प्रसूतिर्मे शीलतः क्रियते कुलम् ।
प्रार्थयामि च तत् कर्म येन विस्तीर्यते यशः ॥ १३

श्मशाने यदि वासो मे समाधिर्मे निशाम्यताम् ।
आत्मा फलति कर्माणि नाश्रमो धर्मलक्षणम् ॥ १४

आश्रमे यो द्विजं हन्याद् दानं दद्यादनाश्रमे ।

किं नु तत् [1]पातकं न स्यात् तद्वा दानं वृथा भवेत् ॥ १५
भवन्तस्स्वार्थलोभेन केवलं भक्षणे रताः ।
अनुबन्धेषु ये दोषास् तान् न पश्यन्ति मोहिताः ॥ १६
अप्रत्ययकृतां गर्ह्याम् अर्थापनयदूषिताम् ।
इह चामुत्र चानिष्टां तस्माद्वृत्तिं न रोचये ॥ १७

भीष्मः—

तं शुचिं पण्डितं मत्वा शार्दूलः ख्यातविक्रमः ।
कृत्वाऽऽत्मसदृशीं पूजां साचिव्येऽवरयत् स्वयम् ॥ १८

शार्दूलः—

सौम्य विज्ञातरूपस्त्वं गच्छ यात्रां मया सह ।
व्रियन्तामीप्सिता भोगाः परिहाराश्च पुष्कलाः ॥ १९
तीक्ष्णा इति वयं ख्याता भवन्तं ज्ञापयामहे ।
मृदुपूर्वं प्रशाधि त्वं श्रेयश्चापि गमिष्यसि ॥ २०

भीष्मः—

अथ सम्पूज्य तद्वाक्यं मृगेन्द्रस्य महात्मनः ।
गोमायुः प्रश्रितं वाक्यं बभाषे किञ्चिदानतः ॥ २१

गोमायुः—

सदृशं मृगराजेन्द्र तव वाक्यं मदन्तरे ।
यत् सहायान् मृगयसे धर्मार्थकुशलाञ् शुचीन् ॥ २२

---

1. ख—पावनं तत्

न शक्यं ह्यनमात्येन महत्त्वमनुशासितुम् ।
दुष्टामात्येन वा वीर शरीरपरिपन्थिना ॥ २३

सहायाननुरक्तांस्तु सहितानुपसंहितान् ।
परस्परमसन्तुष्टान् विजिगीषूनलोलुपान् ॥ २४

तानतीतोपधान् प्राज्ञान् हिते युक्तान् [1]मनस्विनः ।
पूजयेथा महाभागान् यथा भ्रातॄन् यथा पितॄन् ॥ २५

न त्वेव मम सन्तोषाद् रोचतेऽन्यन्मृगाधिप ।
न कामये सुखान् भोगान् ऐश्वर्यं वा त्वदाश्रयम् ॥ २६

न च योक्ष्यति मे शीलं न भृत्यैः पुनरानतैः ।
ते त्वां विभेदयिष्यन्ति दुःखशीला मदन्तरे ॥ २७

संश्रयश्श्लाघनीयस्त्वम् अन्येषामपि भास्वताम् ।
कृतात्मा सुमहाभागः पापकेष्वप्यदारुणः ॥ २८

दीर्घदर्शी महोत्साहो मूलरक्षो महाबलः ।
कृते चामोघकर्ताऽसि [2]भागैश्च समलङ्कृतः ॥ २९

किंतु स्वेनास्मि सन्तुष्टो दुःखा वृत्तिरनुष्ठिता ।
सेवायाश्चापि नाभिज्ञस् स्वच्छन्देन वनेचरः ॥ ३०

प्राज्ञोपक्रोशदोषाश्च सर्वे संश्रयवासिनाम् ।
वनचर्या तु निस्सङ्गा निर्भया निरवग्रहा ॥ ३१

---

1. अ—न तु प्रिये 2. अ-क—भोगैश्च

नृपेण ह्रियमाणस्य यत् तिष्ठति भयं हृदि ।
न तत् तिष्ठति शिष्टानां वने मूलफलाशिनाम् ॥ ३२

पानीयं वां निरायासं स्वाद्वन्नं वा गुणोत्तमम् ।
विचार्य खलु पश्यामि तत् सुखं यत्र निर्वृतिः ॥ ३३

अपराधैर्न तावन्तो भृत्याश्शस्ता नराधिपैः ।
उपघातैर्यथा भृत्या दूषिता निधनं गताः ॥ ३४

यदि वा [1]ते दया कार्या मृगेन्द्र यदि मन्यसे ।
समयं कृतमिच्छामि वर्तितव्यं यथा[2]त्वयि ॥ ३५

मदीया माननीयास्ते श्रोतव्यं च हितं वचः ।
कल्पिता या च मे वृत्तिस् सा भवेत् त्वयि सुस्थिरा ॥ ३६

न मन्त्रणीयमन्यैस्ते [3]सचिवैस्सह कर्हिचित् ।
नीतिमन्तः परीप्सन्तो वृथा ब्रूयुः परे मयि ॥ ३७

एक एकेन सङ्गम्य रहो ब्रूयां हितं वचः ।
न च ते ज्ञातिकार्येषु प्रष्टव्योऽस्मि हिताहिते ॥ ३८

मया सम्मन्त्र्य पश्चाच्च न हिंस्यास्सचिवास्त्वया ।
मदीयानां च कुपितो मा त्वं दण्डं निपातयेः ॥ ३९

भीष्मः—

एवमस्त्विति तेनासौ मृगेन्द्रेणाभिपूजितः ।

---

1. ख—तन्मया कार्यं 2. ख—विधि
3. ख-घ—मन्त्रिभिस्सह

प्राप्तवान् मतिसाचिव्यं गोमायुर्व्याघ्रचोदितः ॥ ४०

तं तथा सत्कृतं दृष्ट्वा युज्यमानं च कर्मसु ।
प्राद्विषन् कृतसङ्घाताः पूर्वभृत्या मुहुर्मुहुः ॥ ४१

मित्रबुद्ध्या च गोमायुं सान्त्वयित्वा प्रवेश्य च ।
दोषेषु समयान्नेतुम् इच्छन्त्यशुभबुद्धयः ॥ ४२

अन्यथा ह्युचितं पूर्वं परद्रव्यापहारिणः ।
अशक्ताः किञ्चिदाहर्तुं द्रव्यं गोमायुयन्त्रिताः ॥ ४३

व्युत्थानं चात्र काङ्क्षद्भिः कथाभिः प्रतिलोभ्यते ।
धनेन महता चैव बुद्धिरस्य विलोभ्यते ॥ ४४

न चापि स महाप्राज्ञस् तस्माद्धैर्याच्चचाल ह ॥ ४४॥
अथास्य समयं कृत्वा विनाशाय स्थिताः परे ॥ ४५

ईप्सितं च मृगेन्द्रस्य मांसं यत् तत्र संस्कृतम् ।
अपनीय स्वयं तच्च तैर्न्यस्तं तस्य वेश्मनि ॥ ४६

यदर्थं वाऽप्यपहृतं येन यच्चैव मन्त्रितम् ।
तस्य तद्विदितं सर्वं कारणार्थं च मर्षितम् ॥ ४७

समयोऽ[1]यं कृतस्तेन साचिव्यमुपगच्छता ।
नोपघातस्त्वया कार्यो राजन् मैत्रीमिहेच्छता ॥ ४८

[2]इति तस्य च मन्त्रस्य स्थित्यर्थं तदुपेक्षितम् ॥ ४८॥

1. ख-घ—यः 2. ख—नास्तीदमर्धम्

भोजने तूपहर्तव्ये यन्मांसं तन्न दृश्यते ।
मृगराजेन चाज्ञप्तं मृग्यतां चोर इत्युत ॥ ४९॥
कृतकैश्चापि तन्मांसं मृगेन्द्राय निवेदितम् ।
सचिवेनापनीतं ते विदुषा प्राज्ञमानिना ॥ ५०॥
सरोषस्त्वथ शार्दूलश् श्रुत्वा गोमायुचापलम् ।
बभूव विमना [1]राजन् वधं चाप्यभ्यरोचयत् ॥ ५१॥
छिद्रं तु तस्य ते दृष्ट्वा प्राहुस्ते पूर्वमन्त्रिणः ॥ ५२

व्याघ्रमन्त्रिणः—

सर्वेषामेव सोऽस्माकं वृत्तिभङ्गेषु वर्तते ॥ ५२॥
इदं तस्येदृशं कर्म [2]बालेभ्यो न च लक्ष्यते ।
श्रुतश्च स्वामिना पूर्वं यादृशो नैष तादृशः ॥ ५३॥
वाङ्मात्रेणैव धर्मिष्ठस् स्वभावेन तु दारुणः ।
धर्मच्छद्मा ह्ययं पापो वृथाचारपरिग्रहः ॥ ५४॥
कार्यार्थे [3]भोजनाद्येषु व्रतेषु कृतवाञ् श्रमम् ॥ ५५

भीष्मः—

मांसापनयनं श्रुत्वा व्याघ्रस्तेषां च तद्वचः ।
आज्ञापयामास तदा गोमायुर्वध्यतामिति ॥ ५६
गोमायोर्व्यसनं श्रुत्वा शार्दूलजननी ततः ।
मृगराजं हितैर्वाक्यैस् सम्बोधयितुमागमत् ॥ ५७

---

3. क-घ—राजा　　2. ख—बाल्येभ्यो न च रक्ष्यते
3. अ-क—भोजनार्थेषु

शार्दूलजननी—

पुत्र नैतत्त्वया ग्राह्यं कपटारम्भसंयुतम् ।
धर्मं [1]सङ्कर्षजैर्दोषैर् दूष्यतेऽशुचिभिश्शुचिः ॥ ५८

नोच्छ्रितं सहते कश्चित् प्रक्रिया वैरकारिका ।
शुचेरपि हि युक्तस्य दोष एव निपात्यते ॥ ५९

लुब्धानां शुचयो द्वेष्याः कातराणां तरस्विनः ।
मूर्खाणां पण्डिता द्वेष्या दरिद्राणां महाधनाः ॥ ६०
अधार्मिकाणां धर्मिष्ठा विरूपाणां सुरूपिणः ॥ ६०॥

बहवोऽपण्डिता मूर्खा लुब्धा मायोपजीविनः ।
आहुर्दोषमदोषस्य बृहस्पतिमतेरपि ॥ ६१॥

सुन्यस्तं ते गृहे मांसं यद्‌द्यापहृतं तव ।
नेच्छते दीयमानं च साधु तावद्विधीयताम् ॥ ६२॥

असत्यास्सत्यसङ्काशास् सत्याश्चासत्यदर्शनाः ।
दृश्यन्ते विविधा भावास् तेषु युक्तं परीक्षणम् ॥ ६३॥

तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव ।
न चैवास्ति तलं व्योम्नि खद्योते न हुताशनः ॥ ६४॥

तस्मात् प्रत्यक्षदृष्टेऽपि युक्तमर्थपरीक्षणम् ।
परीक्ष्य ज्ञापयन्नर्थान् न पश्चात् परितप्यते ॥ ६५॥

---

1. ख-ग—सङ्कर्षजैर्

न [1]दुष्करमिदं पुत्र यत् प्रभुर्घातयेत् परम् ।
श्लाघनीया यशस्या च लोके प्रभवतां क्षमा ॥ ६६॥

स्थापितोऽयं त्वया पुत्र स मन्त्रेष्वपि विश्रुतः ।
दुःखेन साध्यते पात्रं धार्यतामेष वै सुहृत् ॥ ६७॥

दूषितं परदोषैर्हि गृह्णीते योऽन्यथा शुचिम् ।
स्वयं स्वदूषितामात्यः क्षिप्रमेव विनश्यति ॥ ६८॥

एतस्मादरिसङ्घाताद् [2]गोमायोः कश्चिदागतः ।
धर्मात्मा तेन चाख्यातं यथैतत् कपटं कृतम् ॥ ६९॥

भीष्मः—

ततो विज्ञातचारित्रस् सत्कृत्य स विमोक्षितः ।
परिष्वक्तश्च सस्नेहं मृगेन्द्रेण पुनः पुनः ॥ ७०॥

अनुज्ञाय मृगेन्द्रं तु गोमायुर्नीतिशास्त्रवित् ।
तेनामर्षेण सन्तप्तः प्रायमासितुमैच्छत ॥ ७१॥

गोमायुं तु स शार्दूलस् स्नेहात् प्रसृतलोचनः ।
न्यवारयत धर्मिष्ठं पूजया प्रतिपूजयन् ॥ ७२॥

तं स गोमायुरालोक्य स्नेहादागतसम्भ्रमः ।
बभाषे प्रणतो वाक्यं बाष्पसन्दिग्धया गिरा ॥ ७३॥

---

1. घ—दुष्करं मित्रवधं
2. क-घ—गोमायुः

गोमायुः—

पूजितोऽहं त्वया पूर्वं पश्चाच्चैव विमानितः ।
परेषामास्पदं नीतो वक्तुं नार्होऽस्म्ययं त्वया ॥　७४॥

असन्तुष्टश्च्युतस्थानाद् अस्मात् प्रत्यवरोपितः ।
स्वयं चोपद्रुता भृत्या ये चाप्यपहृताः परैः ॥　७५॥

परिक्षीणाश्च लुब्धाश्च क्रुद्धा भाराभिपीडिताः ।
हृतस्वा मानिनो ये च त्यक्तोपात्ता महेप्सवः ॥　७६॥

संलालिताश्च ये केचिद् व्यसनौघप्रतीक्षिणः ।
अन्तर्हितास्सोपहृतास् ते सर्वेऽपरसाधनाः ॥　७७॥

अवमानेन युक्तस्य स्थापितस्य च मे पुनः ।
कथं यास्यसि विश्वासम् अहमेष्यामि वा कथम् ॥　७८॥

समर्थ इति सङ्गृह्य स्थापयित्वा परीक्ष्य च ।
कृतं च समयं [1]भित्त्वा त्वयाऽहमवमानितः ॥　७९॥

प्रथमं यस्समाख्यातश् शीलवानिति संसदि ।
न वाच्यं तस्य वैगुण्यं प्रतिज्ञां परिरक्षता ॥　८०॥

एवं चाप्यमतस्येह विश्वासं मे न यास्यसि ।
त्वयि चापेतविश्वासे ममोद्वेगो भविष्यति ॥　८१॥

शङ्कितस्त्वमहं भीतः परे च्छिद्रानुसारिणः ।

1. ख-घ—हित्वा

अस्निग्धाश्चैव दुस्तोषाः कर्म चैतद्द्रुहुच्छलम् ॥ ८२॥

दुःखेन श्लिष्यते भिन्नं श्लिष्टं दुःखेन भिद्यते ।
भिन्नश्लिष्टे तु या प्रीतिर् न सा स्नेहेन वर्धते ॥ ८३॥

कच्चित् तव हिते भर्तुर् दृश्यते परमात्मनः ।
कार्यापेक्षाः प्रवर्तन्ते भावस्निग्धास्सुदुर्लभाः ॥ ८४॥

सुदुःखं पुरुषज्ञानं चित्तं येषां चलाचलम् ।
समर्थो वाऽप्यशक्तो वा शतेष्वेकोऽधिगम्यते ॥ ८५॥

अकस्मात् प्रक्रिया नृणाम् अकस्माच्चापकर्षणम् ।
शुभाशुभे महत्त्वं च प्रहर्तुं बुद्धिलाघवम् ॥ ८६॥

भीष्मः—

एवं बहुविधं सान्त्वम् उक्त्वा धर्मार्थहेतुमत् ।
प्रसादयित्वा राजानं गोमायुर्वनमभ्यगात् ॥ ८७॥

अगृह्यानुनयं तस्य मृगेन्द्रस्य तु बुद्धिमान् ।
गोमायुः प्रायमासीनस् त्यक्त्वा देहं दिवं ययौ ॥ ८८॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अधिकशततमोऽध्यायः ॥ १०२ ॥
॥ ८६ ॥ राजधर्मपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥
[अस्मिन्नध्याये ८८॥ श्लोकाः]

## ॥ त्र्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति अलसताया अनर्थहेतुताख्यापकोष्ट्रचरिताभिधानम् ॥

युधिष्ठिरः—

किं पार्थिवेन कर्तव्यं कृत्वा किंस्वित् सुखी भवेत् ।
तन्ममाचक्ष्व तत्त्वेन सर्वधर्मभृतां वर ॥ १

भीष्मः—

हन्त तेऽहं प्रवक्ष्यामि शृणु कार्यविनिश्चयम् ।
[1]यथा राज्ञेह कर्तव्यं यच्च कृत्वा सुखी भवेत् ॥ २

श्रुत्वैवं वर्तितव्यं स्म यथेदमनु[2]शुश्रुम ।
उष्ट्रस्य सुमहद्वृत्तं तन्निबोध युधिष्ठिर ॥ ३

जातिस्मरो महानुष्ट्रः प्रजापतिकुलोद्भवः ।
तपस्सुमहदातिष्ठद् अरण्ये संशितव्रतः ॥ ४

तपसस्तस्य चान्ते वै प्रीतिमानभवद्विभुः ।
वरेण च्छन्दयामास ततश्चैनं पितामहः ॥ ५

उष्ट्रः—

भगवंस्त्वत्प्रसादान्मे दीर्घा ग्रीवा भवेदियम् ।

1. ख—नास्तीदमर्धम्   2. ख-घ—शुश्रुमः

योजनानां शतं साग्रम् इच्छेयं चरितुं विभो ॥ ६

भीष्मः—

एवमस्त्विति तेनोक्तं वरदेन महात्मना ।
उपलभ्य वरं श्रेष्ठं प्रायादुष्ट्रस्स्वकं वनम् ॥ ७

स चकार तदाऽऽलस्यं वरदानात् सुदुर्मतिः ।
चरितुं चापि नेयेष दुरात्मा कालमोहितः ॥ ८

स कदाचित् प्रसार्यैव तां ग्रीवां शतयोजनाम् ।
चचार शान्तहृदयो वातश्चागात्ततो महान् ॥ ९

स गुहायां शिरो ग्रीवां निधाय पशुरात्मनः ।
वातवर्षमथाभ्यागात् सुमहत् प्लावयज्जगत् ॥ १०

अथ शीतपरीताङ्गो जम्बुकः [1]क्षुच्छ्रमान्वितः ।
सदारस्तां गुहामाशु प्रविवेश जलार्दितः ॥ ११

स दृष्ट्वा मांसजीवी तं सुभृशं [2]क्षुच्छ्रमान्वितः ।
अभक्षयत तां ग्रीवाम् उष्ट्रस्य भरतर्षभ ॥ १२

यदा त्वबुध्यतात्मानं भक्ष्यमाणं स वै पशुः ।
तदा सङ्कोचने यत्नम् अकरोद्भृशदुःखितः ॥ १३

यावदूर्ध्वमधश्चैव ग्रीवां सङ्क्षिपते पशुः ।
तावत्तेन सदारेण जम्बुकेन स भक्षितः ॥ १४

---

1. घ—क्षुत्समन्वितः　　2. घ—क्षुत्समन्वितः

स हत्वा भक्षयित्वा च उष्ट्रं तं जम्बुकस्तदा ।
विगते वातवर्षे च निश्चक्राम गुहोदरात् ॥ १५
एवं दुर्बुद्धिना प्राप्तम् उष्ट्रेण निधनं पुरा ।
आलस्यस्य क्रमात् पश्य महान्तं दोषमात्मनः ॥ १६
त्वमप्येवंविधं त्यक्त्वा योगेन नियतेन्द्रियः ।
प्रवृत्तं बुद्धिमूलं हि विजयं मनुरब्रवीत् ॥ १७
बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत ।
तानि जङ्घाजघन्यानि भारप्रत्यवराणि च ॥ १८
राज्यं तिष्ठति दक्षस्य सङ्गृहीतेन्द्रियस्य च ।
गुप्तं मन्त्रं श्रुतवतस् सुसहायस्य चानघ ॥ १९
असहायवतो ह्यर्था न तिष्ठन्ति कदाचन ।
परीक्षितसहायस्य तिष्ठन्तीह युधिष्ठिर ॥ २०
सहाययुक्तेन मही शक्या कृत्स्ना प्रशासितुम् ॥ २०॥

इदं हि सद्भिः कथितं विधिज्ञैः
पुरा महेन्द्रप्रतिमप्रभाव ।
मयाऽपि चोक्तं तव शास्त्रदृष्ट्या
त्वमप्रमत्तः प्रचरस्व राजन् ॥ २१॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥
॥ ८६ ॥ राजधर्मपर्वणि चतुष्षष्टितमोऽध्यायः ॥ ६४ ॥
[ अस्मिन्नध्याये २१॥ श्लोकाः ]

## ॥ चतुरधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति बलवच्छत्रुवशीकरणे विनयस्योपायतायां दृष्टान्ततया सरित्सागरसंवादानुवादः ॥

युधिष्ठिरः—

राजा राज्यमनुप्राप्य दुर्बलो भरतर्षभ ।
अमित्रस्याभिवृद्धस्य कथं तिष्ठेदसाधनः ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
सरितां चैव संवादं समुद्रस्य च भारत ॥ २

सुरारिनिलयश्शश्वत् समुद्रस्सरितां पतिः ।
पप्रच्छ सरितस्सर्वास् संशयं जातमात्मनः ॥ ३

समुद्रः—

समूलशाखान् पश्यामि निहतान् कायिनो द्रुमान् ।
युष्माभिरभिपूर्णाभिर् अन्यांस्तत्र न वेतसान् ॥ ४

अल्पकायश्चाल्पसारो वेतसः कूलजश्च यः ।
अविज्ञाय न शक्यो वा किञ्चिद्वा तेन वः कृतम् ॥ ५

तदहं श्रोतुमिच्छामि सर्वासामेव वो मतम् ।

यथा कूलानि चेमानि [1]हित्वा नानीयते वशम् ॥ ६

भीष्मः—

ततः प्राह नदी गङ्गा वाक्यमुत्तरमर्थवत् ।
हेतुमद्ग्राहकं चैव सागरं सरितां पतिम् ॥ ७

गङ्गा—

तिष्ठन्त्येते यथास्थानं नगा ह्येकनिकेतनाः ।
ततस्त्यजन्ति तत् स्थानं प्रातिलोम्यादचेतसः ॥ ८

वेतसो वेगमायान्तं दृष्ट्वा नमति नेतरे ।
स च वेगे ह्यतिक्रान्ते स्थानमापद्यते पुनः ॥ ९

कालज्ञस्समयज्ञश्च सदा वश्यश्च नो द्रुमः ।
अनुलोमवृत्तिरस्तब्धस् तेन त्वां नैति वेतसः ॥ १०

मारुतोदकवेगेन ये नमन्त्युन्नमन्ति च ।
ओषध्यः पादपा गुल्मा न ते यान्ति पराभवम् ॥ ११

भीष्मः—

यो हि शत्रोर्विवृद्धस्य प्रभोर्वधविनाशने ।
पूर्वं न सहते वेगं क्षिप्रमेव विनश्यति ॥ १२

सारासारं वलं वीर्यम् आत्मनो द्विषतश्च यः ।
जानन् विचरते प्राज्ञो न स याति पराभवम् ॥ १३

1. क-ख—भित्त्वा

एवमेव यदा विद्वान् मन्यते विपुलं बलम् ।
संश्रयेद्वैतसीं वृत्तिम् एतत् [1]प्रज्ञानलक्षणम् ॥ १४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥
॥ ८६ ॥ राजधर्मपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥
[अस्मिन्नध्याये १४ श्लोकाः]

---

## ॥ पञ्चाधिकशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति सभायां दुष्टदुर्भाषणे तत्तितिक्षाया गुणत्वप्रतिपादनम् ॥

---

युधिष्ठिरः—

विद्वान् मूढ[2]प्रगल्भेन मृदुस्तीक्ष्णेन भारत ।
आक्रुश्यमानस्सदसि कथं कुर्यादरिन्दम ॥ १

भीष्मः—

श्रूयतां पृथिवीपाल यथैषोऽर्थोऽवगम्यते ।
सदा सचेतास्सहते नरस्येहाल्पचेतसः ॥ २

आक्रुश्य दूष्यमाणश्च सुकृतं तस्य विन्दति ।
दुष्कृतं चात्मनो मर्षी तस्मिन्नेव प्रमार्जति ॥ ३

---

1. घ—प्राज्ञस्य 2. घ—प्रकल्पेन

गर्हितं तमुपेक्षेत वाश्यमानमिवातुरम् ।
लोके विद्वेषमापन्नो विफलं प्रतिपद्यते ॥ ४
इति स्म श्लाघते नित्यं तेन पापेन कर्मणा ॥ ४॥

इदमुक्तो मया कश्चित् सर्वतो जनसंसदि ।
स तत्र व्रीडितश्शुष्को मृतकल्पो भविष्यति ॥ ५॥

श्लाघन्नश्लाघनीयेन कर्मणा निरपत्रपः ।
उपेक्षितव्यो दान्तेन तादृशः पुरुषाधमः ॥ ६॥

यद्यद्ब्रूयादल्पमतिस् तत्तदस्य सहेत् तदा ॥ ७

प्रकृत्या हि प्रशंसन् वा निन्दन् वा किं करिष्यति ।
वने काक इवाबुद्धिर् वाश्यमानो निरर्थकम् ॥ ८

यदि वाग्भिः प्रयोगस्स्यात् प्रयोज्यः पापकर्मणा ।
वागेवार्थो भवेत्तस्य न ह्येवार्थो जिघांसतः ॥ ९

निषेकं वै परस्यासावाचष्टे वृत्तचेष्टया ।
मयूर इव [1]कौपीनं नृत्यं सन्दर्शयन्निव ॥ १०

यस्यावाच्यं न लोकेऽस्मिन् नाकार्यं वाऽपि किञ्चन ।
वाचं तेन न सन्दध्याच् छुचिस्संश्लिष्टकर्मणा ॥ ११

प्रत्यक्षं गुणवादी यः परोक्षं तु विनिन्दकः ।

---

1. क-ख-ग—कौलीनं

स [1]मानवश्श्ववल्लोके नष्टलोकपरायणः ॥ १२

तादृग्दिनशतं चापि यद्ददाति जुहोति च ।
परोक्षेणापवादेन तं नाशयति तत्क्षणम् ॥ १३

तस्मात् प्राज्ञो नरस्सद्यस् तादृशं पापचेतसम् ।
वर्जयेन्मतिमान् वर्ज्यं सारमेयमिवामिषम् ॥ १४

परिवादं ब्रुवाणो हि दुरात्मा वै महाजने ।
प्रकाशयति दोषान् स्वान् सर्पः फणमिवोन्नतम् ॥ १५

तं पापगुणकर्माणं प्रतिकर्तुं य इच्छति ।
भस्मकूट इवाबुद्धिः खरो रजसि मज्जति ॥ १६

मनुष्यशाखामृगमप्रशान्तं
जनापवादे सततं निविष्टम् ।
महान्तमुन्मत्तमिवोन्नदन्तं
त्यजेच्च तं श्वानमिवातिरौद्रम् ॥ १७

अनार्यजुष्टे पथि वर्तमानं
दमादपेतं विनयाच्च पापम् ।
अनिर्वृतं नित्यमभूतिकामं
धिगस्तु तं पापमतिं मनुष्यम् ॥ १८

1. ख-घ—मानवश्च स्वर्लोके

प्रत्युच्यमानस्त्वथ भूय एव
निशाम्य मा भूस्त्वमथार्तरूपः ।
उच्चस्य नीचेन हि सम्प्रयोगं
विगर्हयन्ति स्थिरबुद्धयो ये ॥ १९

क्रुद्धो दशेद्वाऽपि च ताडयेद्वा
स पांसुभिर्वा विकिरेत्तृणैर्वा ।
विवृत्य दन्तानभिभीषयेद्वा
सिद्धं हि मूढे कुपिते नृशंसे ॥ २०

विगर्हणां वाऽपि दुरात्मना कृतां
सहेत यस्संसदि दुर्जनानाम् ।
पठेदिदं वाऽपि निदर्शनं सदा
न वाङ्मयं स लभति किञ्चिदप्रियम् ॥ २१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥
॥ ८६ ॥ राजधर्मपर्वणि षट्पष्टितमोऽध्यायः ॥ ६६ ॥
[ अस्मिन्नध्याये २१ श्लोकाः ]

## ॥ षडधिकशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति राज्ञां सहायसम्पादनस्यावश्यकतादिप्रतिपादनम् ॥



युधिष्ठिरः—

पितामह महाप्राज्ञ संशयो मे महानयम् ।
सञ्छेत्तव्यस्त्वया राजन् भवान् कुलकरो हि नः ॥ १

पुरुषाणामयं तात दुर्वृत्तानां दुरात्मनाम् ।
कथितो वाक्यसञ्चारस् ततो विज्ञापयामि ते ॥ २

यद्धितं राज्यतन्त्रस्य [1]मूलस्य च सुखोदयम् ।
आयत्यां च तदात्वे च क्षेमवृद्धिकरं च यत् ॥ ३

पुत्रपौत्राभिरामं च राष्ट्रवृद्धिकरं च यत् ।
अन्नपाने शरीरे च हितं यत्तद्ब्रवीहि नः ॥ ४

अभिषिक्तो हि यो राजा राज्यस्थो मित्रसंवृतः ।
सुसुहृत्समवेतो वा स कथं रञ्जयेत् प्रजाः ॥ ५

यो ह्यसत्प्रग्रहरतिस् स्नेहरागबलात्कृतः ।
इन्द्रियाणामनीशत्वाद् असज्जनविभूषकः ॥ ६

तस्य भृत्या विमुखतां यान्ति सर्वे कुलोद्गताः ।
न च भृत्यबलैरर्थैस् स राजा सम्प्रयुज्यते ॥ ७

---

1. ख—कुलस्य

एतान् मे चिन्तयानस्य राजधर्मान् दिवानिशम् ।
बृहस्पतिसमो बुद्ध्या भवान् [1]शंसितुमर्हति ॥ ८

शासिता पुरुषव्याघ्र त्वं नः कुलहिते रतः ।
क्षत्ता चैको महाप्राज्ञो यो नश्शंसति सर्वदा ॥ ९

[2]त्वत्तः कुलहितं वाक्यं श्रुत्वा राज्यहितोदयम् ।
[3]अमृतस्याव्ययस्येव तृप्तस्स्वप्स्याम्यहं सुखम् ॥ १०

कीदृशास्सन्निकर्षस्था भृत्यास्सर्वगुणान्विताः ।
कीदृशैः किङ्कुलीनैर्वा सह यात्रा विधीयते ॥ ११

न ह्येको भृत्यरहितो राजा भवति रक्षिता ।
राज्यं चेदं जनस्सर्वस् तत्कुलीनः प्रशासति ॥ १२

न च [4]प्रशासितुं शक्यं राज्यमेकेन भारत ॥ १२॥

असहायवता तात नैवार्थाः केचिदप्युत ।
लब्धुं लब्धा अपि सदा रक्षितुं भरतर्षभ ॥ १३॥

भीष्मः—

यस्य भृत्यजनस्सर्वो ज्ञानविज्ञानकोविदः ।
हितैषी कुलजस्स्निग्धस् स राज्यफलमश्नुते ॥ १४॥

मन्त्रिणो यस्य कुलजा असंहार्या [5]स्सुखोषिताः ।

---

1. ख—शासितु
2. अ—नास्तीदमर्धम्
3. अ-क-ख—अर्धद्वयं नास्ति
4. ख-ख—प्रशास्तुं शक्यं हि
5. ख—स्सहोषिताः

नृपतेर्मतिमाप्स्यन्ते सत्पथज्ञानकोविदाः ॥ १५॥
अनागतविधातारः कालज्ञानविशारदाः ।
अतिक्रान्तमशोचन्तस् स राज्यफलमश्नुते ॥ १६॥

समदुःखसुखा यस्य सहायाः प्रियकारिणः ।
अर्थचिन्तापरास्सभ्यास् स राज्यफलमश्नुते ॥ १७॥

यस्य नार्तो जनपदस् सन्निकर्षगतस्सदा ।
अक्षुद्रस्सत्पथालम्बी स राजा राज्यभाग्भवेत् ॥ १८॥

[1]कोशस्य पटलं यस्य कोशवृद्धिकरैर्नृपः ।
आप्तैस्तुष्टैश्च पुष्टैश्च सङ्गतस्स नृपोत्तमः ॥ १९॥

[2]गोष्ठागारमसंहार्यैर् आप्तैस्सञ्चयतत्परैः ।
पात्रभूतैरलुब्धैश्च पाल्यमानं गुणी भवेत् ॥ २०॥

व्यवहारश्च नगरे यस्य धर्मफलोदयः ।
दृश्यते शङ्खलिखितस् स धर्मफलभाङ् नृपः ॥ २१॥

सङ्गृहीतमनुष्यश्च यो राजा राजधर्मवित् ।
षड्भागं परिगृह्णन् स धर्म्यं फलमुपाश्नुयात् ॥ २२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥
॥ ८६ ॥ राजधर्मपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
[ अस्मिन्नध्याये २२॥ श्लोकाः ]

---

1. ख—कोशाक्ष×नरैः घ—काशाक्ष×नृपैः
2. ख—को

## ॥ सप्ताधिकशततमोऽध्यायः ॥

केनचिन्मुनिवरेण द्वीपिभये सति द्वीपित्वं प्रापितस्य स्वीयशुनः पुनर्व्याघ्राद्भये सति व्याघ्रीकरणम् ॥

युधिष्ठिरः—

न सन्ति कुलजा यत्र सहायाः पार्थिवस्य तु ।
अकुलीनाश्च कर्तव्या न वा भरतसत्तम ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
निदर्शनं परं लोके सज्जनाचरितं सदा ॥ २

अस्यैवार्थस्य सदृशं यच्छ्रुतं मे तपोवने ।
जामदग्न्यस्य रामस्य यदुक्तमृषिसत्तमैः ॥ ३

वने महति कस्मिंश्चिद् अमनुष्यनिषेविते ।
ऋषिर्मूलफलाहारो नियतो नियतेन्द्रियः ॥ ४

दीक्षादमपरिश्रान्तस् स्वाध्यायपरमश्शुचिः ।
उपवासविशुद्धात्मा सततं सत्पथे स्थितः ॥ ५

तस्य सन्दृश्य सद्भावम् उपविष्टस्य धीमतः ।
सर्वे सत्त्वास्समीपस्था भवन्ति वनचारिणः ॥ ६

सिंहा व्याघ्रास्सशरभा मत्ताश्चैव महागजाः ।
द्वीपिनः खड्गभल्लूका ये चान्ये भीमदर्शनाः ॥ ७

ते सुखप्रश्नदास्सर्वे भवन्ति क्षतजाशनाः ।
तस्यर्षेश्शिष्यवच्चैव चित्तज्ञाः प्रियकारिणः ॥ ८

उक्त्वा च ते सुखप्रश्नं सर्वे यान्ति यथासुखम् ।
ग्राम्यस्त्वेकः पशुस्तत्र नाजहाच्च महामुनिम् ॥ ९

भक्त्याऽनुरक्तस्सततम् उपवासकृशोऽबलः ।
फलमूलोत्तराहारश् शान्तश्शिष्याकृतिर्यथा ॥ १०

तस्यर्षेरुपविष्टस्य पादमूले महामतेः ।
मनुष्यवद्गतो भावं स्नेहबद्धोऽभवद्भृशम् ॥ ११

ततोऽभ्ययान्महारौद्रो द्वीपी क्षतजभोजनः ।
श्वार्थमत्यर्थमुद्धुष्टः क्रूरः काल इवान्तकृत् ॥ १२

लेलिह्यमानस्तृपितः पुच्छास्फोटनतत्परः ।
व्यादितास्यः क्षुधा मत्तः प्रार्थयानस्तदामिषम् ॥ १३

तं दृष्ट्वा क्रूरमायान्तं जीवितार्थी जनाधिप ।
प्रोवाच श्वा मुनिं तत्र यत्तच्छृणु विशां पते ॥ १४

शुनकः—

[1]श्वशत्रुर्भगवन्नेष द्वीपी मां हन्तुमिच्छति ।
त्वत्प्रसादाद्भयं न स्याद् अस्मान्मम महामुने ॥ १५

मुनिः—

न भयं द्वीपिनः कार्यं मृत्युतस्ते कथञ्चन ।

1. ख-घ—स्व

एष [1]स्वरूपरहितो द्वीपी भवतु पुत्रक ॥ १६

भीष्मः—

ततश्श्वा द्वीपितां नीतो जाम्बूनदनिभाकृतिः ।
चित्राङ्गो विस्फुरद्दंष्ट्रो वने वसति निर्भयः ॥ १७

ततोऽभ्ययान्महारौद्रो व्यादितास्यः क्षुधान्वितः ।
द्वीपिनं लेलिहन् वक्त्रं व्याघ्रो रुधिरलालसः ॥ १८

व्याघ्रं दृष्ट्वा क्षुधाऽऽसन्नं दंष्ट्रिणं वनचारिणम् ।
द्वीपी जीवितरक्षार्थम् ऋषिं शरणमन्वियात् ॥ १९

ततस्संवासजं स्नेहम् ऋषिणा कुर्वता सदा ।
स द्वीपी व्याघ्रतां नीतो रिपुभ्यो बलवत्तरः ॥ २०

ततो दृष्ट्वा स शार्दूलो नाभ्यघ्नत्तं विशां पते ॥ २०॥

स तु श्वा व्याघ्रतां प्राप्य बलवान् पिशिताशनः ।
न मूलफलभोगेषु स्पृहामप्यकरोत् तदा ॥ २१॥

यथा मृगपतिर्नित्यं प्रकाङ्क्षति वनौकसः ।
तथैव स महाराज व्याघ्रस्समभवत् तदा ॥ २२॥

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥
॥ ८६ ॥ राजधर्मपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
[अस्मिन्नध्याये २२॥ श्लोकाः]

---

1. व—श्व

## ॥ अष्टाधिकशततमोऽध्यायः ॥

मुनिवरेण व्याघ्रीकृतस्य स्वीयशुनो गजाद्भये सति गजत्वप्रापणम् ॥ १ ॥ पुनः सिंहाद्भये सिंहीकृतस्य तस्यैव शरभाद्भये शरभीकरणम् ॥ २ ॥ दुष्टभावेनात्मजिघांसोस्तस्य पुनः श्वभावप्रापणम् ॥ ३ ॥

भीष्मः—

व्याघ्रश्चोटजमूलस्थस् तृप्तस्सुप्तो हतैर्मृगैः ।
नागश्चागात् तमुद्देशं मत्तो मेघ इवोत्थितः ॥ १

प्रभिन्नकरटः प्रांशुः पद्मैर्विततमस्तकः ।
सुविषाणो महाकायो मेघगम्भीरनिस्स्वनः ॥ २

तं दृष्ट्वा कुञ्जरं मत्तम् आयान्तं मदगर्वितम् ।
व्याघ्रो दन्तिभयात् त्रस्त ऋषिं शरणमाययौ ॥ ३

ततोऽनयत् कुञ्जरतां व्याघ्रं तमृषिसत्तमः ।
महामेघोपमं दृष्ट्वा स भीतो ह्यभवद्गजः ॥ ४

ततः कमलषण्डानि सल्लकीगहनानि च ।
व्यचरत् स मुदा युक्तः पद्मरेणुविभूषितः ॥ ५

कदाचिद्रममाणस्य हस्तिनस्सुसुखं तदा ।
ऋषेस्तस्योटजस्थस्य कालोऽगच्छद्दिवानिशम् ॥ ६

अथाजगाम तं देशं केसरी केसरारुणः ।

गिरिकन्दरजो भीमस् सिंहो नागकुलान्तकः ॥ ७

तं दृष्ट्वा सिंहमायान्तं नागस्सिंहभयार्दितः ।
ऋषिं शरणमापेदे वेपमानो भयातुरः ॥ ८

स ततस्सिंहतां नीतो गजेन्द्रो मुनिना तदा ।
तं च नागणयत् सिंहं तुल्यजातिसमन्वयात् ॥ ९

दृष्ट्वा च सोऽनशत् सिंहो वन्यो हिंसन्नवाग्बलः ।
स चाश्रमेऽवसत् सिंहस् तस्मिन्नेव वने सुखी ॥ १०

न चान्ये क्षुद्रपशवस् तपोवनसमीपतः ।
प्रादृश्यन्त भयात् त्रस्ता जीविताकाङ्क्षिणस्तथा ॥ ११

कदाचित् कालयोगेन सर्वप्राणिविहिंसकः ।
बलवान् क्षतजाहारो नानासत्त्वभयङ्करः ॥ १२

अष्टपादूर्ध्वनयनश् शरभो वनगोचरः ।
सिंहं संहर्तुमागच्छन्मुनेस्तस्य निवेशने ॥ १३

तं दृष्ट्वा शरभं यान्तं सिंहः परभयातुरः ।
ऋषिं शरणमापेदे वेपमानः कृताञ्जलिः ॥ १४

तं मुनिश्शरभं चक्रे बलोत्कटमरिन्दम ।
ततस्स शरभो वन्यो मुनेश्शरभमग्रतः ॥ १५

दृष्ट्वा बलिनमत्युग्रं द्रुतं सम्प्राद्रवद्वनम् ॥ १५॥

एवं स शरभस्थाने न्यस्तो वै मुनिना तदा ।
मुनेः पार्श्वगतो नित्यं शरभस्सुखमाप्तवान् ॥ १६॥

ततस्तु शरभत्रस्तास् सर्वे मृगगणा वनात् ।
दिशस्सम्प्राद्रवन् राजन् भयाज्जीवितकाङ्क्षिणः ॥ १७॥

शरभोऽप्यतिसन्तुष्टो नित्यं प्राणिवधे रतः ।
फलमूलाशनं दान्तं नैच्छत् स पिशिताशनः ॥ १८॥

ततः क्षुद्रसमाचारो बलेन च समन्वितः ।
इयेष तं मुनिं हन्तुम् अकृतज्ञः कृतान्वयः ॥ १९॥

चिन्तयामास च तदा शरभश्श्वानपूर्वकः ॥ २०

अस्य प्रभावात् सम्प्राप्तो वाङ्मात्रेण तु केवलम् ।
शरभत्वं सुदुष्प्रापं सर्वभूतभयङ्करम् ॥ २१

अन्येऽप्यत्र भयत्रस्तास् सन्ति हस्तिभयार्दिताः ।
मुनिमाश्रित्य जीवन्तो मृगाः पक्षिगणास्तथा ॥ २२

तेषामपि कदाचिच्च शरभत्वं प्रयच्छति ।
सर्वसत्त्वोत्तमं लोके बलं यत्र प्रतिष्ठितम् ॥ २३

पक्षिणामप्ययं दद्यात् कदाचिद्गारुडं बलम् ॥ १३॥

[1]यावदन्यस्य सम्प्रीतः कारुण्यं च समाश्रितः ।
न ददाति बलं तुष्टस् सत्त्वस्यान्यस्य कस्यचित् ॥ २४॥

1. अ-क—दयावान् यस्य

तावदेनमहं विप्रं वधिष्यामि च शीघ्रतः ॥ २५

स्थातुं मया शक्यमिह मुनिघातान्न संशयः ॥ २५॥

ततस्तेन तपश्शक्त्या विदितो ज्ञानचक्षुषा ।
विज्ञाय च महाप्राज्ञश्शुनि शापं प्रयुक्तवान् ॥ २६॥

मुनिः—

अहमग्निप्रभो नाम मुनिर्भृगुकुलान्वयः ।
मनसा निर्दहेत् सर्वं जगत् सन्धारयामि च ॥ २७॥

मम वश्यं जगत् सर्वं देवा यच्च चराचरम् ।
सन्ति देवाश्च मे भीतास् स्वधर्मं न त्यजन्ति ये ॥ २८॥

स्वधर्माच्च्यावितान् सर्वान् वाङ्मात्रेणापि [1]निर्दहे ॥ २९

किमङ्ग त्वं मया नीतश् शरभत्वमनामयम् ।
क्रूरस्स सर्वभूतेषु हीनश्चाशुचिरेव च ॥ ३०

श्वा त्वं द्वीपित्वमापन्नो द्वीपी व्याघ्रत्वमागतः ।
व्याघ्रो नागो मदपरो नागस्सिंहत्वमागतः ॥ ३१

सिंहोऽतिबलसंयुक्तो भूयश्शरभतामयाः ।
मया स्नेहपरीतेन न विमृष्टः कुलान्वयः ॥ ३२

यस्मादेवं महापाप मां त्वं हिंसितुमिच्छसि ।
तस्मात् स्वयोनिमापन्नश् [2]श्वैव त्वं हि भविष्यसि ॥ ३३

1. ख-घ—निर्दहेत्    2. ख—पुनःश्वानो

भीष्मः—

[1]ततो मुनिजनद्वेषाद् दुरात्मा प्राकृतोऽधमः ।
ऋषिणा शरभश्शप्तस् स्वरूपं पुनरागमत् ॥ ३४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥
॥ ८६ ॥ राजधर्मपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥
[ अस्मिन्नध्याये ३४ श्लोकाः ]

## ॥ नवाधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति सचिवादिगुणवर्णनम् ॥

भीष्मः—

स श्वा प्रकृतिमापन्नः परं दैन्यमुपागमत् ।
ऋषिणा हुङ्कृतः पापस् तपोवनबहिष्कृतः ॥ १

एवं राज्ञा मतिमता विदित्वा शीलशौचताम् ।
आर्जवं प्रकृतिं सत्त्वं कुलं वृत्तं श्रुतं दमम् ॥ २

अनुक्रोशं बलं वीर्यं प्रभावं प्रशमं क्षमाम् ।
भृत्या ये मन्त्रिणो योग्यास् स्युस्स्थाप्यास्सुपरीक्षिताः ॥ ३

नापरीक्ष्य महीपालः प्रकर्तुं भृत्यमर्हति ।
अकुलीनजनाकीर्णो न राजा सुखमेधते ॥ ४

1. ख—श्वापूर्वं द्वीप्यसि व्याघ्रो गजस्सिंहस्तथाऽष्टपात् ।
निजेन च प्रभावेण पुनः श्वानो भविष्यसि । [ अधिकः पाठः ]

कुलीनः प्राकृतो राजंस् तत्कुलीनतया सदा ।
न पापे कुरुते बुद्धिं निन्द्यमानोऽप्यनागसम् ॥ ५

अकुलीनस्तु पुरुषः प्राकृतस्साधुसङ्क्षयात् ।
दुर्लभैश्वर्यतां प्राप्तो निन्दितश्शत्रुतां व्रजेत् ॥ ६

काकश्श्वानोऽकुलीनश्च बिडालस्सर्प एव च ।
अकुलीना च या नारी तुल्यास्ते परिकीर्तिताः ॥ ७

लोकपालास्सदोद्विग्नाः पश्यन्त्यकुलजान् यथा ।
नारीं वा पुरुषं वाऽथ शीलं तत्रापि कारणम् ॥ ८

दुष्कुलीना च या स्त्री च दुष्कुलीनश्च यः पुमान् ।
अहिंसाशीलसंयोगाद् [1]धर्मश्चाऽऽकुलतां व्रजेत् ॥ ९

धर्मं प्रति महाराज श्लोकानाह बृहस्पतिः ।
शृणु सर्वान् महीपाल हृदि तांश्च करिष्यसि ॥ १०

असितं सितकर्माणं यथा दान्तं तपस्विनम् ।
वृत्तस्थमपि चण्डालं तं देवा ब्राह्मणं विदुः ॥ ११

यदि घातयते कश्चित् पापसत्त्वं प्रजाहिते ।
सर्वसत्त्वहितार्थाय न तेनासौ विहिंसकः ॥ १२

द्वीपिनं शरभं सिंहं व्याघ्रं कुञ्जरमेव च ।
महिषं च वराहं च सूकरं श्वानपन्नगान् ॥ १३

---

1. क—धर्मांश्च कुलतां ख—धर्मांश्च कुलतां ग—योगाः धर्मश्चाकुलतां

गोब्राह्मणहितार्थाय बालस्त्रीरक्षणाय च ।
वृद्धातुरपरित्राणे यो हिनस्ति स धर्मवित् ॥ १४

ब्राह्मणः पापकर्मा च म्लेच्छो वा धार्मिकश्शुचिः ।
श्रेयांस्तत्र भवेन्म्लेच्छो ब्राह्मणः पापकर्मकृत् ॥ १५

दुष्कुलीनः कुलीनो वा यः कश्चिच्छीलवान् नरः ।
प्रकृतिं तस्य विज्ञाय स्थिरां वा यदि वाऽस्थिराम् ॥ १६

शीलं वाऽनुत्तमं कर्म कुर्याद्राजा समाहितः ॥ १६॥

नियुञ्जीत महीपालो दुर्वृत्तं पापकर्मसु ॥ १७

कुलीनं शिक्षितं प्राज्ञं ज्ञानविज्ञानकोविदम् ।
सर्वशास्त्रार्थतत्त्वज्ञं सहिष्णुं [1]तेजनं तथा ॥ १८

कृतज्ञं बलवन्तं च दान्तं क्षान्तं जितेन्द्रियम् ।
अलुब्धं लब्धसन्तुष्टं स्वामिमित्रबुभूषकम् ॥ १९

सचिवं देशकालज्ञं सर्वसङ्ग्रहणे रतम् ।
संस्कृतं युक्तवचनं हितैषिणमतन्द्रितम् ॥ २०

युक्ताचारं स्वविषये सन्धिविग्रहकोविदम् ।
[2]शस्तं त्रिवर्गवेत्तारं पौरजानपदप्रियम् ॥ २१

सेनाव्यूहनतत्त्वज्ञं यात्रासेनाविशारदम् ।
इङ्गिताकारतत्त्वज्ञं बलहर्षणकोविदम् ॥ २२

---

1. ख—धर्मिणं 2. क—शुचि घ—शुचिं

हस्तिशिक्षाश्वतत्त्वज्ञं सर्वसङ्ग्रहणे रतम् ।
प्रगल्भं दक्षिणं दान्तं बलिनं युक्तमन्त्रिणम् ॥ २३

चोक्षं चोक्षजनाकीर्णं सुवेषं सुखदर्शनम् ।
नायकं नीतिकुशलं गुणैष्षड्भिस्समन्वितम् ॥ २४

अस्तब्धं प्रश्रितं शक्तं मृदुवादिनमेव च ।
धीरं [1]शूरं महर्धीकं देशकालोपपादकम् ॥ २५

सचिवं यः प्रकुरुते न चैनमवमन्यते ॥ २५॥
तस्य विस्तीर्यते राज्यं ज्योत्स्ना ग्रहपतेरिव ॥ २६

एतैरेव गुणैर्युक्तो राजा शास्त्रविशारदः ।
एष्टव्यो धर्मपरमः प्रजापालनतत्परः ॥ २७

धीरोऽमर्षी शुचिश्शीघ्रः काले पुरुषकारवित् ।
शुश्रूषुश्श्रुतवाञ् श्रोता ऊहापोहविशारदः ॥ २८

मेधावी धारणायुक्तो यथान्यायोपपादकः ।
दान्तस्सदा प्रियाभाषी क्षमावांश्च विपर्यये ॥ २९

नातिच्छेत्ता स्वयङ्कारी सुस्वादुस्सुखदर्शनः ।
आर्तहस्तप्रदो नित्यम् आप्तामात्यो नये रतः ॥ ३०

नाहंवादी न[2]निर्द्वन्द्वो नयत्किञ्चनकारकः ।

---

1. ख—श्लक्ष्णं घ—श्लक्ष्णं मधुकरं
2. घ—निस्पन्दो

कृते कर्मण्यमोघानां कर्ता भृत्यजनप्रियः ॥ ३१

सङ्गृहीतजनोऽस्तब्धः प्रसन्नवदनस्सदा ।
त्राता भृत्यजनापेक्षी जितक्रोधो महामनाः ॥ ३२

युक्तदण्डो न निर्दण्डो धर्मकार्यानुशासकः ।
चारनेत्रः परापेक्षी धर्मार्थकुशलस्सदा ॥ ३३

राजा गुणशताकीर्ण एष्टव्यस्तादृशो भवेत् ॥ ३३॥
योधाश्चापि मनुष्येन्द्र सर्वैर्गुणगणैर्युताः ॥ ३४

अन्वेष्टव्यास्सुपुरुषास् सहाया राज्यकारिणः ।
न विमानयितव्याश्च राज्ञा वृद्धिमभीप्सता ॥ ३५

योधास्समरशौण्डीराः कृतज्ञाश्शस्त्रकोविदाः ।
धर्मशास्त्रसमायुक्ताः पदातिजनसंवृताः ॥ ३६

अर्थमानविवृद्धाश्च रथचर्याविशारदाः ।
इष्वस्त्रकुशला यस्य तस्यैव नृपतेर्मही ॥ ३७

ज्ञातीनामनवज्ञानं भृत्येष्वशठता सदा ।
नैपुण्यं चार्थचर्यासु यस्यैते तस्य सा मही ॥ ३८

आलस्यं चैव निद्रा च व्यसनान्यतिहास्यता ।
यस्यैतानि न विद्यन्ते तस्यैव सुचिरं मही ॥ ३९

वृद्धसेवी महोत्साहो वर्णानां चैव रक्षिता ।
धर्मचर्यास्सदा यस्य तस्येयं सुचिरं मही ॥ ४०

नीतिमार्गानुसरणं नित्यमुत्थानमेव च ।
रिपूणामनवज्ञानं तस्येयं सुचिरं मही ॥ ४१

उत्थानं चैव दैवं च तयोर्नानात्वमेव च ।
मनुना वर्णितं पूर्वं वक्ष्ये शृणु तदेव हि ॥ ४२

उत्थानं हि नरेन्द्राणां बृहस्पतिरभाषत ।
नयानयविधानज्ञस् सदा भव कुरूद्वह ॥ ४३

दुर्हृदां छिद्रदर्शी यस् सुहृदामुपकारवान् ।
विशेषविच्च भृत्यानां स राज्यफलमश्नुते ॥ ४४

सर्वसङ्ग्रहणे युक्तो नृपो भवति यस्सदा ।
उत्थानशीलो मन्त्राढ्यस् स राजा राजसत्तमः ॥ ४५

शक्या चाश्वसहस्रेण वीरारोहेण भारत ।
सङ्गृहीतमनुष्येण कृत्स्ना जेतुं वसुन्धरा ॥ ४६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥
॥ ८६ ॥ राजधर्मपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥
[अस्मिन्नध्याये ४६ श्लोकाः]

## ॥ दशाधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति भृत्यानां स्वस्वयोग्यतानुसारेणाधिकारे स्थापनादेर्भृत्यलक्षणादीनां च कथनम् ॥

भीष्मः—

तस्माद् गुणयुतान् भृत्यान् स्वस्थाने यो नरेश्वरः ।
नियोजयति कृत्येषु स राज्यफलमश्नुते ॥ १

न वा स्वस्थानमुत्क्रम्य प्रमाणमपि सत्कृतम् ।
आरोप्य चापि स्वस्थानम् उत्क्रम्यान्यत् प्रपद्यते ॥ २

स्वजातिगुणसम्पन्नास् स्वेषु धर्मेष्ववस्थिताः ।
प्रकर्तव्यास्त्वया भृत्या स्वस्थाने प्रक्रियाक्षमाः ॥ ३

अनुकूलानि कर्माणि भृत्येभ्यो यः प्रयच्छति ।
स भृत्यगुणसम्पन्नं राजा फलमुपाश्नुते ॥ ४

शरभश्शरभस्थाने सिंहस्सिंह इवोच्छ्रितः ।
व्याघ्रो व्याघ्र इव स्थाप्यो द्वीपी द्वीपी यथा तथा ॥ ५

कर्मस्विहानुरूपेषु न्यस्या भृत्या यथाविधि ।
प्रतिलोमा न भृत्यास्ते स्थाप्याः कर्मफलैषिणा ॥ ६

यः प्रमाणमतिक्रम्य प्रतिलोमं नराधिपः ।
भृत्यान् स्थापयतेऽबुद्ध्या स न रञ्जयति प्रजाः ॥ ७

न बालिशा न च क्षुद्रा नाप्राज्ञा नाजितेन्द्रियाः ।
नाकुलीना जनाः पार्श्वे स्थाप्या राज्ञा गुणैषिणा ॥ ८

साधवः कुलजाश्शूरा ज्ञानवन्तोऽनसूयकाः ।
अक्षुद्राश्शुचयो दक्षास् स्युर्नराः परिपार्श्वतः ॥ ९

उद्भूतास्तत्पराः क्षान्ताश् चोक्षाः प्रकृतिजाश्शुभाः ।
स्वे स्वे स्थानेऽनुपाकृष्टास् ते स्यू राज्ञो बहिश्चराः ॥ १०

सिंहस्य सततं पार्श्वे सिंह एव जनो भवेत् ।
सिंहस्सिंहेन सहितस् सिंहवद्विन्दते फलम् ॥ ११

यस्तु सिंहश्श्वभिः कीर्णस् सिंहकर्मफले रतः ।
न स सिंहफलं भोक्तुं शक्तश्श्वभिरुपासितः ॥ १२

एवमेतैर्मनुष्येन्द्र शूरैः प्राज्ञैर्बहुश्रुतैः ।
कुलीनैस्सह शक्येत [1]कृत्स्ना जेतुं वसुन्धरा ॥ १३

नावैद्यो नानृजुः पार्श्वे नाप्राज्ञो नामहायशाः ।
सङ्ग्राह्यो वसुधापालैर् भृत्यो भृत्यवतां वर ॥ १४

बाणवद्विसृता यान्ति स्वामिकार्यपरा नराः ।
ये भृत्याः पार्थिवहितास् तेषु सान्त्वं सदा चरेत् ॥ १५

कोशश्च सततं रक्ष्यो यत्नमास्थाय राजभिः ।
कोशमूला हि राजानः कोशवृद्धिपरो भव ॥ १६

1. ख—जेतुं कृत्स्नां वसुन्धराम्

गोष्ठागारं च ते नित्यं स्फीतैर्धान्यैस्सुसञ्चितैः ।
सदा त्वरत्सु संन्यस्तधनधान्यपरो भव ॥ १७

नित्ययुक्ताश्च ते [1]युक्ता भवन्तु रणकोविदाः ।
वाजिनां [2]चात्र योगेषु वैशारद्यमिहेष्यते ॥ १८

ज्ञातिबन्धु[3]धनावेक्षी मित्रसम्बन्धिसत्कृतः ।
पौरकार्यहितापेक्षी भव [4]कौरव्य नित्यदा ॥ १९

एषा ते नैष्ठिकी बुद्धिः प्रज्ञा चाभिहिता मया ।
श्वा ते निदर्शनं तात किं भूयश्श्रोतुमिच्छसि ॥ २०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥
॥ ८६ ॥ राजधर्मपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥
[ अस्मिन्नध्याये २० श्लोकाः ]

---

1. ख—भृत्या
2. ख—च प्र
3. क-घ—धनापेक्षी ख—जनापेक्षी
4. क-घ—कौरव

## ॥ एकादशाधिकशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति प्रजापालनप्रकारादिकथनम् ॥

युधिष्ठिरः—

राजवृत्तान्यनेकानि त्वया प्रोक्तानि भारत ।
पूर्वैः पूर्वनियुक्तानि राजधर्मार्थवेदिभिः ॥ १

तदेव विस्तरेणोक्तं पूर्ववृत्तं सनातनम् ।
प्रणयं राजधर्माणां प्रब्रूहि भरतर्षभ ॥ २

भीष्मः—

रक्षणं सर्वभूतानाम् इति क्षात्रं परं मतम् ।
तद्यथा रक्षणं कुर्यात् तथा शृणु नराधिप ॥ ३

यथा बर्हाणि चित्राणि बिभर्ति भुजगाशनः ।
तथा बहुविधं राजा रूपं कुर्वीत धर्मवित् ॥ ४

तैक्ष्ण्यं मृदुत्वमादानं सत्यमार्जवमेव च ।
मध्यस्थस्सत्त्वमातिष्ठंस् तथैव सुखमृच्छति ॥ ५

यस्मिन्नर्थे यथैव स्यात् तद्वर्णं रूपमाविशेत् ।
बहुरूपस्य राज्ञो हि सूक्ष्मोऽप्यर्थो न सीदति ॥ ६

नित्यं रक्षितमन्त्रस्स्याद् यथा मूकश्शरच्छिखी ।
श्लक्ष्णाक्षरगतश्श्रीमान् भवेच्छास्त्रविशारदः ॥ ७

आयव्ययेषु युक्तस्स्याज् जलप्रस्रवणेष्विव ।
शैलाद्वर्षोदकानीव द्विजान् सिद्धान् समाश्रयेत् ॥ ८
आत्मार्थं हि सदा राजा कुर्या[1]द्धर्मविदुत्तमम् ।
नित्यमुद्यतदण्डस्स्याद् आचारे चाप्रमादवान् ॥ ९
लोके चायव्ययौ दृष्ट्वा वृक्षाद्वृक्षमिव व्रजेत् ॥ ९॥
आज्ञावान् स्वस्य यूथ्येषु भौमानि चरणैः किरन् ।
जातपक्षपरिस्पन्दो रक्षेद्वैकल्यमात्मनः ॥ १०॥
दोषान् विवृणुयाच्छत्रोः परपक्षांश्च सूदयेत् ।
काननेष्विव पुष्पाणि बहिरर्थान् समाचरेत् ॥ ११॥
उच्छ्रितानाश्रयेत् स्फीतान् नरेन्द्रानचलोपमान् ।
श्रयेच्छायामिव ज्ञातिं गुप्तं शरणमाश्रयेत् ॥ १२॥
प्रावृषीवासितग्रीवो माद्येत निशि निर्जने ।
मायूरेण गुणेनेव स्त्रीभिरारक्षितश्चरेत् ॥ १३॥
न जह्याच्च तनुत्राणं रक्षेदात्मानमात्मना ।
चारभूमिष्विव ततान् पाशांश्च परिवर्जयेत् ॥ १४॥
प्रक्रीडेच्चापि तां भूमिं प्रणश्येद्गहणे पुनः ॥ १५
एवं मयूरधर्मेण वर्तयन् सततं नरः ।

1. ख—धर्मं द्विजोत्तमम्

अन्यान् क्रुद्धान[1]भिपहन् ये जिह्मगतयोऽहिताः ॥ १६

नासूयेच्चा[2]वगर्ह्याणि सन्निवासान्निवासयेत् ।
सदा बर्हिसमं कामं प्रसक्तं कृतमाचरेत् ॥ १७

सर्वतश्चाददत् प्रज्ञां पतङ्गान् गहनेष्विव ॥ १७॥

एवं मयूरवद्राजा स्वराष्ट्रं परिपालयेत् ।
आत्मवृद्धिकरीं नीतिं विदधीत विचक्षणः ॥ १८॥

आत्मसंयमनं बुद्ध्या परबुद्ध्या विचारणम् ।
बुद्ध्या चातिगुणप्राप्तिर् एतच्छास्त्रनिदर्शनम् ॥ १९॥

परं विश्वासयेत् साम्ना स्वशक्तिं नोपलक्षयेत् ।
आत्मनः परिमर्शेन बुद्धिं बुद्ध्या विचारयेत् ॥ २०॥

सान्त्वयोगमतिः प्राज्ञः कार्याकार्यविचारकः ।
निगूढबुद्धेर्धीरस्य वक्तव्ये वक्ष्यते तथा ॥ २१॥

सन्निकृष्टं तथा प्राज्ञो यदि बुद्ध्या बृहस्पतिः ।
स्वभावमेष्यते तप्तं कार्ष्णायसमिवोदके ॥ २२॥

अनुयुञ्जीत सत्यानि सर्वाण्येव महीपतिः ।
आगमैरुपदिष्टानि स्वस्य चैव परस्य च ॥ २३॥

मृदुं क्रूरं तथा प्राज्ञं शूरं चार्थविधानवित् ।
स्वकर्मणि नियुञ्जीत ये चान्ये वचनाधिकाः ॥ २४॥

---

1. ख—नतिद्वेषान्    2. ख—ह्यालबर्ह्याणि

अप्यदृष्टान्यनेकानि स्वानुरूपेषु कर्मसु ।
सर्वांस्ताननुवर्तेत स्वरांस्तन्त्रीरिवायताः ॥ २५॥

धर्माणामविरोधेन सर्वेषां प्रियमाचरेत् ।
ममायमिति राजा यस् स पर्वत इवाचलः ॥ २६॥

व्यवहारं समादाय सूर्यो रश्मीनिवायुतम् ।
धर्ममेवाभिरक्षेत कृत्वा तुल्ये प्रियाप्रिये ॥ २७॥

कुलप्रकृतिदेशानां धर्मज्ञान् मृदुभाषिणः ।
मध्ये वयसि निर्दोषान् हिते युक्ताञ्जितक्लमान् ॥ २८॥

अलुब्धाञ् शिक्षितान् दान्तान् धर्मेषु परिनिष्ठितान् ।
स्थापयेत् सर्वकार्येषु राजा सर्वार्थदक्षिणः ॥ २९॥

एतेनैव प्रकारेण कृत्यानामागतिं गतिम् ।
युक्त्या समनुतिष्ठेत तुष्टश्चारैः पुरस्कृतः ॥ ३०॥

अमोघक्रोधहर्षस्य स्वयं कृत्यानुदर्शिनः ।
आत्मप्रत्ययकोशस्य वसुधेयं वसुन्धरा ॥ ३१॥

व्यक्तश्चानुग्रहो यस्य यथोक्तश्चापि निग्रहः ।
गुप्तात्मा गुप्तराष्ट्रश्च स राजा राजधर्मवित् ॥ ३२॥

नित्यं राष्ट्रमवेक्षेत गोभिस्सूर्य इवातपन् ।
चाराश्चानुचरान् विद्युस् तथा बुद्ध्वा स्वयं चरेत् ॥ ३३॥

कालप्राप्तमुपादद्यान्नार्थं राजा प्रसूचयेत् ।

अहन्यहनि सन्दुह्यान्महीं गामिव बुद्धिमान् ॥ ३४॥

यथा क्रमेण पुष्पेभ्यश् चिनोति मधु षट्पदः ।
तथा द्रव्यमुपादाय राजा कुर्वीत सञ्चयम् ॥ ३५॥

यद्धि गुप्तावशिष्टं स्यात् तद्धितं धर्मकामयोः ।
सञ्चयाद्विसर्गी स्याद् राजा शास्त्रविदात्मवान् ॥ ३६॥

नाल्पमर्थं परिभवेन्नावमन्येत शात्रवान् ।
बुद्ध्याऽनुबुद्ध्य चात्मानं न चाबुद्धेषु विश्वसेत् ॥ ३७॥

धृतिर्दाक्ष्यं संयमो भूतिरात्मा
धैर्यं शौर्यं देशकालाप्रमादाः ।
अल्पस्य वा महतो वा विवृद्धौ
धनस्यैतान्यष्ट समिन्धनानि ॥ ३८॥

अग्निस्स्तोको वर्धते ह्याज्यसिक्तो
बीजं चैकं बहुसाहस्रमेति ।
क्षयोदयौ विपुलौ सन्नियम्यौ
तस्मादल्पं नावमन्येत वित्तम् ॥ ३९॥

बालोऽबालस्स्थविरो वा रिपुर्यस्
सदा प्रमत्तं पुरुषं निहन्यात् ।
कालेनान्यस्तस्य मूलं हरेत
कालज्ञानं पार्थिवानां वरिष्ठम् ॥ ४०॥

हरेत् कीर्तिं धर्ममस्योपरुन्ध्याद्
अर्थे विघ्नं वीर्यमस्योपहन्यात् ।
रिपुर्द्वेष्टा दुर्बलो वा बली वा
तस्माच्छत्रोर्नैव बिभ्येद्यथाऽऽत्मा ॥ ४१॥

क्षयं शत्रोस्सञ्चरन् पालयन् वाऽ-
प्युभावर्थौ सहितौ धर्मकामौ ।
अतश्चान्यन्मतिमान् सन्दधीत
तस्माद्राजा बुद्धिमन्तं श्रयेत ॥ ४२॥

बुद्धिर्दीप्ता धनवन्तं हिनस्ति
बलं बुद्ध्या वर्धते पाल्यमानम् ।
शत्रुर्बुद्ध्या सीदते पीड्यमानो
बुद्धिः पूर्वं कर्म यत्प्रशस्तम् ॥ ४३॥

विद्या तपो वा विपुलं धनं वा
सर्वं ह्येतद्व्यवसायेन शक्यम् ।
यथाऽऽत्मानं प्रार्थयन्नर्थ्यमानैश्
श्रियःपात्रं पूरयतेऽप्यनल्पम् ॥ ४४॥

तस्माद्राजा प्रगृहीतः प्रजासु
मूलं लक्ष्म्यास्सर्वतो ह्याददीत ।

दीर्घं कालं ह्यरिभिः पीड्यमानो
व्युच्छ्यात् सम्पद्व्यवसायेन शक्त्या ॥ ४५॥

ब्रह्मायत्तं निवसति देहवत्सु
तस्माद्विद्वान्व्यवसायं प्रभूतम् ।
यत्रासते मतिमन्तो मनस्विनश्
शक्रो विष्णुर्यत्र सरस्वती च ॥ ४६॥

वसन्ति भूतानि च यत्र नित्यं
तस्माद्विद्वान् नावमन्येत देहम् ।
लुब्धं हन्यात् सम्प्रदानाद्धि नित्यं
लुब्धस्तृप्तिं परवित्तस्य नैति ॥ ४७॥

सर्वो लुब्धस्सर्वगुणोपभोगे
योऽर्थैर्हीनः कामधर्मौ हिनस्ति ॥ ४८

धनं भोज्यं पुत्रदारान् समृद्धिं
सर्वं लुब्धः प्रार्थयते परेषाम् ।
लुब्धे दोषास्सम्भवन्तीह सर्वे
तस्माद्राजा न प्रगृह्णीत लुब्धान् ॥ ४९

सन्दर्शने सत्पुरुषं जघन्यमपि चोदयेत् ।
आरम्भान् द्विषतः प्राज्ञः पापार्थांस्तु प्रसूदयेत् ॥ ५०

धर्मान्वितेषु विज्ञाता मन्त्रगुप्तिश्च पाण्डव ।
आप्तो राजन् कुलीनश्च पर्याप्तो राष्ट्रसङ्ग्रहे ॥ ५१

विधिप्रयुक्तान् नरदेवधर्मान्
उक्तान् समासेन निबोध बुद्ध्या ।
इमान् विदध्यादनुसृत्य यो वै
राजा महीं पालयितुं स शक्तः ॥ ५२

सुनीतिजं यस्य विधानजं सुखं
धर्मप्रणीतं विधिवत् प्रसिद्ध्यति ।
न निन्दिता तस्य गतिर्महीपते
स विन्दते राष्ट्रजमुत्तमं सुखम् ॥ ५३

धनैर्विशिष्टान् मतिशीलपूजितान्
गुणोपपन्नान् युधि दृष्टविक्रमान् ।
गुणेषु युक्तानचिरान्महात्मवांस्
ततोऽभिसन्धाय निहन्ति शात्रवान् ॥ ५४

पश्येदुपायान् विविधेषु कर्मसु
न चानुपायेषु मतिं निवेशयेत् ।
श्रियं समृद्धां विपुलं धनं यशो
न दोषदर्शी पुरुषस्समश्नुते ॥ ५५

प्रीतिप्रवृत्तिं विनिवर्तनं च
सुहृत्सु विज्ञाय विचार्य चोभयोः ।
यदेव मित्रं गुरुभारमाहवे
तदेव सुस्निग्धमुदाहरेद्बुधः ॥ ५६

एतान् मयोक्तां[1]स्मर राजधर्मान्
नृणां च गुप्तौ मतिमादधत्स्व ।
अवाप्स्यसे पुण्यफलं सुखेन
सर्वो हि लोको नृप धर्ममूलः ॥ ५७

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकादशाधिकशततमोऽध्यायः ॥ १११ ॥
॥ ८६ ॥ राजधर्मपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥
[ अस्मिन्नध्याये ५७ श्लोकाः ]

---

1. अ—चर

## ॥ द्वादशाधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति दण्डस्वरूपादिकथनम् ॥

युधिष्ठिरः—

अयं पितामहेनोक्तो राजधर्मस्सनातनः ।
कीदृशश्च महादण्डस् सर्वं दण्डे प्रतिष्ठितम् ॥ १

देवतानामृषीणां च पितॄणां च महात्मनाम् ।
यक्षरक्षःपिशाचानां मर्त्यानां च विशेषतः ॥ २

सर्वेषां प्राणिनां लोके तिर्यक्ष्वपि निवासिनाम् ।
सर्वस्यापि महातेजा दण्डश्श्रेयानिति प्रभो ॥ ३

इत्येतदुक्तं भवता सर्वं दण्डे चराचरम् ॥ ३॥

पश्यतां लोक आयत्तं ससुरासुरमानुपम् ।
एतदिच्छाम्यहं श्रोतुं तत्त्वेन भरतर्षभ ॥ ४॥

को दण्डः कीदृशो दण्डः किं रूपः किम्परायणः ।
[1]किमात्मकः कथम्भूतः कति मूर्तिः कथं प्रभुः ॥ ५॥

जागर्ति च कथं दण्डः प्रजासु विहितात्मकः ।
कश्च पूर्वापरमिदं जागर्ति परिपालयन् ॥ ६॥

---

1. ब—किमात्मा किमयं भूतः + प्रभः

कश्च [1]विज्ञायते पूर्वः को वरो दण्डसंज्ञितः ।
किंसंस्थश्चाभवद्दण्डः का चास्य गतिरिष्यते ॥ ७॥

भीष्मः—

शृणु कौरव्य यो दण्डो व्यवहारो यथैव सः ।
यस्मिन् हि सर्वमायत्तं स धर्म इति केवलः ॥ ८॥

धर्मस्यार्थे महीपाल व्यवहार इतीष्यते ।
तस्य [2]लोपाः कथं न स्युर् लोकेष्विह महात्मनः ॥ ९॥

इत्यर्थं व्यवहारस्य व्यवहारत्वमिष्यते ।
अपि चैतत् पुरा राजन् मनुना प्रोक्तमादितः ॥ १०॥

सुप्रणीतेन दण्डेन प्रियाप्रियसमात्मना ।
प्रजा रक्षति यस्सम्यग् धर्म एव हि केवलः ॥ ११॥

यथोक्तमेतद्वचनं प्रागेव मनुना पुरा ।
जन्म चोक्तं वसिष्ठेन ब्रह्मणो वचनं महत् ॥ १२॥

प्रागिदं वचनं प्रोक्तम् अतः प्राग्वचनं विदुः ।
व्यवहारस्य चाख्यानाद् व्यवहार इहोच्यते ॥ १३॥

दण्डात् त्रिवर्गस्सततं सुप्रणीतात् प्रवर्तते ।
दैवं हि परमो दण्डो रूपतोऽग्निरिवोत्थितः ॥ १४॥

नीलोत्पलदलश्यामश् चतुर्दंष्ट्रश्चतुर्भुजः ।

1. घ—प्रजायते 2. ख—लोपः कथं न स्यात्

[1]अष्टपादेकनयनश् शङ्कुकर्णोर्ध्वरोमवान् ॥ १५॥
जटी द्विजिह्वस्ताम्रास्यो मृगराजतनुच्छदः ।
एतद्रूपं बिभर्त्युग्रं दण्डो नित्यं दुरावरः ॥ १६॥
असिर्गदा धनुश्शक्तिस् त्रिशूलं मुद्गरश्शरः ।
मुसलं परशुश्चक्रं प्रासदण्डर्ष्टितोमराः ॥ १७॥
सर्वप्रहरणीयानि यानि यानीह कानिचित् ।
दण्ड एव हि [2]धर्मात्मा लोके चरति मूर्तिमान् ॥ १८॥
छिन्दन् भिन्दन् रुजन् कृन्तन् दारयन् पाटयंस्तथा ।
घातयन्नभिधावंश्च दण्ड एव चरत्युत ॥ १९॥
असिर्विशसनो धर्मस् तीक्ष्णवर्मा दुरासदः ।
श्रीगर्भो विजयश्शास्ता व्यवहारः प्रजागरः ॥ २०॥
शास्त्रं ब्राह्मणमन्त्राश्च शास्ता प्रवचनं परम् ।
धर्मपालोऽक्षरो गोपस् सत्यगो नित्यको गृहः ॥ २१॥
असङ्गो रुद्रतनयो मनुर्ज्येष्ठश्शिवङ्करः ।
नामान्येतानि दण्डस्य कीर्तितानि युधिष्ठिर ॥ २२॥
दण्डो हि भगवान् विष्णुर् यज्ञो नारायणः प्रभुः ।
शश्वद्रूपं महद्बिभ्रन्महान् पुरुष उच्यते ॥ २३॥
तथोक्ता ब्रह्मकन्येति लक्ष्मीर्नीतिस्सरस्वती ।

---

1. ख—अष्टपादैक 2. ख—सर्वात्मा

दण्डनीतिर्जगद्धात्री दण्डो हि बहुविग्रहः ॥ २४॥

अर्थानर्थौ सुखं दुःखं धर्माधर्मौ बलाबले ।
दौर्भाग्यं भागधेयं च पुण्यापुण्ये गुणागुणौ ॥ २५॥

कामाकामावृतुर्मासश् शर्वरी दिवसः क्षणः ।
[1]अप्रसादः प्रसादश्च हर्षशोकौ दमश्शमः ॥ २६॥

दैवं पुरुषकारश्च मोक्षामोक्षौ भयाभये ।
हिंसाहिंसे तपो यज्ञस् संयमोऽथ विषामृते ॥ २७॥

अन्तश्चादिश्च मध्यं च कृतानां च प्रपञ्चनम् ।
मदप्रमोददर्पाश्च दम्भो धैर्यं नयानयौ ॥ २८॥

अशक्तिश्शक्तिरित्येवं मानस्तम्भौ व्ययाव्ययौ ।
विनयश्च विसर्गश्च कालाकालौ च कौरव ॥ २९॥

अनृतं चाज्ञता सत्यं श्रद्धाश्रद्धे तथैव च ।
क्लीबता व्यवसायश्च लाभालाभौ जयाजयौ ॥ ३०॥

तीक्ष्णता मृदुताऽत्युग्रम् आगमानागमौ तथा ।
विराद्धिश्चैव राद्धिश्च कार्याकार्ये बलाबले ॥ ३१॥

असूया चानसूया च धर्मचर्या तथैव च ।
अपत्रपानपत्रपे श्रीश्च सम्पद्विपच्च ह ॥ ३२॥

तेजः कर्माणि पाण्डित्यं वाक्शक्तिर्बुद्धितत्त्वतः ।

---

1. ख—अप्रमादः प्रसादश्च

एवं दण्डस्य लोकेऽस्मिन् जागर्ति बहुरूपता ॥ ३३॥

न स्याद्यदिह दण्डो हि प्रमथेयुः परस्परम् ।
भयाद्दण्डस्य नान्योन्यं घ्नन्ति चैव युधिष्ठिर ॥ ३४॥

दण्डेन रक्ष्यमाणा हि राजन्नहरहः प्रजाः ।
राजानं वर्धयन्तीह तस्माद्दण्डः परायणम् ॥ ३५॥

व्यवस्थापयते नित्यम् इमं लोकं नरेश्वर ।
सत्ये [1]व्यवस्थितो धर्मो ब्राह्मणेष्ववतिष्ठते ॥ ३६॥

धर्मे युक्ता द्विजश्रेष्ठा देवयुक्ता भवन्ति च ।
बभूव यज्ञो देवेभ्यो यज्ञः प्रीणाति देवताः ॥ ३७॥

प्रीताश्च देवता लोकम् इन्द्रे प्रतिददत्युत ।
अन्नं ददाति शक्रश्चाप्यनुगृह्णन्निमाः प्रजाः ॥ ३८॥

प्राणाश्च सर्वभूतानां नित्यमन्ने प्रतिष्ठिताः ।
तस्मात् प्रजाः प्रतिष्ठन्ति दण्डो जागर्ति तासु च ॥ ३९॥

एवम्प्रयोजनश्चैव दण्डः क्षत्रियतां गतः ।
नित्यं प्रजास्स जागर्ति नित्यं सुविहितोऽक्षरः ॥ ४०॥

ईश्वरः पुरुषः प्राणस् सत्त्वं वृत्तं प्रजापतिः ।
भूतात्मा जीव इत्येवं नामभिः प्रोच्यतेऽष्टभिः ॥ ४१॥

आयत्तं दण्डमेवास्मै ध्रुवमैश्वर्यमेव च ।

---

1. ख-च—व्यवसितो

बलं नयैश्च संयुक्तस् सदा पञ्चविधात्मकम् ॥ ४२॥

मूलमाहुर्धनामात्याः प्रज्ञा चोक्ता धनानि च ।
आहार्यं चाष्टकं द्रव्ये वलमन्यद्युधिष्ठिर ॥ ४३॥

हस्तिनोऽश्वा रथाः पत्तिर् नावो विष्टिस्तथैव च ।
देशिकाश्चारिकाश्चैव तदष्टाङ्गं बलं स्मृतम् ॥ ४४॥

अथ चाङ्गस्य युक्तस्य रथिनो हस्तियायिनः ।
अश्वारोहाः पदाताश्च मन्त्रिणो रथिकाश्च ये ॥ ४५॥

भिक्षुकाः प्राड्विवाकाश्च मौहूर्ता दैवचिन्तकाः ।
[1]कोशो मित्राणि धान्यं च सर्वोपकरणानि च ॥ ४६॥

सप्तप्रकृति चाष्टाङ्गं शरीरमिह तं विदुः ।
राज्यस्य दण्ड एवान्तो दण्डः प्रभव एव च ॥ ४७॥

ईश्वरेण प्रसन्नेन कारणात् क्षत्रियस्य च ।
दण्डो दत्तस्सदा गोप्ता दण्डो हीदं सनातनम् ॥ ४८॥

राजा पूज्यतमो नान्यो यथा धर्मस्तथाऽऽत्मभिः ॥ ४९

ब्रह्मणो लोकरक्षार्थं स्वधर्मस्थापनाय च ।
भर्तृप्रत्यय उत्पन्नो व्यवहारस्तथाविधः ॥ ५०

तस्याद्य सहितो दृष्टो भर्तृप्रत्ययलक्षणः ।
ज्ञेयोऽन्यस्स नरेन्द्रस्थो दण्डः प्रत्यय एव च ॥ ५१

1. ख—कोशमन्त्राणि

व्यवहारस्तु वेदात्मा वेदप्रत्यय उच्यते ।
एवं च नरशार्दूल शिष्टोक्तश्च तथाऽपरः ॥ ५२

उक्तो यश्चापि दण्डोऽसौ भर्तृप्रत्ययलक्षणः ।
ज्ञेयो नस्स नरेन्द्रस्थो दण्डः प्रत्यय एव च ॥ ५३

दण्डप्रत्ययदृष्टोऽपि व्यवहारात्मकस्स्मृतः ।
व्यवहारस्ततो यश्च स [1]वेदविषयात्मकः ॥ ५४

यश्च वेदप्रसूतात्मा स धर्मो गुणदर्शनः ।
धर्मप्रत्यय उद्दिष्टो यश्च धर्मः कृतात्मभिः ॥ ५५

व्यवहारः प्रजागोप्ता ब्रह्मदृष्टो युधिष्ठिर ।
त्रीन् धारयति लोकान् वै सत्यात्मा भूतिवर्धनः ॥ ५६

यश्च दण्डस्स दृष्टो नो व्यवहारस्सनातनः ।
व्यवहारश्च यो दृष्टस् स वेद इति नश्श्रुतिः ॥ ५७

यश्च वेदस्स नो धर्मो यश्च धर्मस्स सत्पथः ।
ब्रह्मा पितामहः पूर्वं भगवांश्च प्रजापतिः ॥ ५८

सर्वलोकान् हि सर्वेषां ससुरासुररक्षसाम् ।
समनुष्योरगवतां कर्ता चैव स भूतकृत् ॥ ५९

ततो नो व्यवहारोऽयं भर्तृप्रत्ययलक्षणः ।
तस्मादिदमवोचाम व्यवहारनिदर्शनम् ॥ ६०

---

1. ख—देव  ब—दैव

माता पिता च भ्राता च भार्या चाथ पुरोहितः ।
नादण्ड्यो विद्यते राज्ञो यस्स्वधर्मे न तिष्ठति ॥ ६१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥
॥ ८६ ॥ राजधर्मपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥
[ अस्मिन्नध्याये ६१ श्लोकाः ]

---

## ॥ त्रयोदशाधिकशततमोऽध्यायः ॥

---

भीष्मेण युधिष्ठिरं प्रति वसुहोममान्धातृसंवादानुवादपूर्वकं दण्डोत्पत्त्यादिकथनम् ॥

---

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
अङ्गेषु राजा द्युतिमान् वसुहोम इति श्रुतः ॥ १

स राजा धर्मनित्यस्सन् सह देव्या महायशाः ।
[1]मुञ्जपृष्ठं जगामाथ देवर्षिगणसेवितम् ॥ २

अत्र शृङ्गे हिमवतो वसतिं समुपागमत् ।
यत्र मुञ्जवटे रामो [2]जटाहरणमादिशत् ॥ ३

तदादि च महाप्राज्ञ ऋषिभिस्संशितव्रतैः ।
मुञ्जपृष्ठ इति प्रोक्तस् स देशो रुद्रसेवितः ॥ ४

---

1. ख—जगाम हिमवत्पृष्ठे 2. ख-घ—जटाभरणमाविशत्

स तत्र बहुभिर्युक्तस् तदा श्रुतिमयैर्गुणैः ।
ब्राह्मणानामनुमतो देवर्षिसदृशोऽभवत् ॥ ५

तं कदाचिददीनात्मा सखा शक्रस्य मानितः ।
अभ्यगच्छन्महीपालो मान्धाता शत्रुकर्शनः ॥ ६

सोपसृत्य तु मान्धाता वसुहोमं नराधिपम् ।
दृष्ट्वा प्रकृष्टं तपसा विनयेनोपतिष्ठते ॥ ७

वसुहोमोऽपि वै राज्ञो गामर्घ्यं च न्यवेदयत् ।
सप्ताङ्गस्य तु राज्यस्य पप्रच्छ कुशलाव्ययौ ॥ ८

सद्भिराचरितं पूर्वं यथावदनुयायिनम् ।
अब्रवीद्वसुहोमस्तं राजन् किं करवाणि ते ॥ ९

सोऽब्रवीत् परमप्रीतो मान्धाता राजसत्तमः ।
वसुहोमं महाप्राज्ञम् आसीनं कुरुनन्दन ॥ १०

मान्धाता—

बृहस्पतेर्मतं राजन्नधीतं सकलं त्वया ।
तथैवौशनसं शास्त्रं [1]विज्ञातं ते नरेश्वर ॥ ११

तदहं श्रोतुमिच्छामि दण्ड उत्पद्यते कथम् ।
किं वाऽस्य पूर्वं जागर्ति किं वा परममुच्यते ॥ १२

कथं क्षत्रियसंस्थश्च दण्डस्सम्प्रत्यवस्थितः ।
ब्रूहि मे तद्यथातत्त्वं ददाम्याचार्यवेतनम् ॥ १३

1. क्ष-च—विदितं

वसुहोमः—

शृणु राजन् यथा दण्डस् सम्भूतो लोकसङ्ग्रहः ।
प्रजाविनयरक्षार्थं धर्मस्यात्मा सनातनः ॥ १४

ब्रह्मा यियक्षुर्भगवान् सर्वलोकपितामहः ।
ऋत्विजो नात्मनस्तुल्यान् ददर्शेति हि नश्श्रुतम् ॥ १५

स गर्भं भगवान् देवो वर्षपूगानधारयत् ।
अथ पूर्णे सहस्रे तु स गर्भः [1]क्षुवतोऽपतत् ॥ १६

स [2]क्षुपो नाम सम्भूतः प्रजापतिररिन्दमः ।
ऋत्विगासीन्महाराज यज्ञे तस्य महात्मनः ॥ १७

तस्मिन् प्रवृत्ते सत्रे तु ब्रह्मणः पार्थिवर्षभ ।
इष्टरूपप्रचारत्वाद् दण्डस्सोऽन्तर्हितोऽभवत् ॥ १८

तस्मिन्नन्तर्हिते चापि प्रजानां सङ्करोऽभवत् ।
नैव कार्यं न चाकार्यं भोज्याभोज्यं न विद्यते ॥ १९

पेयापेये कुतस्सिद्धिर् हिंसन्ति च परस्परम् ।
गम्यागम्यं तदा नासीत् स्वं परस्वं च वै समम् ॥ २०

परस्परं विलुम्पन्ते सारमेया इवामिषम् ।
अबलान् बलिनो जघ्नुर् निर्मर्यादमवर्तत ॥ २१

ततः पितामहो विष्णुं भगवन्तं सनातनम् ।

---

1. ख—क्षुभितो 2. ख-ब—क्षुवो

सम्पूज्य वरदं देवं महादेवमथाब्रवीत् ॥ २२

ब्रह्मा—

तत्र साध्वनुकम्पां वै कर्तुमर्हसि शङ्कर ।
अयं विष्णुस्सखा तुभ्यं धर्मस्य परिरक्षणे ॥ २३

त्वं हि सर्वविधानज्ञस् सत्त्वानां त्वं गतिः परा ।
सङ्करो न भवेदत्र यथा तद्वै विधीयताम् ॥ २४

वसुहोमः—

ततस्स भगवान् ध्यात्वा तदा शूलवरायुधः ।
देवदेवो महादेवः कारणं जगतः परम् ॥ २५

ब्रह्मविष्ण्विन्द्रसहितस् सर्वैश्च ससुरासुरैः ।
लोकसन्धारणार्थं च लोकसङ्करनाशनम् ॥ २६
आत्मानमात्मना दण्डम् असृजद् देवसत्तमः ॥ २६॥

तस्माच्च धर्मचरणान्नीतिं देवीं सरस्वतीम् ।
असृजद्दण्डनीतिं वै त्रिषु लोकेषु विश्रुताम् ॥ २७॥

यथाऽसौ नीयते दण्डस् सततं पापकारिषु ।
दण्डस्य नयनात् सा हि दण्डनीतिरिहोच्यते ॥ २८॥

भूयस्स भगवान् ध्यात्वा चिरं शूलधरः प्रभुः ।
असृजत् सर्वशास्त्राणि महादेवो महेश्वरः ॥ २९॥

दण्डनीतेः प्रयोगार्थं प्रमाणानि च सर्वशः ।
विद्याश्चतस्रः कूटस्थास् तासां भेदविकल्पनाः ॥ ३०॥

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ ३१॥

आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव तु ॥ ३२॥

दश चाष्टौ च विख्याता एता धर्मस्य संहिताः ।
एतासामेव विद्यानां व्यासमाह महेश्वरः ॥ ३३॥

शतानि त्रीणि शास्त्राणां महातन्त्राणि सप्ततिम् ।
व्यास एव तु विद्यानां महादेवेन कीर्तितः ॥ ३४॥

तन्त्रं पाशुपतं नाम पाञ्चरात्रं च विश्रुतम् ।
योगशास्त्रं च विख्यातं तन्त्रं लोकायतं तथा ॥ ३५॥

तन्त्रं ब्रह्मकुलं नाम तर्कविद्या दिवौकसाम् ।
सुखदुःखार्थजिज्ञासा [1]कारकं चेति विश्रुतम् ॥ ३६॥

तर्कविद्यास्तथा चाष्टौ स चोक्तो न्यायविस्तरः ।
दश चाष्टौ च विज्ञेयाः पौराणा यज्ञसंहिताः ॥ ३७॥

पुराणाश्च प्रणीताश्च तावदेव हि संहिताः ।
धर्मशास्त्राणि तद्वच्च एकार्थानीति नान्यथा ॥ ३८॥

एकार्थानि पुराणानि वेदाश्चैकार्थसंहिताः ।
नानार्थानि च सर्वाणि तर्कशास्त्राणि शङ्करः ॥ ३९॥

1. ख—कारणं

प्रोवाच भगवान् देवः कालज्ञानानि यानि च ।
चतुष्षष्टिप्रमाणानि आयुर्वेदं च सोत्तरम् ॥ ४०॥
अष्टाङ्गानि च कल्पानां दण्डनीतिं च शाश्वतीम् ।
गान्धर्वमितिहासं च नानाविस्तरमुक्तवान् ॥ ४१॥
इत्येताश्शङ्करप्रोक्ता विद्याश्शब्दार्थसंयुताः ।
पुनर्भेदसहस्रं च तासामेव तु विस्तरः ॥ ४२॥
ऋषिभिर्देवगन्धर्वैस् सविकल्पस्सविस्तरः ।
शश्वदभ्यस्यते लोके वेद एव च सर्वशः ॥ ४३॥
वेदाश्चतस्रस्सङ्क्षिप्ता वेदवादाश्च ते स्मृताः ।
एतासां पारगो यश्च स चोक्तो वेदपारगः ॥ ४४॥
वेदानां पारगो रुद्रो विष्णुरिन्द्रो बृहस्पतिः ।
शक्रस्स्वायम्भुवश्चैव मनुः परमधर्मवित् ॥ ४५॥
ब्रह्मा च परमो देवस् सदा सर्वैस्सुरासुरैः ।
शर्वस्यानुग्रहाच्चैव व्यासो वै वेदपारगः ॥ ४६॥
अहं शान्तनवो भीष्मः प्रसादान्माधवस्य च ।
शङ्करस्य प्रसादाच्च ब्रह्मणश्च कुरूद्वह । ४७॥
वेदपारग इत्युक्तो याज्ञवल्क्यश्च सर्वशः ॥ ४८
कल्पे कल्पे महाभागैर् ऋषिभिस्तत्त्वदर्शिभिः ।
ऋषिपुत्रैर्ऋषीकैश्च भिद्यन्ते मिश्रकैरपि ॥ ४९

शिवेन ब्रह्मणा चैव विष्णुना च विकल्पिताः ।
आदिकल्पे पुनश्चैव भिद्यन्ते साधुभिः पुनः ॥ ५०

इदानीमपि विद्वद्भिर् भिद्यन्ते च विकल्पकैः ।
पूर्वजन्मानुसारेण बहुधेयं सरस्वती ॥ ५१

भूयस्स भगवान् ध्यात्वा चिरं शूलवरायुधः ।
तस्य तस्य निकायस्य चकारैकैकमीश्वरम् ॥ ५२

देवानामीश्वरं चक्रे देवं दशशतेक्षणम् ।
यमं वैवस्वतं चापि पितॄणामकरोत् पतिम् ॥ ५३

अपां तथा सुराणां च विदधे वरुणं प्रभुम् ।
धनानां रक्षसां चैव कुबेरमपि चेश्वरम् ॥ ५४

पर्वतानां पतिं मेरुं सरितां च महोदधिम् ।
मृत्युं प्राणेश्वरमथो तेजसां च हुताशनम् ॥ ५५

रुद्राणामपि चेशानं गोप्तारं विदधे [1]प्रभुम् ।
महात्मानं विशालाक्षं महादेवं सनातनम् ॥ ५६

दश चैकश्च ये रुद्रास् तस्यैते मूर्तिसम्भवाः ।
नानारूपधरो देवस् स एव भगवाञ् शिवः ॥ ५७

वसिष्ठमीशं विप्राणां वसूनां जातवेदसम् ।
तेजसां भास्करं चक्रे नक्षत्राणां निशाकरम् ॥ ५८

---

1. ख—प्रभुः

वीरुधां वसुमन्तं च भूतानां च प्रभुं वरम् ।
कुमारं द्वादशभुजं स्कन्दं राजानमादिशत् ॥ ५९
कालं सर्वेशमकरोत् संहारविनयात्मकम् ।
मृत्योश्चतुर्विभागस्य दुःखस्य च सुखस्य च ॥ ६०
ईश्वरो देवदेवस्तु राजराजो धनेश्वरः ।
सर्वेषामेव रुद्राणां शूलपाणिरिति श्रुतिः ॥ ६१
ईश्वर[1]श्चोदनः कर्ता पुरुषः कारणं शिवः ।
विष्णुर्ब्रह्मा शशी सूर्यश् शक्रो देवाश्च सान्वयाः ॥ ६२
सृजते ग्रसते चैतत् तमोभूतमिदं यदा ।
अज्ञातं च जगत् सर्वं तदा ह्येको महेश्वरः ॥ ६३
तमेव ब्रह्मणः पुत्रम् अनुजानन् क्षुवं ददौ ।
प्रजानामधिपं श्रेष्ठं सर्वधर्मवतामपि ॥ ६४
महादेवस्ततस्तस्मिन् वृत्ते यज्ञे समाहितः ।
दण्डं धर्मस्य गोप्तारं सत्कृतं विष्णवे ददौ ॥ ६५
विष्णुरङ्गिरसे प्रादाद् अङ्गिरा मुनिसत्तमः ।
प्रादादिन्द्रमरीचिभ्यां मरीचिर्भृगवे ददौ ॥ ६६
भृगुर्ददावृषिभ्यस्तु तद्दण्डं धर्मसंहितम् ।
ऋषयो लोकपालेभ्यो लोकपालाः [2]क्षुवाय च ॥ ६७

1. ख—श्चेतनः     2. ख-ग—क्षुपाय तु

[1]क्षुवस्तु मनवे प्रादाद् आदित्यतनयाय तु ।
पुत्रेभ्यश्श्राद्धदेवस्तु सूक्ष्मधर्मार्थकारणात् ॥ ६८

विभज्य दण्डः कर्तव्यो दण्डे तु नयमिच्छता ।
दुर्वाचा निग्रहो दण्डो हिरण्यं बाह्यतः क्रिया ॥ ६९

व्यङ्गत्वं च शरीरस्य वधो वाऽनल्पकारणात् ।
शरीरपीडा कार्या तु स्वदेशाच्च विवासनम् ॥ ७०

तं ददौ सूर्यपुत्राय मनवे रक्षणात्मकम् ।
आनुपूर्व्याच्च दण्डोऽसौ प्रजा जागर्ति पालयन् ॥ ७१

इन्द्रो जागर्ति भगवान् इन्द्रादग्निर्विभावसुः ।
अग्नेर्जागर्ति वरुणो वरुणाच्च प्रजापतिः ॥ ७२

प्रजापतेस्ततो धर्मो जागर्ति विनयात्मकः ।
धर्माच्च ब्रह्मणः पुत्रो व्यवसायस्सनातनः ॥ ७३

व्यवसायात्ततस्तेजो जागर्ति परिपालयत् ।
ओषध्यस्तेजसस्तस्माद् ओषधीभ्यश्च पर्वताः ॥ ७४

पर्वतेभ्यश्च जागर्ति रसो रसगुणादपि ।
जागर्ति निर्ऋतिर्देवी ज्योतींषि निर्ऋतीमनु ॥ ७५

देवाः प्रसूता ज्योतिर्भ्यस् ततो हयशिराः प्रभुः ।
ब्रह्मा पितामहस्तस्माज् जागर्ति प्रभुरव्ययः ॥ ७६

1. ख–ब—क्षुपस्तु

पितामहान्महातेजा जागर्ति भगवाञ् शिवः ।
विश्वे देवाश्शिवाच्चापि विश्वेभ्य ऋषयस्ततः ॥ ७७

ऋषिभ्यो भगवान् सोमस् सोमाद्देवास्सनातनाः ।
देवेभ्यो ब्राह्मणा लोके जाग्रतीत्युपधारय ॥ ७८

ब्राह्मणेभ्यस्तु राजन्या लोकान् रक्षन्ति धर्मतः ।
स्थावरं जङ्गमं चैव क्षत्रियेभ्यस्सनातनम् ॥ ७९

प्रजा जाग्रति लोकेऽस्मिन् दण्डो जागर्ति तासु च ।
सर्वसङ्क्षेपको दण्डः पितामहसुतः प्रभुः ॥ ८०

जागर्ति [1]कालः पूर्वे च मध्ये चान्ते च भारत ।
ईशस्सर्वस्य कालो हि महादेवः प्रजापतिः ॥ ८१

देवदेवश्शिवश्शर्वो जागर्ति सततं प्रभुः ।
कपर्दी शङ्करो रुद्रो भवस्थाणुरुमापतिः ॥ ८२

इत्येष दण्डो व्याख्यातस् तथौषध्यस्तथाऽपरे ।
भूमिपालो यथान्यायं वर्तेतानेन धर्मवित् ॥ ८३

भीष्मः—

इतीदं वसुहोमस्य योऽऽत्मवाञ् शृणुयान्मतम् ।
श्रुत्वा तु सम्यग् वर्तेत स लोकानाप्नुयान्नृपः ॥ ८४

इति ते सर्वमाख्यातं यो दण्डो मनुजर्षभ ।

---

1. घ—कालकालाय

नियन्ता सर्वलोकस्य धर्माक्रान्तस्य भारत ॥ ८५

वसुहोमाच्छ्रुतं राज्ञा मान्धात्रा भूभृता पुरा ।
मयाऽपि कथितं पुण्यम् आख्यानं प्रथितं तथा ॥ ८६

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥
॥ ८६ ॥ राजधर्मपर्वणि चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥
[अस्मिन्नध्याये ८६ श्लोकाः]

---

## ॥ चतुर्दशाधिकशततमोऽध्यायः ॥



भीष्मेण युधिष्ठिरं प्रति धर्मादिनिरूपणपूर्वकं कामन्दारिष्टसंवादानुवादेन धर्मत्यागिनः प्रायश्चित्तप्रकारादिकथनम् ॥

---

युधिष्ठिरः—

तात धर्मार्थकामानां श्रोतुमिच्छामि निश्चयम् ।
लोकयात्रा हि कार्त्स्न्येन त्रिष्वेतेषु प्रतिष्ठिता ॥ १

धर्मार्थकामाः किम्मूलाः प्रभवः प्रलयश्च कः ।
अन्योन्यं चानुषज्जन्ते वर्तन्ते वा कथं पृथक् ॥ २

भीष्मः—

य एते स्युस्सुमनसो लोकसंस्थार्थनिश्चये ।
कामप्रभवसंस्थासु मज्जन्ते च त्रयस्सदा ॥ ३

धर्ममूलोऽर्थ इत्युक्तः कामोऽर्थफलमुच्यते ।
[1]सङ्कल्पमूलास्ते सर्वे सङ्कल्पो विषयात्मकः ॥ ४

विषयश्चापि कात्स्न्र्येन सर्वभूमारसिद्धये ।
मूलमेति त्रिवर्गस्य निवृत्तिर्मोक्ष उच्यते ॥ ५

धर्मश्शरीरसङ्गुप्तिर् धर्मार्थश्चार्थ [2]उच्यते ।
कामो रतिफलश्चात्र सर्वे सुखफलास्स्मृताः ॥ ६

सन्निकृष्टश्चरेदेतान् न चैतान् मनसा त्यजेत् ।
विमुक्तस्तपसा सर्वान् धर्मादीन् कामनैष्ठिकान् ॥ ७

श्रेष्ठबुद्धिस्त्रिवर्गस्य उदयं प्राप्नुयात् क्षणात् ।
बुद्ध्या बुद्ध्वा इहार्थेन तदह्ना तु निकृष्टया ॥ ८

अपध्यानमलो धर्मो मलोऽर्थस्य विनिग्रहः ।
सम्प्रमोहमलः कामो भूयस्तद्गुणवर्धितः ॥ ९

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
अरिष्टस्य च संवादं कामन्दस्य च भारत ॥ १०

कामन्दमृषिमासीनम् अभिवाद्य नराधिप ।
अङ्गोऽरिष्टोऽनुपप्रच्छ कृत्वा समयमव्ययम् ॥ ११

अरिष्टः—

यः पापं कुरुते राजा कामलोभबलात्कृतः ।

---

1. अ-क—अर्धमयं नास्ति　　2. ख—दृश्यते

प्रत्यापन्नस्य तस्यर्षे किं स्यात् पापप्रणाशनम् ॥ १२

अधर्मं धर्म इति यो मोहादाचरते नृपः ।
तं चापि प्रथितं लोके कथं राजा निवर्तयेत् ॥ १३

कामन्दः—

धर्मार्थौ यस्समुत्सृज्य काममेवानुवर्तते ।
स धर्मार्थपरित्यागात् प्रज्ञानाशमिहर्च्छति ॥ १४

प्रज्ञानाशात्मको मोहस् तथा धर्मार्थनाशकः ।
तस्मान्नास्तिकता चैव दुराचारश्च जायते ॥ १५

दुराचारान् यदा राजा प्रदुष्टान् न नियच्छति ।
तस्मादुद्विजते लोकस् सर्पाद्वेश्मगतादिव ॥ १६

तं प्रजा नानुरज्यन्ते न विप्रा न च साधवः ।
ततस्सङ्क्षयमाप्नोति तथा वध्यत्वमेव च ॥ १७

अपध्वस्तस्त्ववमतो दुःखं जीवति जीवितम् ।
जीवते यदपध्वस्तश् शुद्धं मरणमेव तत् ॥ १८

तस्यैतदाहुराचार्याः पापस्य परिवर्जनम् ।
सेवितव्या त्रयी विद्या सत्कारो ब्राह्मणेषु च ॥ १९

महामना भवेद्धर्मे विवदेन्न महाबलैः ।
ब्राह्मणांश्चापि सेवेत क्षमायुक्तान् मनस्विनः ॥ २०

जपेदुदकशीलस्स्यात् सुमुखो न च नास्तिकः ।

धर्मान्वितान् सम्प्रणयेद् बहिष्कृत्यैव दुष्कृतम् ॥ २१

प्रसादयेन्मधुरया वाचा वाऽप्यथ कर्मणा ।
इत्यस्तीति वदेन्नित्यं पूर्वेषां कीर्तयेद् गुणान् ॥ २२

अपापो ह्येवमाचारः क्षिप्रं बहुमतो भवेत् ।
पापान्यपीह कृच्छ्राणि शमयेन्नेह संशयः ॥ २३

गुरवो हि परं धर्मं यं ब्रूयुस्तं तथा कुरु ।
गुरूणां हि प्रसादाद्धि श्रेयः परमवाप्स्यसि ॥ २४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥
॥ ८६ ॥ राजधर्मपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥
॥ अस्मिन्नध्याये २४ श्लोकाः ॥

## ॥ पञ्चदशाधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति दुर्योधनाय धृतराष्ट्रप्रोक्तेन्द्रप्रह्लादकथानुवादपूर्वकं शीलस्य धर्मादिकारणत्वप्रतिपादनम् ॥

युधिष्ठिरः—

इमे जना मनुष्येन्द्र प्रशंसन्ति जनाधिप ।
धर्मस्य शीलमेवादौ ततो मे संशयो महान् ॥ १

यदि चेच्छक्यमस्माभिर् ज्ञातुं धर्मभृतां वर ।

श्रोतुमिच्छामि तत् सर्वं यथैतदुपलभ्यते ॥ २

कथं नु प्राप्यते शीलं श्रोतुमिच्छामि भारत ।
किंलक्षणं च तत् प्रोक्तं ब्रूहि मे वदतां वर ॥ ३

भीष्मः—

पुरा दुर्योधनेनेदं धृतराष्ट्राय मानद ।
आख्यातं तप्यमानेन श्रियं दृष्ट्वा तवागताम् ॥ ४

इन्द्रप्रस्थे महाराज तव सभ्रातृकस्य च ।
सभायां चापहसनं तत् सर्वं शृणु भारत ॥ ५

भवतस्तां सभां दृष्ट्वा समृद्धिं चाप्यनुत्तमाम् ।
दुर्योधनस्तदा दृष्ट्वा सर्वं पित्रे न्यवेदयत् ॥ ६

स श्रुत्वा धृतराष्ट्रश्च दुर्योधनवचस्तदा ।
अब्रवीत् कर्णसहितं दुर्योधनमिदं वचः ॥ ७

धृतराष्ट्रः—

किमर्थं तप्यसे पुत्र श्रोतुमिच्छामि तत्त्वतः ।
श्रुत्वा त्वामनुशिष्यामि यदि सम्यग् भविष्यति ॥ ८

यदा त्वां महदैश्वर्यं प्राप्तं परपुरञ्जय ।
किङ्करा भ्रातरस्सर्वे मित्रसम्बन्धिबान्धवाः ॥ ९

आच्छादयसि प्रावारान् अश्नासि पिशितौदनम् ।
आजानेया वहन्ति त्वां कस्माच्छोचसि पुत्रक ॥ १०

दुर्योधनः—

दश तात सहस्राणि स्नातकानां महात्मनाम् ।
भुञ्जते रुक्मपात्रीभिर् युधिष्ठिरनिवेशने ॥ ११

दृष्ट्वा सभां च तां दिव्यां दिव्यपुष्पफलान्विताम् ।
अश्वांस्तित्तिरिकल्माषान् रत्नानि विविधानि च ॥ १२

दृष्ट्वा तां पाण्डवेयानाम् ऋद्धिमिन्द्रोपमां शुभाम् ।
अमित्राणां सुमहतीम् अनुशोचामि मानद ॥ १३

धृतराष्ट्रः—

यदीच्छसि श्रियं तात यादृशीं तां युधिष्ठिरे ।
विशिष्टां वा नरश्रेष्ठ शीलवान् भव पुत्रक ॥ १४

शीलेन हि त्रयो लोकाश् शक्या जेतुं न संशयः ।
न हि किञ्चिदसाध्यं स्याल्लोके शीलवतां सताम् ॥ १५

एकरात्रेण मान्धाता त्र्यहेण जनमेजयः ।
सप्तरात्रेण नाभागः पृथिवीं प्रतिपेदिवान् ॥ १६

एते हि पार्थिवास्सर्वे शीलवन्तो यशोन्विताः ।
ततस्तेषां गुणक्रीता वसुधा स्वयमागता ॥ १७

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
नरदेव पुरा वृत्तं शीलमाश्रित्य भारत ॥ १८

प्रह्लादेन हृतं राज्यं देवेन्द्रस्य महात्मनः ।

शीलमाश्रित्य दैत्येन त्रैलोक्यं च वशीकृतम् ॥ १९

ततो बृहस्पतिं शक्रः प्राञ्जलिस्समुपस्थितः ।
उवाच सुमहाप्राज्ञश् श्रेय इच्छामि वेदितुम् ॥ २०

ततो बृहस्पतिस्तस्मै ज्ञानं नैश्रेयसं परम् ।
कथयामास भगवान् देवेन्द्राय कुरूद्वह ॥ २१

एतावच्छ्रेय इत्येव बृहस्पतिरभाषत ।
इन्द्रस्तु भूयः पप्रच्छ किं विशेषो भवेदिति ॥ २२

बृहस्पतिः—

विशेषोऽस्ति महांस्तात भार्गवस्य महात्मनः ।
तत्रागमय भद्रं ते भूय एव सुरोत्तम ॥ २३

धृतराष्ट्रः—

आत्मनस्तु ततश्श्रेयो भार्गवस्सुमहायशाः ।
ज्ञानमागमयत् प्रीत्या पुनस्स परमद्युतिः ॥ २४

तेनापि समनुज्ञातो भार्गवेण महात्मना ।
श्रेयोऽस्तीति परं भूयश् शुक्रमाह शचीपतिः ॥ २५

भार्गवस्त्वथ धर्मज्ञः प्रह्लादस्य महात्मनः ।
ज्ञानमस्ति विशेषेणेत्युक्तो हृष्टश्च सोऽभवत् ॥ २६

स तत्र ब्राह्मणो भूत्वा प्रह्लादं पाकशासनः ।
सृत्वा प्रोवाच मेधावी श्रेय इच्छामि वेदितुम् ॥ २७

प्रह्लादस्त्वब्रवीद्विप्रं क्षणो नास्ति द्विजोत्तम ।
त्रैलोक्यराज्यसक्तस्य ततो नोपदिशामि ते ॥ २८

ब्राह्मणस्त्वब्रवीन्नित्यं यस्मिन् काले क्षणो भवेत् ।
तत्रोपदेष्टुमिच्छामि यदि कार्यान्तरं भवेत् ॥ २९

ततः प्रीतोऽभवद्राजा प्रह्लादो ब्रह्मवादिने ।
तथेत्युक्त्वा ददौ काले ज्ञानतत्त्वं द्विजे तदा ॥ ३०

ब्राह्मणोऽपि यथान्यायं गुरुवृत्तिमनुत्तमाम् ।
चकार सर्वभावेन यद्यच्च मनसेच्छति ॥ ३१

पृष्टश्च तेन बहुशः प्राप्तं कथमरिन्दम ।
त्रैलोक्यराज्यं धर्मज्ञ कारणं तद्ब्रवीहि मे ॥ ३२

प्रह्लादः—

नासूयामि द्विजान् विप्र राजाऽस्मीति कथञ्चन ।
काम्यानि वदतां तात संयच्छामि वहामि च ॥ ३३

ते विस्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा ।
तेषां कार्यपथे सक्तं शुश्रूषुमनहङ्कृतम् ॥ ३४

धर्मात्मानं जितक्रोधं नियतं संयतेन्द्रियम् ।
समासिञ्चन्ति शास्त्रज्ञाः क्षौद्रं मध्विव मक्षिकाः ॥ ३५

सोऽहं वागन्यपुष्टानां मधूनां परिलेहिता ।
स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥ ३६

एतत् पृथिव्याममृतम् एतच्चक्षुरनुत्तमम् ।
यद्ब्राह्मणमुखे हव्यम् एतच्छ्रुत्वा प्रवर्तते ॥ ३७

धृतराष्ट्रः—

एतावच्छ्रेय इत्याह प्रह्लादो ब्रह्मवादिनम् ।
शुश्रूषितस्तेन सदा दैत्येन्द्रो वाक्यमब्रवीत् ॥ ३८

प्रह्लादः—

यथावद्गुरुवृत्त्या ते प्रीतोऽस्मि द्विजसत्तम ।
वरं वृणीष्व भद्रं ते प्रदाताऽस्मि न संशयः ॥ ३९

धृतराष्ट्रः—

कृतमित्येव दैत्येन्द्रम् उवाच द्विजसत्तमः ।
प्रह्लादस्त्वब्रवीत् प्रीतो गृह्यतां वर इत्युत ॥ ४०

ब्राह्मणः—

यदि राजन् प्रसन्नस्त्वं ममेच्छसि च यद्धितम् ।
भवतश्शीलमिच्छामि प्राप्तुमेष वरो मम ॥ ४१

धृतराष्ट्रः—

ततः प्रीतस्स दैत्येन्द्रो भयमस्याभवन्महत् ।
वरे प्रदिष्टे विप्रेण नाल्पचेताऽयमित्युत ॥ ४२

एवमस्त्विति तं प्राह प्रह्लादो विस्मितस्तदा ।
[1]अपाकृत्य तु विप्राय वरं दुःखान्वितोऽभवत् ॥ ४३
दत्ते वरे गते विप्रे चिन्ताऽऽसीन्महती ततः ।

---

1. अ—उपाकृत्य

प्रह्लादस्तु महाराज निश्चयं न च जग्मिवान् ॥ ४४

तस्य चिन्तयतस्तावच् छायाभूतं महाद्युतेः ।
तेजो विग्रहवत्तात शरीरमजहात् तदा ॥ ४५

तमपृच्छन्महाराजः प्रह्लादः को भवानिति ।
प्रत्याह तव [1]शिष्योऽस्मि त्यक्तो गच्छाम्यहं त्वया ॥ ४६

तस्मिन् द्विजोत्तमे राजन् वत्स्याम्यहमरिन्दम ।
योऽसौ शिष्यत्वमागम्य त्वयि नित्यं समाहितः ॥ ४७

इत्युक्त्वाऽन्तर्हितं तद्वै शक्रं चैवाविशत् प्रभो ॥ ४७॥

तस्मिंस्तेजसि याते तु तादृग्रूपस्ततोऽपरः ।
शरीरान्निस्सृतस्तस्य को भवानिति सोऽब्रवीत् ॥ ४८॥

धर्मं प्रह्लाद मां विद्धि यत्र चासौ द्विजोत्तमः ।
तत्र यास्यामि दैत्येन्द्र यतश्शीलं ततो वयम् ॥ ४९॥

ततोऽपरो महातेजास् तेजसा प्रज्वलन्निव ।
शरीरान्निर्गतस्तस्य प्रह्लादस्य महात्मनः ॥ ५०॥

को भवानिति पृष्टश्च तमाह स महाद्युतिः ।
सत्यमस्म्यसुरेन्द्राग्र्य यास्येऽहं धर्ममन्वितः ॥ ५१॥

तस्मिन्ननुगते धर्मं पुरुषे पुरुषोऽपरः ।
निश्चक्राम ततः पश्चात् पृष्टश्चाह महाद्युतिः ॥ ५२॥

1. ख—च्युतोऽस्मि

वृत्तं प्रह्लाद मां विद्धि यतस्सत्यं ततोऽस्म्यहम् ।
[1]तस्मिन् गते महाश्वेतश् शरीरात्तस्य निर्ययौ ॥ ५३॥

पृष्टश्चाह बलं विद्धि यतो वृत्तं ततोऽस्म्यहम् ।
इत्युक्त्वा प्रययौ तत्र यतो वृत्तं नराधिप ॥ ५४॥

ततः प्रभामयी देवी शरीरात् तस्य निर्ययौ ।
तामपृच्छत् स दैत्येन्द्रस् सा श्रीरित्येनमब्रवीत् ॥ ५५॥

उषिताऽस्मि सुखं नित्यं त्वयि सत्यपराक्रम ।
त्वया त्यक्ता गमिष्यामि बलं यत्र ततोऽस्म्यहम् ॥ ५६॥

ततो भयं प्रादुरासीत् प्रह्लादस्य महात्मनः ।
अपृच्छत च तां भूयः क यासि कमलालये ॥ ५७॥

त्वं हि सत्यव्रता देवी लोकस्य परमेश्वरी ।
कश्चासौ ब्राह्मणश्रेष्ठस् तत्त्वमिच्छामि वेदितुम् ॥ ५८॥

श्रीः—

स शक्रो ब्रह्मचारी च त्वत्तश्चैवोपशिक्षितः ।
त्रैलोक्ये ते यदैश्वर्यं तेन तत्ते हृतं महत् ॥ ५९॥

शीलेन हि त्रयो लोकास् त्वया धर्मज्ञ निर्जिताः ।
तद्विज्ञाय महेन्द्रेण तव शीलं हृतं प्रभो ॥ ६०॥

धर्मस्सत्यं तथा वृत्तं बलं चैव तथाऽप्यहम् ।

---

1. अ-क—अर्धद्वयं नास्ति

शीलमूला महाराज तथा नास्त्यत्र संशयः ॥ ६१॥

भीष्मः—

एवमुक्त्वा गता श्रीस्तु ते च सर्वे युधिष्ठिर ।
दुर्योधनस्तु पितरं भूय एवाब्रवीत् तदा ॥ ६२॥

दुर्योधनः—

शीलं समधिगच्छामि वेत्तुं कौरवनन्दन ।
प्राप्यते च यथा शीलं तं चोपायं ब्रवीहि मे ॥ ६३॥

धृतराष्ट्रः—

सोपायः पूर्वमुद्दिष्टः प्रह्लादेन महात्मना ।
सङ्क्षेपतस्तु शीलस्य शृणु प्राप्तिं जनाधिप ॥ ६४॥

अद्रोहस्सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च शीलमेतत् प्रशस्यते ॥ ६५॥

यदन्येषां हितं न स्याद् आत्मनः कर्म पौरुषम् ।
अपत्रपेत वा येन न तत् कुर्यात् कथञ्चन ॥ ६६॥

कर्ता कर्म तथा कुर्याद् येन श्लाघ्येत संसदि ।
शीलं समासेनैतत् ते कथितं कुरुसत्तम ॥ ६७॥

यद्यप्यशीला नृपते प्राप्नुवन्ति श्रियं क्वचित् ।
न भुञ्जते चिरं तात समूलाश्च पतन्ति ते ॥ ६८॥

एतद्विदित्वा तत्त्वेन शीलवान् भव पुत्रक ।

यदीच्छसि श्रियं तात सुविशिष्टां युधिष्ठिरात् ॥ ६९॥
अधिकामपि राजेन्द्र ततस्त्वं शीलवान् भव ॥ ७०

भीष्मः—

एतत् कथितवान् पुत्रे धृतराष्ट्रो महीपतिः ।
एतत् कुरुष्व राजेन्द्र ततः प्राप्स्यसि तत्फलम् ॥ ७१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥
॥ ८६ ॥ राजधर्मपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥
[ अस्मिन्नध्याये ७१ श्लोकाः ]

## ॥ षोडशाधिकशततमोऽध्यायः ॥

आशानिरूपणं प्रार्थितेन भीष्मेण तदुपोद्घाततया ऋषभसुमित्रचरित्रकीर्तनारम्भः ॥ १ ॥ मृगयासक्तेन सुमित्रेण निजशरानुवेधे शरेण सह वनं प्रविष्टं मृगं प्रत्यनुधावनम् ॥ २ ॥

युधिष्ठिरः—

शीलं प्रधानं पुरुषे कथितं ते पितामह ।
कथमाशा समुत्पन्ना का च सा प्रब्रवीहि मे ॥ १

संशयस्तु महानेष [1]समुत्पन्नः पितामह ।
छेत्ता च तस्य नान्योऽस्ति त्वत्तः परपुरञ्जय ॥ २

1. ख—समोत्पन्नः

पितामहाशा महती ममासीत् तु सुयोधने ।
प्राप्ते युद्धे तु यद्युक्तं तत् कर्ताऽयमिति प्रभो ॥ ३

सर्वस्याशा सुमहती पुरुषस्योपजायते ।
तस्यां विहन्यमानायां दुःखं मृत्युर्न संशयः ॥ ४

सोऽहं हताशो दुर्बुद्धिः कृतस्तेन दुरात्मना ।
धार्तराष्ट्रेण राजेन्द्र पश्य मन्दात्मतां मम ॥ ५

आशां बृहत्तरीं मन्ये पर्वतादपि सद्रुमात् ।
आकाशादपि वा राजन् अप्रमेयाऽथ वा पुनः ॥ ६

एषा चैव कुरुश्रेष्ठ दुर्विचिन्त्या सुदुर्लभा ।
दुर्लभत्वाच्च पश्यामि किमन्यद्दुर्लभं ततः ॥ ७

भीष्मः—

अत्र ते वर्तयिष्यामि युधिष्ठिर निबोध मे ।
इतिहासं सुमित्रस्य निर्वृत्तमृषभस्य च ॥ ८

सुमित्रो नाम राजर्षिर् हैहयो मृगयां गतः ।
ससार च मृगं विद्ध्वा बाणेनानतपर्वणा ॥ ९

स मृगो बाणमादाय ययावतिपराक्रमः ।
स च राजा बली तूर्णं ससार मृगमन्तिकात् ॥ १०

ततो निम्नं स्थलं चैव समृगोऽद्रवदाशुगः ।
मुहूर्तमिव राजेन्द्र समेन स पथाऽगमत् ॥ ११

ततस्स राजा तारुण्याद् औरसेन बलेन च ।
[1]चचार बाणासनभृत् सखड्गो हंसवत् तदा ॥ १२

ततो [2]नदान् नदीश्चैव पल्वलानि वनानि च ।
अतिक्रम्याभ्यतिक्रम्य ससारैव वनेचरः ॥ १३

[3]स तु तावन्मृगो राजन्नासाद्यासाद्य पार्थिवम् ।
पुनरभ्येति जवनो जवेन महता ततः ॥ १४

स तस्य बाणैर्बहुभिस् समभ्यस्तो वनेचरः ।
प्रक्रीडन्निव राजेन्द्र पुनरभ्येति चान्तिकम् ॥ १५

तस्य मर्मच्छिदं घोरं सुमित्रोऽमित्रकर्शनः ।
समाधाय शरं श्रेष्ठं कार्मुकान्निरवासयत् ॥ १६

पुनश्च जवमास्थाय जवनो मृगयूथपः ।
तस्य बाणपथं त्यक्त्वा तस्थिवान् प्रहसन्निव ॥ १७

तस्मिन्निपतिते बाणे भूमौ प्रज्वलिते तदा ।
प्रविवेश मृगोऽरण्यं मृगं राजाऽप्यभिद्रवन् ॥ १८

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥
॥ ८६ ॥ राजधर्मपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥
[अस्मिन्नध्याये १८ श्लोकाः]

---

1. ख-घ—ससार 2. घ—ऽन्वगाश्च
3. ख—अर्धेसर्यं नास्ति

## ॥ सप्तदशाधिकशततमोऽध्यायः ॥



तापसैः स्वाश्रममुपागतस्य सुमित्रस्य पूजनम् ॥ १ ॥ ततः सुमित्रेण तापसान् प्रति आशान्तरिक्षयोर्ज्यायस्त्वरं किमिति प्रश्नः ॥ २ ॥

---

भीष्मः—

प्रविश्य तु महारण्यं तापसानामथाश्रमम् ।
आससाद ततो राजा श्रान्तश्चोपाविशत् तदा ॥ १

तं कार्मुकधरं दृष्ट्वा श्रमार्तं क्षुधितं तदा ।
समेत्य ऋषयस्तस्मै चक्रुः पूजां यथाविधि ॥ २

स पूजामृषिभिर्दत्तां प्रतिगृह्य नराधिपः ।
अपृच्छत् तापसान् सर्वास् तपोवृद्धिमनुत्तमाम् ॥ ३

ते तस्य राज्ञो वचनं प्रतिगृह्य तपोधनाः ।
ऋषयो राजशार्दूलम् अपृच्छंस्तत् प्रयोजनम् ॥ ४

ऋषयः—

केन भद्र विनाऽर्थेन तपोवनमुपागतः ।
पदातिर्बद्धनिस्त्रिंशो धन्वी बाणी जनेश्वर ॥ ५

एतदिच्छाम विज्ञातुं कुतः प्राप्तोऽसि मानद ।
कस्मिन् कुले तु जातस्त्वं किन्नामा चासि ब्रूहि नः ॥ ६

भीष्मः—

ततस्स राजा सर्वेभ्यो द्विजेभ्यः पुरुषर्षभ ।

आचख्यौ तद्यथावृत्तं परिचर्यां च भारत ॥ ७

सुमित्रः—

हैहयानां कुले जातस् सुमित्रोऽमित्रकर्शनः ।
चरामि मृगयूथानि बाणैर्निघ्नन् सहस्रशः ॥ ८

बलेन महता ब्रह्मन् सामात्यस्सावरोधकः ।
मृगस्तु विद्धो बाणेन मया सरति शल्यवान् ॥ ९

तं द्रवन्तमनुप्राप्तो वनमेतद्यदृच्छया ।
भवत्सकाशं नष्टश्रीर् हताशश्श्रमकर्शितः ॥ १०

किं नु दुःखमतोऽन्यद्वै यदहं श्रमकर्शितः ।
भवतामाश्रमं प्राप्तो हताशो भ्रष्टलक्षणः ॥ ११

न राजलक्षणत्यागः पुनरस्य तपोधनाः ।
दुःखं करोति मे तीव्रं यदाऽऽशा विहता मम ॥ १२

हिमवान् वा महाशैलस् समुद्रो वा महोदधिः ।
महत्त्वान्नानुपद्येत रोदस्योरन्तरं यथा ॥ १३

आशायास्तपसि श्रेष्ठास् तथा नान्तमहं गतः ।
भवतां विदितं सर्वं सर्वज्ञा हि तपोधनाः ॥ १४

भवन्तस्सुमहाभागास् तस्मात् पृच्छामि संशयम् ॥ १४॥

आशावान् पुरुषो यस्स्याद् अन्तरिक्षमथापि वा ।
किं नु ज्यायस्तरं लोके महत्त्वे प्रतिभाति वः ॥ १५॥

एतदिच्छामि तत्त्वेन श्रोतुं किमपि दुर्लभम् ॥ १६

यदि गुह्यं न वो नित्यं मम ब्रूतेह मा चिरम् ।
न हि गुह्यतमं श्रोतुम् इच्छामि द्विजपुङ्गवाः ॥ १७

भवत्तपोविघातो वा येन स्याद्विरमे ततः ।
यदि वाऽस्ति कथायोगो योऽयं प्रश्नो मयेरितः ॥ १८

एतत् कारणसामग्र्यं श्रोतुमिच्छामि तत्त्वतः ।
भवन्तो हि तपोनित्या ब्रूयुरेतत् समाहिताः ॥ १९

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥
॥ ८६ ॥ राजधर्मपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥
[ अस्मिन्नध्याये १९ श्लोकाः ]

---

## ॥ अष्टादशाधिकशततमोऽध्यायः ॥

बदरिकाश्रमं गतस्य ऋषभस्य तनुनामकेन महर्षिणा सह संवादः ॥ १ ॥ वने नष्टपुत्रान्वेषणवशात्तत्रोपागतेन वीरद्युम्नेन राज्ञा तनुं प्रति आशाया ज्यायः किमिति प्रश्नः ॥ २ ॥ कृशेन मुनिना वीरद्युम्ननृपं प्रति दुर्लभवस्तुनः कृशतराशायाश्च प्रतिपादनम् ॥ ३ ॥

---

भीष्मः—

ततस्तेषां समेतानाम् ऋषीणामृषिसत्तमः ।
ऋषभो [1]हेहयाधीशं स्मयन्नेवमथाब्रवीत् ॥ १

---

1. ख—नाम विप्रर्षिः स्मयन्निदमथाब्रवीत्

पुराऽहं राजशार्दूल तीर्थान्यनुचरन् प्रभो ।
समासादितवान् दिव्यं नरनारायणाश्रमम् ॥ २
यत्र सा बदरी रम्या सरो वैहायसं तथा ।
यत्र चाश्वशिरा राजन् वेदान् पठति शाश्वतान् ॥ ३
तस्मिन् सरसि कृत्वाऽहं विधिवत्तर्पणं पुरा ।
पितॄणां देवतानां च तत्राश्रममियां तदा ॥ ४
रेमातेऽरजसौ यत्र नरनारायणावृषी ।
अदूरादाश्रमात् किञ्चिद् वासार्थमगमं ततः ॥ ५
तत्र चीराजिनधरं कृशमुच्चमतीव च ।
अद्राक्षमृषिमायान्तं तनुं नाम तपोनिधिम् ॥ ६
अन्यैर्नरैर्महाबाहो वपुषाऽप्रतिमं तदा ।
कृशता चापि राजर्षे न दृष्टा तादृशी मया ॥ ७
शरीरमपि राजेन्द्र तनु कानिष्ठिकासमम् ।
ग्रीवा बाहू तथा पादौ केशाश्चाद्भुतदर्शनाः ॥ ८
शिरः कायानुरूपं च कर्णौ नेत्रे तथैव च ।
तस्य वाक् चैव चेष्टा च सामान्ये राजसत्तम ॥ ९
दृष्ट्वाऽहं तं कृशं विप्रं भीतः परमदुर्मनाः ।
पादौ तस्याभिवाद्याथ स्थितः प्राञ्जलिरग्रतः ॥ १०
निवेद्य नाम गोत्रं च तथा कार्यं नरर्षभ ।

प्रदिष्टे चासने तेन शनैरहमुपाविशम् ॥ ११

ततस्स कथयामास धर्मार्थसहिताः कथाः ।
ऋषिमध्ये महाराज तत्र धर्मभृतां वरः ॥ १२

तस्मिंस्तु कथयत्येव राजा राजीवलोचनः ।
उपायाज्जवनैरश्वैस् सबलस्सावरोधनः ॥ १३

स्मरन् पुत्रमरण्येषु नष्टं परमदुर्मनाः ।
भूरिद्युम्नपिता धीमान् नृपश्रेष्ठो महायशाः ॥ १४

इह द्रक्ष्यामि तं पुत्रं द्रक्ष्यामीहेति भारत ।
एवमाशाकृशो राजा चरन् वनमिदं पुरा ॥ १५

दुर्लभस्स मया द्रष्टुं भूय एव च धार्मिकः ।
एकः पुत्रो महारण्ये नष्ट इत्यसकृत् तदा ॥ १६

न स शक्यो मया द्रष्टुम् आशा च महती मम ।
तया परीतगात्रोऽहं मुमूर्षुर्नात्र संशयः ॥ १७

एतच्छ्रुत्वा तु भगवांस् तनुर्मुनिवरोत्तमः ।
अवाक्शिरा ध्यानपरो मुहूर्तमवतस्थिवान् ॥ १८

तमनुध्यातमालक्ष्य राजा परमदुर्मनाः ।
उवाच वाक्यं दीनात्मा मन्दमन्दमिवासकृत् ॥ १९

राजा—

दुर्लभं किं नु विप्रर्षे आशायाश्चैव किं महत् ।

ब्रवीतु भगवानेतद् यदि गुह्यं न चेत् तदा ॥ २०

तनुः—

महर्षिर्भगवांस्तात पूर्वमासीद्विमानितः ।
बालिशां बुद्धिमास्थाय मन्दभाग्यतयाऽऽत्मनः ॥ २१

अर्थयन् कलशं राजन् काञ्चनं वल्कलानि च ।
निर्विण्णस्स तु राजर्षिर् निराशस्समपद्यत ॥ २२

ऋषभः—

एवमुक्तोऽभिवाद्याथ तमृषिं लोकसत्कृतम् ।
श्रान्तो न्यषीदद्धर्मात्मा यथा त्वं नरसत्तम ॥ २३

अर्घ्यं ततस्समानीय पाद्यं चैव महायशाः ।
आरण्यकेन विधिना राज्ञे सर्वं न्यवेदयत् ॥ २४

ततस्तमृषयस्सर्वे परिवार्य नरर्षभम् ।
उपाविशन् पुरस्कृत्य सप्तर्षय इव ध्रुवम् ॥ २५

अपृच्छंश्चैव तं तत्र राजानमपराजितम् ।
प्रयोजनमिदं सर्वम् आश्रमस्य प्रवेशने ॥* २६

राजा—

वीर्यद्युम्न इति ख्यातो राजाऽहं दिक्षु विश्रुतः ।
भूरिद्युम्नं सुतं नष्टम् अन्वेष्टुं वनमागतः ॥ २७

* सर्वेषु कोशेषु अत्रैवाध्यायसमाप्तिर्दृश्यते

एकः पुत्रस्स विप्राग्र्य बाल एव च सोऽनघः ।
न दृश्यते वने ह्यस्मिंस् तमन्वेष्टुं चराम्यहम् ॥ २८

ऋषभः—

इत्युक्ते तेन वचने राज्ञा मुनिरधोमुखः ।
तूष्णीमेवाभवत्तत्र न च प्रत्युक्तवान् नृपम् ॥ २९

स हि तेन पुरा विप्रो राज्ञा नात्यर्थमानितः ।
आशाकृशश्च राजेन्द्र तपो दीर्घं समास्थितः ॥ ३०

प्रतिग्रहमहं राज्ञां न करिष्ये कथञ्चन ।
अन्येषां चैव वर्णानाम् इति कृत्वा धियं तदा ॥ ३१

आशा हि पुरुषं बालम् आलापयति तस्थुषी ।
तामहं व्यपनेष्यामि इति कृत्वा व्यवस्थितः ॥ ३२

राजा—

आशायाः किं च वृत्तं वै किञ्चेह भुवि दुर्लभम् ।
ब्रवीतु भगवानेतत् त्वं हि धर्मार्थदर्शिवान् ॥ ३३

ऋषभः—

ततस्संस्मृत्य तत् सर्वं स्मारयिष्यन्निवाब्रवीत् ।
राजानं भगवान् विप्रस् तपःकृशतनुस्तदा ॥ ३४

ऋषिः—

कृशत्वेन तदा राजन्नाशायास्सदृशी न च ।

तस्या वै दुर्लभत्वाच्च पार्थिवः प्रार्थितो मया ॥ ३५

राजा—

कृशाकृशे मया ब्रह्मन् गृहीते वचनात्तव ।
दुर्लभत्वं च तस्यैव वेदवाक्यमिवाद्विजे ॥ ३६

संशयस्तु महाप्राज्ञ सञ्जातो हृदये मम ।
तन्मे सत्तम तत्त्वेन वक्तुमर्हसि पृच्छतः ॥ ३७

त्वत्तः कृशतरं किं नु ब्रवीतु भगवानिदम् ।
यदि गुह्यं न ते विप्र लोके किञ्चैव दुर्लभम् ॥ ३८

ऋषिः—

दुर्लभोऽप्यथ वा नास्ति योऽर्थी धृतिमवाप्नुयात् ।
सुदुर्लभतरस्तात योऽर्थिनं नावमन्यते ॥ ३९

संश्रुत्य नोपक्रियते परं शक्त्या यथार्थतः ।
भक्त्या यस्सर्वभूतेपु साऽऽशा कृशतरी मया ॥ ४०

नृशंसेषु च या सक्ता कृतघ्नेष्वलसेपु च ।
अपकारिषु या सक्ता साऽऽशा कृशतरी मता ॥ ४१

एकपुत्रः पिता पुत्रे नष्टे वा प्रोषितेऽपि वा ।
प्रवृत्तिं यो न जानाति साऽऽशा कृशतरी [1]मता ॥ ४२

प्रदानकाङ्क्षिणीनां च कन्यानां वयसि स्थिते ।

1. अ-क-ख—मया

श्रुत्वा कथास्तथा तास्तास् साऽऽशा कृशतरी मता ॥ ४३

[1]प्रसवे चैव नारीणां पुत्राणां [2]पुत्रकारिता ।
तथा नरेन्द्र धनिनां साऽऽशा कृशतरी मता ॥ ४४

ऋषभः—

एतच्छ्रुत्वा ततो राजन् स राजा सावरोधनः ।
संस्पृश्य शिरसा पादौ निपपात द्विजर्षभे ॥ ४५

राजा—

प्रसादये त्वां भगवन् पुत्रेणेच्छामि सङ्गमम् ।
वृणीष्व च वरान् विप्र यानिच्छसि यथाविधि ॥ ४६

ऋषभः—

अब्रवीच्चैव तद्वाक्यं राजा राजीवलोचनः ॥ ४६॥

राजा—

सत्यमेतद्यथा विप्र यथोक्तं नान्यथा मृषा ॥ ४७

ऋषभः—

ततः प्रहस्य भगवांस् ततो धर्मभृतां वरः ।
[3]पुत्रमस्यानयत् क्षिप्रं तपसा च श्रुतेन च ॥ ४८

1. घ—अर्धद्वयं नास्ति
2. क-ख—वृद्धि
3. ख—अर्धत्रयं नास्ति

तं समानाय्य पुत्रं तु ततो ऽभ्य च भूपतिः ।
आत्मानं दर्शयामास धर्मं धर्मभृतां वरः ॥ ४९

स दर्शयित्वा चात्मानं दिव्यमद्भुतदर्शनम् ।
विपाप्मा विगतक्रोधश् चचार वनमन्तिकात् ॥ ५०

एतद्दृष्टं मया राजंस् त्वत्तश्च वचनं श्रुतम् ।
आशामपानय त्वं च ततः कृशतरीमिमाम् ॥ ५१

भीष्मः—

स तथोक्तस्तदा राजन्नृपभेण महात्मना ।
सुमित्रोऽपानयत् क्षिप्रम् आशां कृशतरीं तदा ॥ ५२

एवं त्वमपि कौन्तेय श्रुत्वा वाणीमिमां मम ।
स्थिरो भव महाराज हिमवानिव निश्चलः ॥ ५३

त्वं हि श्रुत्वा च दृष्ट्वा च कृच्छ्रेष्वर्थेषु तेष्विह ।
श्रुत्वा मम महाराज न सन्तप्तुमिहार्हसि ॥ ५४

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि अष्टाविंशत्यधिकशततमोऽध्यायः ॥ ११८ ॥
॥ ८६ ॥ राजधर्मपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥
[अस्मिन्नध्याये ५४ श्लोकाः]

## ॥ एकोनविंशत्यधिकशततमोऽध्यायः ॥



यमेन गौतमं प्रति मातापित्रोः परिचर्यायास्तदृणापनोदनोपायत्व-कथनम् ॥



युधिष्ठिरः—

नामृतस्येव पर्याप्तिर्[1]यथाऽस्ति ब्रुवति त्वयि ।
तस्मात् कथय भूयोऽपि त्वं ममेह पितामह ॥ १

भीष्मः—

अत्राप्युदाहरन्तीमम् इतिहासं पुरातनम् ।
गौतमस्य च संवादं यमस्य च महात्मनः ॥ २

पारियात्रं गिरिं प्राप्य गौतमस्याश्रमो महान् ।
वसते गौतमो यत्र तपसा दग्धकिल्बिषः ॥ ३

षष्टिं वर्षसहस्राणि सोऽतप्यद्गौतमस्तपः ।
तमुग्रतपसा युक्तं भावितं तपसा मुनिम् ॥ ४

उपयातो नरव्याघ्र लोकपालो यमस्तदा ।
तमपश्यत् सुतपसं स मुनिर्गौतमस्तदा ॥ ५

स तं विदित्वा ब्रह्मर्षिर् यममागतमोजसा ।
प्राञ्जलिः प्रणतो भूत्वा उपसृप्तस्तपोधनः ॥ ६

1. ख—ममास्ति

तं धर्मराजो दृष्ट्वैव नमस्कृत्य द्विजोत्तमम् ।
न्यमन्त्रयत धर्मेण क्रियतां किमिति ब्रुवन् ॥ ७

गौतमः—

मातापितृभ्यामानृण्यं गत्वा सुखमवाप्नुयात् ।
कथं च लोकानाप्नोति पुरुषो दुर्लभाञ् शुभान् ॥ ८

यमः—

तपश्शौचवता नित्यं सत्यधर्मरतेन च ।
मातापित्रोरहरहः पूजनं कार्यमञ्जसा ॥ ९

अश्वमेधश्च यष्टव्यो बहुभिस्स्वाप्तदक्षिणैः ।
तेन लोकानवाप्नोति पुरुषोऽद्भुतदर्शनान् ॥ १०

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥
॥ ८६ ॥ राजधर्मपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥
[ अस्मिन्नध्याये १० श्लोकाः ]

## ॥ विंशत्यधिकशततमोऽध्यायः ॥

भीष्मेण युधिष्ठिरं प्रति राज्ञा ब्रह्मस्ववर्जं आपदि प्रजापीडनेनापि कोशवृद्धेरवश्यं कर्तव्यत्वोक्तिः ॥

युधिष्ठिरः—

मित्रैः प्रहीयमानस्य बह्वमित्रस्य का गतिः ।
राज्ञस्सङ्क्षीणकोशस्य बलहीनस्य भारत ॥ १

दुष्टामात्यसहायस्य श्रुतमन्त्रस्य सर्वशः ।
राज्यात् प्रच्यवमानस्य गतिमन्यामपश्यतः ॥ २

परचक्राभियातस्य दुर्बलस्य बलीयसा ।
असंविहितराष्ट्रस्य देशकालावजानतः ॥ ३

अप्राप्यं च भवेत् सान्त्वं भेदो वाऽप्यतिपीडनात् ।
जीवितं चार्थहेतोर्वा तत्र किं सुकृतं भवेत् ॥ ४

भीष्मः—

गुह्यं मा धर्ममप्राक्षीर् अतीव भरतर्षभ ।
प्रवक्तुं नोत्सहे पृष्टो धर्ममेतं युधिष्ठिर ॥ ५

धर्मो ह्यणीयान् वचनाद् बुद्धेश्च भरतर्षभ ।
[1]श्रुत्वौपम्यं सदाचारैस् साधुर्भवति स क्वचित् ॥ ६

1. ख—श्रुत्वा वाक्यं

कर्मणा बुद्धिपूर्वेण भवत्याढ्यो न वा पुनः ।
तादृशोऽयमनुप्रश्नस् तद्ध्यायस्व स्वया धिया ॥ ७

उपायं धर्मबहुलं यात्रार्थं शृणु भारत ।
नाहमेतादृशे धर्मे बुभूषे धर्मकारणात् ॥ ८

दुःखादान इव ह्येष स्यात् तु पश्चात् क्षमो मम ।
अनुगम्य गतीनां हि सर्वासामेव निश्चयम् ॥ ९

यथा यथा हि पुरुषो नित्यं शास्त्रमवेक्षते ।
तथा तथा विजानाति विज्ञानं चास्य रोचते ॥ १०

अविज्ञानादयोगश्च पुरुषस्योपजायते ।
अविज्ञानादयोगो हि योगे भूतिमुखं परम् ॥ ११

अशङ्कमानो वचनम् अनसूयन्निदं शृणु ।
राज्ञः कोशक्षयादेव जायते बलसङ्क्षयः ॥ १२

कोशं सञ्जनयेद्राजा नित्यमेभ्यो यथाबलम् ।
कालं प्राप्यानुगृह्णीयाद् एष धर्मोऽत्र साम्प्रतम् ॥ १३

उपायधर्मं प्राप्यैनं पूर्वैराचरितं जनैः ।
अन्यो धर्मस्समर्थानाम् आपत्स्वन्यश्च भारत ॥ १४

प्रकार्ये प्रोच्यते धर्मो वृत्तिर्धर्मे गरीयसी ।
धर्मं प्राप्य यथान्यायं अबलीयान् न निन्दति ॥ १५

तस्माद्धर्मस्योपचितिर् एकान्तेन न विद्यते ।

तस्मादापद्यधर्मोऽपि श्रूयते धर्मलक्षणः ॥ १६

अधर्मो जायते यस्मिन्निति वै कवयो विदुः ।
अनन्तरं क्षत्रियस्य तत्र किं विचिकित्ससे ॥ १७

यथाऽस्य धर्मो न ग्लायेन्नेयाच्छत्रुवशं यथा ।
तत् कर्तव्यमिहेत्याहुर् नात्मानमवसादयेत् ॥ १८

स स्वात्मनैव धर्मस्य न परस्य न चात्मनः ।
सर्वोपायैरुज्जिहीर्षेद् आत्मानमिति निश्चयः ॥ १९

तत्र धर्मविदस्तात निश्चयो धर्मनैपुणैः ।
[1]उद्यमाज्जीवनं क्षात्रे बाहुवीर्यादिति श्रुतिः ॥ २०

क्षत्रियो वृत्तिसंरोधे कस्मान्नादातुमर्हति ।
अन्यत्र तापसस्वाच्च श्रोत्रियस्वाच्च भारत ॥ २१

तथा च ब्राह्मणस्सीदन्नयाज्यमपि याजयेत् ।
अभोज्यमपि चाश्नीयात् तथैतन्नात्र संशयः ॥ २२

पीडितस्य किमद्वारम् उत्पथेनार्दितस्य च ।
अद्वारतः प्रद्रवति यदा भवति पीडितः ॥ २३

तस्य कोशबलग्लान्यां सर्वलोकपराभवः ।
भैक्षचर्या न विहिता न च विट्शूद्रजीविका ॥ २४

स्वधर्मानन्तरा वृत्तिर् याऽन्यामनुपजीवतः ।

---

1. ख—उद्यमं जीवनं क्षत्रे

जहतः प्रथमं कल्पम् अनुकल्पेन जीवनम् ।।

आपद्गतेन धर्माणाम् अन्यायेनोपजीवनम् ।
अपि ह्येतद्ब्राह्मणेषु दृष्टं वृत्तिपरिक्षये ।।

क्षत्रिये संशयः कस्माद् इत्येतन्निश्चितं सदा ।।
आददीत विशिष्टेभ्यो नावसीदेत् कथञ्चन ।।
आर्तानां रक्षितारं च प्रजानां क्षत्रियं विदुः ।
तस्मात् संरक्षता कार्यम् आदानं क्षत्रबन्धुना ।।
अन्यत्रापि विहिंसाया वृत्तिर्नेहास्ति कस्यचित् ।।
अप्यरण्यसमुत्थस्य चैकस्य चरतो मुनेः ।
न शङ्खलिखितां वृत्तिं शक्यमास्थाय जीवितुम् ।।
विशेषतः कुरुश्रेष्ठ प्रजापालनमीप्सता ।
[1]परद्रव्यस्य हरणं राज्ञा राष्ट्रेण चापदि ।।

नित्यमेव हि कर्तव्यम् एष धर्मस्सनातनः ।।
राजा राष्ट्रं यथा यावद् द्रव्यौघैः परिरक्षति ।
राष्ट्रेण राजा नित्यं च परिरक्ष्यस्तथा भवेत् ।।
कोशं दण्डं बलं मित्रं यदन्यदपि सञ्चितम् ।
न कुर्वीतान्तरं राजा राष्ट्रे परिगते क्षुधा ।।
बीजं भक्तेन सन्तार्यम् इति धर्मविदो विदुः ।

---

1. ख—परस्पराभिहरणं

अत्रैतच्छम्बरस्याहुर् महामायस्य दर्शनम् ॥ ३४

धिक् तस्य जीवितं राज्ञो राष्ट्रं यस्यावसीदति ।
अवृत्त्या तन्मनुष्योऽपि यो वेदौशनसं वचः ॥ ३५

राज्ञः कोशबलं मूलं कोशमूलं पुनर्बलम् ।
तन्मूलं सर्वधर्माणां धर्ममूलाः [1]प्रजा ध्रुवम् ॥ ३६

नान्यानपीडयित्वेह कोशश्शक्यः कुतो बलम् ।
तदर्थं पीडयित्वा च न दोषं प्राप्तुमर्हति ॥ ३७

[2]अकार्यमपि कार्यार्थं क्रियते यत्र कर्मसु ।
एतस्मिन् कारणे राजा न दोषं प्राप्तुमर्हति ॥ ३८

अर्थार्थमन्यद्भवति विपरीतमथापरम् ।
अनर्थार्थमथाप्यन्यत् तत्सर्वं ह्यर्थकारणम् ॥ ३९

एवं बुद्ध्या सम्प्रपश्येन्मेधावी कार्य[3]दर्शनम् ॥ ३९॥

यज्ञार्थमन्यद्भवति यज्ञोऽन्यार्थस्तथा परः ।
यज्ञस्यान्यार्थमेवान्यत् तत् सर्वं [4]ह्यर्थसाधकम् ॥ ४०॥

उपमामत्र वक्ष्यामि तत्त्वधर्मप्रकाशिनीम् ॥ ४१

यूपं छिन्दन्ति यज्ञार्थं तत्र ये परिपन्थिनः ।

---

1. ख—पुनः प्रजाः    2. अ-क-ब—अर्धद्वयं नास्ति
3. क—दर्शनः    4. ख—यज्ञ

द्रुमाः केचन सामन्ता ध्रुवं छिन्दन्ति तानपि ॥ ४२

ते चापि निपतन्तोऽन्यान् निघ्नन्त्यपि वनस्पतीन् ॥ ४२॥

एवं कोशस्य महतो ये नराः परिपन्थिनः ।
न तानहत्वा पश्यामि सिद्धिमत्र परन्तप ॥ ४३॥

धनेन जयते लोकम् इमं चामुं च भारत ।
सत्यं च धर्मवचनं यथा नास्त्यधनस्तथा ॥ ४४॥

सर्वोपायैराददीत धनं यज्ञप्रयोजनम् ।
न तुल्यदोषस्स्यादेवं कार्याकार्येषु भारत ॥ ४५॥

नोभौ सम्भवतो राजन् कथञ्चिदपि भारत ।
न ह्यरण्येषु पश्यामि धनवृद्धानहं क्वचित् ॥ ४६॥

यदिदं दृश्यते वित्तं पृथिव्यामिह किञ्चन ।
ममेदं स्यान्ममेदं स्याद् इति यन्मन्यते जनः ॥ ४७॥

न च राज्ञस्समो धर्मः कश्चिदस्ति कथञ्चन ।
धर्मस्संशब्दितो राज्ञाम् आपदर्थस्ततोऽन्यथा ॥ ४८॥

ज्ञानेन कर्मणा चान्ये [1]तपसा च तपस्विनः ।
बुद्ध्या दाक्ष्येण चैवान्ये चिन्वन्ति धनसञ्चयान् ॥ ४९॥

अधनं दुर्बलं प्राहुर् धनेन बलवान् भवेत् ।

---

1. ख—तपस्त्वन्ये

सर्वं [1]बलवतः प्राप्यं सर्वं तरति कोशवान् ॥ ५०॥
कोशो धर्मश्च कामश्च परलोकस्तथा ह्ययम् ॥ ५१

इति श्रीमहाभारते शतसहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥
॥ ८६ ॥ राजधर्मपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥
[अस्मिन्नध्याये ५१ श्लोकाः]

॥ राजधर्मपर्व समाप्तम् ॥

---

॥ शान्तिपर्वणि प्रथमसम्पुटे ५०५३॥ श्लोकाः ॥

---

अतः परं शान्तिपर्वणि आपद्धर्मपर्व भविष्यति ।

तस्यायमाद्यश्लोकः—

युधिष्ठिरः—

क्षीणस्य दीर्घसूत्रस्य सानुक्रोशस्य बन्धुषु ।
परिशङ्कितमुख्यस्य दुष्टमन्त्रस्य भारत ॥

---

1. घ—बलयतः

